*Presented to*

# Sri Poornapragna Vidhya Peetha

**BANGALORE**

*In respectful memory of*

**(Late) Sri. C. Srinivasa Rao,** M A, B L

**Advocate, Coimbatore**

**by**

his Son

**Sri C S. Krishnamurthi** B Sc, F C A

**Coimbatore**

॥ श्रीदिग्विजयरामो विजयतेतमाम् ॥



# ॥ न्यायसुधामण्डनम् ॥

( अद्वैततत्त्वसुधाखण्डनात्मकम् )



श्रीमत्परमहंसपरिव्राजकाचार्यत्वाद्यनेकगुणगणालङ्कृत-
श्रीमूलराम-वेदव्यास-देव-दिव्यपादपद्माराधक-
श्रीमद्वैष्णवद्वैतसिद्धान्तप्रतिष्ठापनाचार्य-
श्रीमज्जगद्गुरु-श्रीमन्मध्वाचार्य-
मूलसंस्थान-
**श्रीमदुत्तरादिमठाधीश-**
श्रीश्रीमत्सत्याभिज्ञतीर्थश्रीपादकरकमलसजात-
**श्री १०८ श्रीमत्सत्यप्रमोदतीर्थश्रीपादैः**
॥ विरचितम् ॥





श्रीमदानन्दतीर्थभगवत्पादाचार्याः ।

# प्रकाशकके दो शब्द

॥ श्रीदिग्विजयरामो विजयतेतमाम् ॥

भगवत्पूज्यपाद श्रीमन्मध्वाचार्य वेदान्ताकाशके जगमगाते सूर्य हैं। आपने ब्रह्मसूत्रोपर चार अपूर्व ग्रंथोकी रचना की है। उन ग्रंथोंमें "**अनुव्याख्यान**" अनमोल युक्तिरत्नोका महान् सागर है। अनुव्याख्यान का प्रत्येक शब्द प्रत्येक वाक्य भावगांभीर्य का अनोखा कोश है।

"**श्रीमन्न्यायसुधा**" उसी अनुव्याख्यानका टीका-ग्रथ है। वेदान्तसाम्राज्यके अद्वितीय चक्रवर्ती, पडितकुल सार्वभौम, श्रीजयतीर्थ-श्रीचरणजीने इस ग्रथराजका निर्माण किया है। यह "**न्यायसुधा**" उनके सर्वतोमूख पाडित्यका मूर्तस्वरूप है।

मूल श्लोकके भावोको अभिव्यक्त करनेवाला विचित्र शब्दचयन, प्रतिपक्षियोको उत्तर देनेकी अभिनय शैली, प्रत्येक दर्शनकी विश्वतोमुखी समालोचनाका नया ढग परकीय प्रबलकर्कशतर्कोको चकनाचूर करनेवाली तीक्ष्ण तर्कावली, स्वपक्षसमर्थन करनेवाला युक्तिव्यूह, गंभीर अर्थोंसे भरे वाक्यविन्यास, दर्शनके कठोर भावोंको भी व्यक्त करनेवाली कोमलकान्तपदावली, आदि गुणगणोंसे यह ग्रंथ वेदान्तग्रंथोकी अक्षय खान समझा जाता है।

इसीलिये सुधाके पठन पाठनमे ही अपने जीवनको धन्य समझनेवाले यादवार्यकी,

"**सुधा वा पाठनीया वसुधा वा पालनीया**" वाली उक्ति सार्थक एव युक्तियुक्त जँचती है।

"**श्रीमन्न्यायसुधा**" ग्रथ इसी पूर्वोक्त वैशिष्टचके कारण, वेदान्त-साम्राज्य प्रतिष्ठापक ग्रथोमे प्रारभसेही विपक्षियोकेलिये अभेद्य और अखण्ड बन बैठा है।

अद्वैतियोके बेजोड विद्वान् विद्यारण्य, अप्पयदीक्षित आदि इस ग्रन्थ को स्पर्शतक नही कर सके। फिर भी कुछ दिनोके पहले अद्वैत-पण्डित महामहोपाध्याय अनतकृष्ण शास्त्रीजीने इस अपूर्व ग्रन्थरत्न को

खण्डन करने की चेष्टा की है । उन की वह चेष्टा कितनी असफल एव अनुचित् बनी है यह बात पण्डितो की निगाहमे आनेकेलिये तनिक भी देर नही लगेगी ।

अनतकृष्णशास्त्री माध्वमतानुयायियोके चिरपरिचित है । प्रात. स्मरणीय, बहूग्रन्थनिर्माता, पण्डितकुलकल्पतरू, सर्वतत्रस्वतत्र, नैकपीठाधिपति कुलगुरू, श्रीसत्यध्यानतीर्थजीके साथ शास्त्रीजी का अनैको बार वादविवाद हो चुका है । यह कहना आवश्यक नही कि उन वादविवादोंमे विजयमाला किनके गलेमे शोभायमान रही ।

अनन्तकृष्णशास्त्रीने न्यायमुधा खण्डन करने के बहाने अद्वैततत्वसुधा लिखकर अपनी असफल चेष्टा तथा नाहक ज्यादतीका फिर एक बार अनुपम नमूना प्रस्तुत किया ह ।

अपने न्यायसुधाखण्डन ग्रन्थ को लेकर अनतकृष्णशास्त्री स्वकार्यप्रथितयश, विज्ञवेदान्तियोके मुकुटमणि, उत्तरादिमठाधीश श्री श्रीसत्यप्रमोदतीर्थ श्रीपादजीके सन्निधानमे आये थे । ग्रन्थको देखते ही श्रीस्वामीजीने शास्त्रीको वादकेलिए आव्हान दिया । शास्त्रीजीने वाद करनेकी अनिच्छा प्रकट की । इसीलिए सुधामण्डन ग्रन्थके रूप मे प्रकाशित किया जा रहा है ।

श्रीसत्यप्रमोदतीर्थ श्रीमच्चरण सत्सिद्धान्तकी प्रतिष्ठा के लिए आसेतु हिमाचल दो बार भ्रमण कर चुके है ।

काशी, काची, कुभकोणम्, रामेश्वर, तिरुपति, पूना, आदि स्थानोमे विद्वदग्रेसरोकी सभामे कईबार वादविवाद करने से उनके दिग्विजयका ढिढोरा पीटा गया है । आपका वादपटुत्व, सर्वङ्कष वैदुष्य किसी भी जटिल प्रश्नका झटसे उत्तर देनेकी विचित्र प्रतिभा, दिगत पडितोको भी निरुत्तर करने की स्वाभाविक कला, आदि गुण पडित पामरोसे भी विदित है ।

स्वामीजीने ' न्याय-सुधा-मडन ' का निर्माण कर अपने अद्वितीय पाडित्यसे वैष्णव समाजको भली भान्ति उपकृत किया है । स्वामी-

जीके महान् कार्यसे पुनश्च आपका जगद्गुरुत्व सुदृढ हो चुका है। श्रीचरणोमे शिष्योकी भक्ति चरम काष्ठातक पहूँच चुकी है। स्वामी जीने श्री सत्यध्यानतीर्थ स्वामीजीके उत्तराधिकारित्व के उत्तरदायित्वको मजलता पूर्वक निभाया है। विश्वविश्रुत श्री सत्यध्यानतीर्थ स्वामीजीकी पवित्र एव अखण्ड परपराको कायम रखकर विश्ववद्य बन चुके है। माध्व समाज स्वामीजी के दिव्य उपकारसे कभी उऋण नही हो सकता। इस ग्रथका मुद्रण एव प्रकाशन करनेका महान सौभाग्य मुझे मिला इसलिये मै स्वामीजीके दिव्यचरणोमे शिरसाष्टागप्रणति पूर्वक अपनी हार्दिक कृतज्ञता प्रगट करता हूँ।

ग्रथके प्रूफ निरीक्षण के समय पडित प्रकाडो के सत्सगका अपूर्व लाभ मुझे मिला उन पडितो को भी मै साष्टाग प्रणामपूर्वक धन्यवाद अर्पण करता हूँ।

५११ बुधवार
पुना २.

**मध्वराज व्यकटेश शिंगरे**

**विशेष सूचना—**

सोत्कठवैष्णवसमाजप्रार्थनानुरोधसजातमहात्वरावशात्, नैकविधकार्यभारजनितमनोव्यासङ्गवता प्रूफ --निरीक्षकपण्डितानामनवधानवशात्, सस्कृतानभिज्ञाक्षरयोजकप्रमादशीलतावशात्, यस्मात् कस्मात् अन्यस्मात् कारणाच्च, शतशः मुद्रादोषा सभवेयुरेवेत्यभ्युपगम्यते। तथापि ते गुणैकगृह्यैः दोषज्ञैरवश्यं ससूचनीया इति साञ्जलिबन्ध प्रार्थ्यंते। सूचनानुसारेण शुद्धिपत्रिका अद्यतनाया अपि विस्तीर्णा द्वितीयावृत्तिसमये प्रकाशयिष्यते।

**मध्वनवमी**
शके १८८२

**मध्वराज व्यंकटेश शिंगरे.**



॥ ॐ ॥

# प्रास्ताविकम्

यत्पदं वेदसंवेद्यं कटाक्षेणापि वीक्षितुम् ।
न क्षमन्ते विमतयस्तमुपासे श्रियःपतिम् ॥

कलत्रं कमला यस्य पुत्रः कमलसम्भवः ।
शिवाद्याः सेवकास्तस्मै नमो विश्वकुटुम्बिने ॥

महदिदं प्रमोदस्थानं यदद्य कमलासनाङ्कस्थशिवादिसुधाशनसेव्यस्य कमलासनपितुः विश्वकुटुम्बिनः कमलापतेः मूलरामस्य असीमकृपया श्रीमन्न्यायसुधामण्डनं सुधाशनेभ्यः भूसुरेभ्यः प्रदातुं लब्धावसराःस्म इति ।

अस्मिन् मेदिनीतले कृतावताराः श्रीमदानन्दतीर्थभगवत्पादाचार्याः बहून् भूरिभावगभीरान् ग्रन्थान् व्यरचन् । वैदिकसिद्धान्तं प्राचीचकासन् । सज्जनांश्च तमःपारावारादुदमज्जयन् । इत्यतिरोहितं सुपूतमतीनाम् । श्रीमदाचार्यविरचितं सर्वं ग्रन्थजातम्—

व्यासदेवहृदयातिवल्लभं वासुदेवमगणेयसद्गुणम् ।
साधयत्सकलदोषवर्जितं ज्ञानभक्तिदमनन्तसौख्यदम् ॥

उक्तमुक्तमभिधेयमुत्तमं वेदवाक्यमनुवादयन्मुहुः ।
व्यञ्जयत्स्मृतिवचोभिरञ्जसा तस्यचार्थमतियुक्तयुक्तिमत् ॥

बालसंघमपि बोधयद्भृशं दुर्निरूपवचनं च पण्डितैः ।
अप्रमेयहृदयं प्रसादवत् सौम्यकान्ति च विपक्षभीषणम् ॥

अस्तदूषणमवन्ध्यभाषणं लक्षितं सकललक्षणैः समम् ।
माननीयमपि नाकिनायकै रूपमन्यादिव धन्यमात्मनः ॥

इत्यादिश्लोकोपवर्णितमहामाहात्म्योपेतम् । अदसीयभाष्यव्याख्यानकारैः वादिदन्तीन्द्रभीमैः वेदान्तिसिंहैः विद्वत्कविकुलतिलकैः त्रिविक्रमपण्डिताचार्यैः तत्तादृग्गाम्भीर्यम्—

**कवीन्द्रैर्न समाप्यन्ते संगृह्यापि यतोऽनिशम् ।**
**न्यायरत्नानि भाष्याब्धेरस्य गाम्भीर्यमद्भुतम् ॥**

इत्यादिशब्दस्तोमेन प्रास्तावि । भाष्यादिगहनग्रन्थरचनानन्तरमपि **"ग्रन्थेभ्य एभ्योऽगाधेभ्यो युक्तयो नो दुरुद्धराः । मनोमान्द्यात्ततो ग्रन्थं व्यक्ततर्कततिं कुरु"** इति तेषामेव प्रार्थनानुसारेण श्रीमदाचार्याः अनुव्याख्यानमचीकरन् इति ज्ञायते । तथा चोक्तं नारायणपण्डिताचार्यैः—

**इत्यर्थितो व्यधान्मध्वः सोनुव्याख्यां सतां सुधाम् ।**
**दुर्वादिगर्वाद्रिपविं मायिध्वान्तरविद्युतिम् ॥ इति ।**

एतादृशानन्यादृशोदाराशयगाम्भीर्यगरिमादियुतस्य अनुव्याख्यानग्रन्थस्य टीका न्यायसुधाभिधा भावमधुरा श्रुतिमनोहरा विद्वत्प्रमोददा विलसत्पदकदम्बबन्धुरा प्रतिपादनपरिपाटीपाटवाटोपशालिनी प्रतिपक्षिपक्षक्षपणाक्षीणक्षुण्णनिरतिशयन्यायनदीष्णताशोभिनी नवनवोन्मेषिसौन्दर्यसौष्ठवोपेता वरीवृतीति । सैषा टीका दुर्वादिगर्वगिरिवज्रवचोविलासातिशयभासुरैः भाष्यकाराशयराशिसमास्वादनचातुरीचुञ्चुभिस्त्रिभुवनाविदिताश्चर्यचर्यैः जयतीर्थश्रीमच्चरणैः विद्वत्कुलचक्रवर्त्युपास्यचरणैः संख्यावत्सार्वभौमैः । तदनु सुधागाधाभिसन्धिचञ्चरीकैः नैकगभीरग्रन्थप्रणयनचणैः श्रीव्यासराज-वादिराजविजयीन्द्र-रघूत्तम-विद्याधीश-राघवेन्द्र-सत्यनाथ-सत्यप्रिय-सत्यधर्म-श्रीमत्पूज्यचरणप्रभृतिभिर्महानुभावैः विद्वत्कुलतिलकैः सुधागाधता महता वाग्वैभवेन आविर्भावयांबभूवे । अत्र अधस्तनपद्यानि मननीयानि भवन्ति ।

**चित्रैः पदैश्चगम्भीरैः वाक्यैर्मानैरखण्डितैः ।**
**गुरुभावं व्यञ्जयन्ती भाति श्रीजयतीर्थवाक् ॥**

श्रुतिक्षीराब्धिमामथ्य धीमन्दरमहीभृता ।
प्राप्ता न्यायसुधा येन तंजयीन्द्रमहं भजे ॥
सुधा वा पाठनीया वसुधा वा पालनीया ॥
प्रत्यक्षरं प्रतिपदमनेकाकूतगर्भिता ।
प्रतिभाति सुधाथापि ग्रन्थाल्पत्वाय नोच्यते ॥
धाटी श्रीजयतीर्थवर्यवचसां चेटीभवत्स्वर्धुनी ।
पाटीरानिलफुल्लमल्लिसुमनोवाटीलसद्वासना ॥
पेटी युक्तिमणिश्रियां सुमतिभिःकोटीरकैः श्लाघिता ।
सा टीका निचयात्मिका मम चिरादाटीकतां मानसे ॥
नववसुधालेखनतो बहुधान्यस्य जायते वृद्धिः ।
नववसुधालेखनतो बहुधान्यस्य जायते वृद्धिः ॥

तदेतस्य प्रथिमगारिमसुषुमादिगुणगणोपेतस्य ग्रन्थकुललामस्य सुधाग्रन्थस्य खण्डने न केनापि स्वव्यूहगेन परव्यूहगेन वा प्राच्येन पण्डितप्रकाराचार्येन विद्वच्चक्रवार्तिना यत्नः अकारि । यदुक्तं म. म.पं. अनन्तकृष्णशास्त्रिभिर्न्यायचन्द्रिकाभूमिकायां "न्यायचन्द्रिका न्यायसुधाविमर्शमेव बहुशः करोति" इति तत्तुच्छम् । न्यायचन्द्रिकायां न्यायसुधानामग्राहं शब्दतोऽर्थतो वा अनुवादः कुत्रापि नोपलभ्यते । बहुत्र न्यायसुधासिद्धान्तो रीत्यन्तरेण अनुमन्यते स्थाप्यते च । न्यायचन्द्रिकायां वैशेषिकमतखण्डनं विशेषतो दरीदृश्यते ।

एवं सत्यपि **महागजाः पलायन्ते मशकानां तु का कथा** ॥ इति न्यायविषयभूतैः महामहोपाध्यायैः प. अनन्तकृष्णशास्त्रिभि.अस्य ग्रन्थस्यखडनकरणे

विफलोद्यमः कतिपयमासेभ्य. पूर्वं व्यधायि । यत्सत्यम् अनादिकालतो

वृत्ताः समया हि प्रवाहतः ॥ इति ।

तथा च स्वसमीहितसिद्धान्तसाधने प्रतिपक्षनिराकरणे च पूर्वे सर्वे सैद्धान्तिकाः स्वस्वशेमुषीसरणिमवलम्ब्य सन्नह्यन्तो दृश्यन्ते । एषा वादप्रणाली

अवश्यं प्रोत्साहनीया । वादे वादे जायते तत्त्वबोध इति यदुक्तं तदनुमन्यामहे । परं ते सर्वे खण्डनोद्योगात् प्राक् खण्ड्यग्रन्थावगाहने मर्शं मर्शं भृशमुद्युज्यन्ते । सुधाशयास्वादने तत्प्रकटने च यावज्जीवं कृतभगीरथप्रयत्नाः पण्डितकुल-सार्वभौमाः सुधामहासागरतलस्पर्शं कर्तुं नापारयन्निति तेषामेव वाक्येभ्यो ज्ञायते ।

सत्स्वप्येवं शास्त्रिणः आसक्ताति अनवलोकितसुधाग्रन्थाः यथावत् अनधिगतसुधाशया अपि सुधाग्रन्थावलोकनसमनन्तरमेव बुद्धिचापल्येन कीर्ति-कामुकतापारवश्येन तद्वाचनेन सममेव तत्समीक्षारम्भं संरम्भेण अकार्षुरिति तल्लेखनादनुमीयते । अहो दुस्साहस शास्त्रिणाम् । अहो प्रमादोद्दामता परिणतवयसाम् ।

पं. अनन्तकृष्णशास्त्रिणो राजगोपालपुरीयमस्मन्मठं गते चैत्रमास्यागत्य स्वयं स्वप्रणीतम् "अद्वैततत्त्वसुधा" नामकं प्रबन्धं प्रादुः । तत्क्षण एवास्माभिः-पुस्तकमुद्घाट्य तत्र तत्र आक्षेपार्हांनंशानवलोक्य तद्विचारप्रस्तावार्थं पर्यनुयु-क्ताश्च नाहमिदानीं मौखिकवादविवादकरणमिच्छामीत्यवोचन । अतोऽस्माकं न्यायसुधामण्डनमवश्यकर्तव्यतामापन्नम् । तत्र श्री १०८ श्रीमत्सत्यप्रज्ञतीर्थश्री-चरणानां श्रीमत्सत्याभिज्ञतीर्थश्रीचरणानां च कृपया तेषामेव सविधे पूर्वमधीतानां श्रीमदानन्दतीर्थभगवत्पादप्रणीतमूलग्रन्थानां श्रीमज्जयतीर्थश्रीचरणविरचितटी-काग्रन्थानां श्रीमद्व्यासतीर्थ-श्रीमद्राघवेन्द्रतीर्थादिश्रीमत्सत्यध्यानतीर्थान्तैः प्रणी-तानां टिप्पण्यादिग्रन्थानां भूयः समवलोकनेन तत्रत्या एव युक्तीः संगृह्यास्मिन् ग्रन्थेऽस्माभिरुपनिबद्धाः न पुनः तन्निरपेक्षतया किमप्यस्माभिः अत्र अभि-नवविषयजातम् उपन्यस्तम् ।

ग्रन्थपरीक्षावद् ग्रन्थाभिधानपरीक्षापि क्वचित् क्रियते प्राचीनैः । तथा अद्वैततत्त्वसुधेति नामपरीक्षायामारब्धायाम् अद्वैततत्त्वसुधेति गुरुतरनामापेक्षया असुधेति लघुतरं नामैव समुचितमन्वर्थं चेति समधिगतमस्माभिः । यतः— अद्वैततत्त्वसुधेत्यत्र अद्वैतमेव तत्त्वम् अद्वैततत्त्वं तदेव सुधा इति व्युत्पत्तिं तु

नाद्वैतिनोऽपि स्वीकर्तुमर्हन्ति । शङ्कराचार्यैः "द्वैताद्वैतविवर्जिते सुखरसे" इत्यादिभिर्वाक्यैर्द्वितीयाभावरूपाद्वैतस्य निषिद्धत्वेन तस्य तद्विशिष्टस्य च तत्त्वरूपत्वासंभवात् । मधुसूदनसरस्वतीभिरद्वैतसिद्धौ "अद्वितीयवाक्ये द्वितीयाभावरूपद्वितीयनिषेधस्यैवोपपत्तेः" "अतात्त्विक एव वा निषेधोऽयम्" इति च कण्ठरवेणाद्वैतस्याऽतात्त्विकत्वस्यैवोक्तत्वात्, "अभावस्यासत्पदार्थत्वमेव गतिः" इति असुधाकारैरपि तस्यैवार्थस्य विशदीकरणाच्च । किन्तु वैदिकमततत्त्वविचारे वक्ष्यमाणदिशा द्वैतमेव तत्त्वं द्वैततत्त्वम्, द्वैततत्त्वमेव सुधा द्वैततत्त्वसुधा न द्वैततत्त्वसुधा अद्वैततत्त्वसुधा इति व्युत्पत्तिरेव वक्तव्या । "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" इति श्वेताश्वतरश्रुत्या पृथक्त्वरूपद्वैतविशिष्टपरमात्मज्ञानस्य मरणाभावरूपामृतत्वप्रयोजकत्वोक्त्या तादृशज्ञानविषयत्वेन पृथक्त्वरूपद्वैतस्य तत्त्वतरूपतायाः सुधाया इव मरणाभावप्रयोजकत्वेन सुधारूपत्वस्य च सिद्धेः ।

सुधेव सुधा इति विग्रहे मरणाभावप्रयोजकत्वाभिव्यङ्ग्यसुधाप्रतियोगिकसादृश्याश्रयग्रन्थविवक्षणे तु द्वैततत्त्वस्य सुधेत्येव विग्रहः । षष्ठ्याश्च ग्रन्थान्वयि प्रतिपादकत्वार्थकत्वं बोध्यम् । नञा च तद्विरुद्धं बोध्यते । सुधाविरुद्धत्वं च सुधाकार्यभूतामृतत्वविरोधिमरणहेतुत्वेन विवक्षितम् । तत्र असति बाधके निरुपपदशब्दानां स्वप्रतिपाद्यार्थान्तरावधिकापकर्षानाश्रयार्थबोधकत्वनियमेन मरणप्रागभावासमानकालीनमरणाभावप्रयोजकत्वेन द्वैततत्त्वसुधैव निरुपपदसुधाशब्देन प्रतिपाद्यते । सुधापदसमभिव्याहृतेन नञा हालाहलसदृशं मरणरूपमहानर्थसाधनं बोध्यते । तया च लघुभूतेन असुधेति नाम्ना अभिधेयस्य झटिति महानर्थहेतुताऽवगमेन अत्यन्तहेयताप्रतिपत्तिर्भवेत् इत्यभिप्रेत्यैवास्माभिरुत्तरत्राभिधेयपरीक्षायाम् अद्वैततत्त्वसुधाया असुधा इति नाम्ना क्वचित् क्वचिदुल्लेखः कृतः । तथा युक्तायुक्तचिन्तापरीक्षेति परीक्षालक्षणं प्रचक्षते प्राज्ञाः । परीक्षार्थमुपात्तायामसुधायां महता प्रयत्नेनान्वेषणे कृतेऽपि नैकोऽपि युक्तांश उपलब्धिगोचर-

तामयासीत् । अतोऽनिच्छतामप्यस्माकमद्वैततत्त्वसुधापरीक्षेति निर्देशपरित्यागेन अद्वैततत्त्वसुधाखण्डनामिति श्रुतिकटुरपि निर्देशः कर्तव्यतामापन्नः ।

अथेदानीं वाचकमनोऽवगाहाय कतिचन अयुक्ता अंशा अत्र प्रदर्श्यन्ते । तथा हि न्यायसुधाविमर्शरूपत्वेन स्वोत्प्रेक्षितन्यायचन्द्रिकाभूमिकायाम् असुधाकारैः —

"तत्र संदिग्धोपनिषद्वाक्यनिर्णायकत्वादुपनिषदपेक्षयाऽपि ब्रह्ममीमांसाशास्त्रमुत्तममितिकर्तव्यतात्वेऽपि ब्रह्ममीमांसायाः । ब्रह्ममीमांसाशास्त्रव्युत्पादितन्यायाननुगृह्णता वेदादयो न ब्रह्म ज्ञापयन्ति; तदनुगृह्णता एव तु तत् प्रमाणयन्ति इति, केवलायास्तस्याः परविद्यात्वाभावेऽपि तदनुग्रहं विना ब्रह्मणि वेदान्तानां प्रामाण्यस्यैवासंभवाद् ब्रह्मणि वेदान्तानां प्रामाण्य उपजीव्यं ब्रह्ममीमांसाशास्त्रम् इति दृष्टिभेदाद् ब्रह्ममीमांसाशास्त्रं सर्वोत्तमम् । तदितिकर्तव्यतात्वं हि निर्णयप्रतिबन्धकसंशयनिरसनमात्रेण," इति वाक्येन तथा न्यायसुधापरीक्षायां ११६ तमे पृष्ठे "परतत्त्वाक्षरस्वरूपपरोपनिषदर्थनिर्णायकतामात्रेणोत्तमशास्त्रत्वे त्वद्वैतिनोऽपि न विसंवदन्ते । परस्परोपकार्योपकारकभावेनोभय—प्रामाण्येऽपि" इति वाक्येन च ब्रह्ममीमांसाशास्त्रस्य निर्णायकत्वेन अनुग्राहकत्वेन, उपजीव्यत्वेन, उपकारकत्वेन, प्रतिबन्धकनिरासकत्वरूपेतिकर्तव्यतात्वेन च निर्णयानुग्राह्याद्यपेक्षया उत्तमत्वे अद्वैतिविसंवादाभावमभिधाय तदव्यवहितोत्तरेण "ब्रह्ममीमांसाया एवानुग्राहिकाया उत्तमशास्त्रत्वे तु विप्रतिपद्यन्ते" इति वाक्येन ब्रह्ममीमांसाया अनुग्राहकत्वप्रयुक्तोत्तमत्वे विप्रतिपत्तिः प्रदर्शिता । तथा च एकस्मिन्नेव काले एकस्मिन्नेव महावाक्ये एकेनैव प्रयोक्त्रा प्रयुक्ते एकस्यैव विषयस्य सम्मतत्वासम्मतत्वप्रतिपादकं वचनं स्वव्याहतवचनमेवेति निर्विवादम् । एवमेवासुधायाः परामर्शभागे ( मध्यभागे ) उपसंहारे च व्याहतवचनपूर्णत्वं सुज्ञेयम् । यद्यपि व्याहतभाषणमेव भूषणमिति मन्वानानां गुणदोषाभेददर्शिनां सर्वाद्वैतवादिनाम् उचितमेवैतत् । परं तदर्थेन वचनेन केषाञ्चिदास्तिकानां

निर्णायकत्वप्रयुक्तमुत्तमत्वम् अनुग्राहकत्वप्रयुक्तं चानुत्तमत्वमिति निर्णायकत्वानुग्राहकत्वयोः भिन्नत्वस्य विरुद्धत्वस्य च भ्रमेण उत्तमत्वानुत्तमत्ववचनयोर्व्याघाताभावभ्रमो माभूदिति अस्माभिः प्राचीनग्रन्थकारवचनोपन्यासपूर्वकं निर्णायकत्वम् अनुग्राहकत्वम्, उपजीव्यत्वम्, उपकारकत्वं,प्रतिबन्धकनिरासकत्वरूपमितिकर्तव्यतात्वं, स्वतन्त्रव्याख्यानत्वं, तदनतिभिन्नमङ्गत्वं, चेत्येते धर्मा नातिभिन्ना इत्येतत्तत्वं विशदीकरिष्यते ।

वेदाद्यपेक्षया ब्रह्ममीमासाशास्त्रस्यैव उत्तमत्व समर्थितम् उमर्जीआचार्यै सुधाटिप्पण्याम्, तथा हि–

" **विचार्येष्विति** " ननु भारतस्य वेदोत्तमत्वात् ब्रह्मसूत्रापेक्षयोत्तमत्व संभावितमिति चेत्, ब्रह्मसूत्राणामपि वेदाद्युत्तमत्वात् । न चाङ्गाङ्गिभावविरोध । ब्रह्मसूत्राणां वेदाङ्गत्वेऽपि तदुत्तमत्वाविरोधात् । श्रवणादीतिकर्तव्यतारूपस्यापि गुरुदेवताप्रसादादेरुत्तमत्वदर्शनात् । न च दर्शपूर्णमासादीतिकर्तव्यता रूपप्रयाजादिवदमुख्यत्वमेव किं न स्यादिति वाच्यम् । श्रवणमननयोर्मननस्योत्तमत्वेन ब्रह्मसूत्राणा मननशास्त्रत्वेनोत्तमत्वावश्यंभावात् । न चैवं जैमिन्यादिसूत्राणामपि वेदोत्तमत्वं स्यादिति वाच्यम् । तेषा ब्रह्मसूत्रार्थैकदेशव्याख्यानरूपत्वेनोत्तमत्वाभावात् । अन्यथा व्याख्यानाद् व्याख्येयग्रन्थानामनुत्तमत्वं स्यादित्यतिप्रसङ्गात् । न च ब्रह्मसूत्राणामपि वेदव्याख्यानरूपत्वेनायं न्यायः समान इति वाच्यम् व्याख्यानरूपत्वेऽपि स्वतन्त्रमननशास्त्रत्वेनेत्युक्तत्वात् । न च पौरुषेयत्वेनोत्तमत्वाभाव इति वाच्यम् । वेदापौरुषेयत्वस्य जपयज्ञाङ्गत्व–नियताध्ययनकत्वधर्मादिसिध्यादावन्यत्रोपयोगित्वेन तदुत्तमत्वानुपयोगित्वात् । तस्मात्सर्वनिर्णायकब्रह्मसूत्राणामेव सर्वशास्त्रोत्तमत्वमिति सक्षेपः ।

एव विट्ठलभट्टीयेऽपि—

" ननु आथर्वणभाष्ये ऋगादीनामेव परविद्याशब्दविषयत्वोक्ते तद्विरोध-इत्यत आह ॥ **ऋगाद्या इति । एतमेवेति** ॥ ब्रह्ममीमासाशास्त्रस्य परविद्यात्वरूपमेतमेवार्थमित्यर्थः । तदुपपादयति ॥ **ब्रह्ममीमांसेति** ॥ ननु तर्हि ऋगादीनामेव परविद्यात्वम् एतस्य तु तदनुग्राहकतयैवेति न केवलस्य परविद्यात्वमिति शङ्कते ॥ **तथापीति** ॥ वेदार्थनिर्णयाय प्रवृत्तस्यास्य शास्त्रस्य तन्निर्णीतिरूप-

प्रमाजनकताव्यतिरेकेण पृथक् प्रामाण्यासमवात् वेदार्थनिर्णयपुरस्सरं वेदाना पर-तत्त्वावेदकतासंपादनेन परविद्यात्वप्रापकत्वान्मुख्यमेवास्य परविद्यात्वम् । ऋगादीना तु एतदुपकृतत्वेनैव परविद्यात्वमित्याशयेन परिहरति ॥ मालाभीति ॥

॥ **विचार्येष्विति** ॥ एतच्छास्त्रविचार्येषु मध्ये भारतस्योत्तमत्वम् अस्य तु सर्वोत्तमत्वमिति भाव इति संप्रदायविदः ।

एव सुधाटिप्पण्या लघुरसरङ्गिन्यामपि—

" ननु ऋगादिशास्त्राणामपरविद्यात्वेनोक्तत्वेऽप्युपनिषदा परविद्यात्वं कि न स्यादित्यत आह । **ऋगादिग्रहणेनेति** । **गृहीतत्वादिति** । तत्तदुपनिषदां तत्तद्वे-दान्तर्गतत्वादिति भावः । अथवा । **एतेनेति** । ब्रह्ममीमांसाशास्त्रमेव परविद्या । तदन्यत्तन्निर्णेतव्यार्थं सर्वमपि शास्त्रमपरविद्येति सयुक्तिक व्यवस्थापनेनेत्यर्थः । तर्ह्युपनिषदा कुत्रान्तर्भाव इत्यतो निर्णेतव्यार्थत्वाविशेषादृगाद्यपरविद्यायामेवेत्याह । **ऋगादिग्रहणेनेति** । ऋगादिपदेनेत्यर्थ । ननु परिव्राजकानामपि ब्राह्मणपदेनैव गृहीतुं शक्यत्वेऽपि भिक्षुत्वाद्यवान्तरविशेषमात्रेण यथा ब्राह्मणाः समागताः परि-व्राजकाश्च समागता इति पृथग्ग्रहणं दृष्टं तथा उपनिषदामपि तत्तद्वेदान्तर्गतत्वेन वा निर्णेतव्यार्थत्वेन वा ऋगादिपदेनैव गृहीतुं शक्यत्वेऽपि वेदशिरस्त्वरूपावान्त-रविशेषमात्रेण । "**अथ परे**" ति पृथग्ग्रहणं कि न स्यादित्यत आह ।

**ब्राह्मणेति** ॥ अगतिका । गत्यन्तरविवर्जिता । गतिः । गमनिका । अस्मदुक्तदिशा गत्यन्तरे संभवति नेयं गतिर्वक्तव्येति भावः ॥ रामानुजव्याख्यानं पराकरोति तज्जन्यमिति उपनिषज्जन्यमित्यर्थः । परविद्येति । फलत्वेन परत्वस-भवादिति तदाशयः । इत्यपि व्याख्यातमित्यनुवर्तते । **अधिगतिकरणत्वेति** ॥ यया तदक्षरमधिगम्यते इत्युक्ताधिगतिकरणत्वेत्यर्थ । **अनुपपत्तेरिति** ॥ आत्मा-श्रयादितिभाव । ननु तज्जन्यं ज्ञानं परोक्षम् । तस्य मननादिद्वाराऽक्षरापरोक्षाधि-गतिसाधनत्वे का अनुपपत्तिरित्यतो व्याख्यातपरविद्यायामेवमाधिगतिकरणत्वोप-पादनं तदा स्याद्यदीद व्याख्यानमेव युज्येतेत्याशयेन दूषणान्तरमाह । **अनेकार्थतेति।** सकृदुक्तविद्याशब्दस्येति पूर्वोक्तं वर्तते । अत्रापि पूर्ववदपरविद्याबोधनकाले यथार्थज्ञा-नकरणत्वं प्रवृत्तिनिमित्तं परविद्याबोधनकाले तु ज्ञानत्व प्रवृत्तिनिमित्तमिति प्रवृ-त्तिनिमित्तनानात्वेनानेकार्थकल्पनापत्तेरित्यर्थः । परविद्याख्यया अस्य शास्त्रस्य

सर्वोत्तमप्रामाण्यासिद्धिं व्युत्पाद्य निगमयति । **अत इति** ।। दर्शितनियामकसमुदायादित्यर्थ । **अनया** ।। श्रौत्या । ननु विद्याशब्दो वेद्यते गृह्यते शिष्येण तत्त्वमनयेति व्युत्पत्त्या ग्रहणापरपर्यायवेदनाख्यशिष्यव्यापारसहकृतं वाक्यविशेषनिष्ठं तत्त्वज्ञानकरणत्वमाह । शास्त्रशब्दस्तु शिष्यते यथास्थितं प्रतिपाद्यते गुरुणा तत्त्वमनेनेति प्रतिपादनापरपर्यायशासनाख्यगुरुव्यापारसहकृतं वाक्यविशेषनिष्ठं तत्त्वज्ञानकरणत्वम् । तथा चानयोर्विभिन्नविशिष्टार्थपरत्वात् कथ परविद्याख्यमित्यनूद्य अनुत्तमं शास्त्रमिति व्याख्यानम् । कथ च व्याख्यानव्याख्येयभावस्यैवानुपपत्तौ तत्सिद्धार्थोपसंहारोऽपि इत्याशङ्क्य सत्यं विद्याशास्त्रशब्दयोर्विशिष्टार्थौ विभिन्नाविति । तथापि अर्थयोर्यत्कृतो भेदः तच्छिष्यगुरुव्यापारद्वयं विहाय यद्विद्याशब्दघटित वाक्य यच्च शास्त्रशब्दघटित वाक्य तदुभयत्रानुगत तत्त्वज्ञानकरणत्वमात्रमुपादाय विद्याशास्त्रशब्दयोरैकार्थ्यात्तथोक्तमित्याशयेनाह । **यद्यपीति** ।।

**व्यापारानुबन्धिनौ ।। व्यापारसहकृतार्थप्रतिपादकौ ।।**

ननु तथापि पराविद्यापदस्य अनुत्तमं शास्त्रमिति कृत व्याख्यानं न श्रोतॄणां दृढानिरूढ भवति । आथर्वणभाष्ये " **ऋगाद्या अपरा विद्या** " इत्यादिना स्वयमेव प्रकारान्तरेण व्याख्यानात् । न च परव्याख्यानमिव तदपि दूषणार्हम् । भगवत्पादीयव्याख्यानत्वात् । एकत्रानाश्वासेऽविशेषादन्यत्रापि आश्वासकारणाभावाच्चेत्यत आह । **ऋगाद्या इति** ।। सत्यम् अन्यत्र प्रकारान्तरेण व्याख्यातम् । व्याख्यान च न दूषणार्हमिति । तथापि व्याख्यान एवायं प्रकारभेदः । वस्तुतस्तु.

**" ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः ।**
**ता एव परमा विद्या यदा विष्णोस्तु वाचकाः ।। "**

इति भगवत्पादीयं व्याख्यानमपि एतमेवार्थ सूचयति । तथा हि—श्रुतौ " अथ परा यया तदक्षरमधिगम्यते " इत्यक्षरशब्दितविष्णुवाचकविद्यायाः परविद्यात्वम् अर्थात्तदवाचकविद्यायाः अपरविद्यात्वं चोक्तम् । भगवत्पादीयव्याख्याने तु परापरविद्ययोर्भेदप्रतीतिमपाकर्तुम् एकस्याः ऋगादिविद्याया एव विष्णुवाचकत्वावाचकत्वाभ्यां परापरविद्यात्वमुक्तम् । न च विरुद्धे विष्णुवाचकत्वावाचकत्वे ऋगादिस्वभावकृते किन्तु सहकारिसमवधानासमवधानकृते । यद्यप्यविरोधाय

यदा यदेति कालभेदः उक्तः तथापि न स्वभावकृते ते । स्वभावत्वे कालभेदस्याप्ययोगात् । सहकारिभूत च ब्रह्ममीमासाशास्त्रम् । तथा च वह्निसमवधानेनायोनिष्ठं दाहकत्वमपि वह्नेरेव । तथा ब्रह्ममीमासाशास्त्रसमवधाने ऋगादिनिष्ठं विष्णुवाचकत्वमपि ब्रह्ममीमासाशास्त्रस्यैवेति तदेव परविद्या । ऋगादिकं तु तत्समवधानाभावे तदवाचकत्वादपरविद्येति । ननु ब्रह्ममीमासाशास्त्रसमवधानासमवधाने यदि तत्सामानाधिकरण्यासामानाधिकरण्यरूपे तदा तदेकाधिकरणत्वमात्रेण ऋगादीना विष्णुवाचकत्वं स्यादतस्तत्स्वरूपमाह । **ब्रह्ममीमासेति** ॥ **न्यायानुपकृता इति** ॥ न्यायाऽनिर्णीतार्था इत्यर्थ । **तदुपकृताश्चेति** ॥ तन्निर्णीतार्था इत्यर्थः । तथा च तद्व्युत्पादितन्यायोपकृतत्वतदभावावेव तत्समवधानासमवधाने इत्युक्त भवति ।

अथवा भगवत्पादीय व्याख्यानमपि एतमेवार्थ सूचयतीत्युक्तम् । सूचनप्रकार स्वयमेव व्यनक्ति । **ब्रह्ममीमासेति** ॥ भवन्तीत्यतःपरमिति शब्दोऽध्याहार्यः । अयमाशयः । “ ऋगाद्या अपरा विद्या ” इति भगवत्पादीयव्याख्याने तावत् ऋगादिषु विष्णववाचकत्ववाचकत्वयोरविरोधाय “ यदा तदेति ” अधिकरणतया तदवच्छेदकः कालः उक्तः । न चासौ केवलो विवक्षित । तथात्वे सदा अवाचकत्वस्य वा वाचकत्वस्य वा विनिगमनाविरहस्य वा प्राप्तेः । किन्तु ब्रह्ममीमासाशास्त्रव्युत्पादितन्यायानुपकृतत्वतदुपकृतत्वावच्छेदकत्वाविशिष्ट । तथा च यत्कालावच्छेदेन ऋगादीना ब्रह्ममीमासाशास्त्रव्युत्पादितन्यायाऽनुपकृतत्व तत्कालावच्छेदेन विष्णववाचकत्व तत एवापरविद्यात्वं यत्कालावच्छेदेन तदुपकृतत्वं तत्कालावच्छेदेन तद्वाचकत्व तत एव परविद्यात्वं चेत्येवम् ऋगादीना परविद्यात्वस्य इतिकर्तव्यतारूपब्रह्ममीमासाशास्त्राहितत्वात्तदेव परविद्येत्येतमर्थ यदा यदेति पदद्वयेन सूचयतीति । **तथापीति** ॥ यद्यपि भगवत्पादीयव्याख्यानेऽपि ब्रह्ममीमासाशास्त्रस्यैव परविद्यात्व सूचित तथापीत्यर्थः । न च इतिकर्तव्यतात्वेन ब्रह्ममीमासाशास्त्रस्य वेदादितो दौर्बल्यम् । न हि साधनादपीतिकर्तव्यतायाः प्राबल्य दृष्टमिति वाच्यम् । याज्ञीयहिंसायामितिकर्तव्यतया एव प्राबल्यदर्शनात् । उपासनापादे “लिङ्गभूयस्त्वात्तद्धि बलीय” इति सूत्रे यथा भगवदपरोक्षज्ञानसाधनेषु श्रवणादिकरणापेक्षया प्रसादपूर्वक गुरुप्रदानरूपेतिकर्तव्यताया एव प्राबल्यं समर्थितम् । अन्यथा क्वचिदनपेक्षितत्वप्रसङ्गात्तद्वत्तत्परोक्षज्ञानसाधनेष्वपि वेदादिकरणापेक्षया ब्रह्ममीमासाशास्त्ररूपेतिकर्तव्यताया एव प्राबल्यस्यावश्यकत्वाच्च ।

अन्यथा पूर्ववदस्या अपि क्वाचिदनपेक्षितत्वप्रसङ्गादिति न काश्चित्क्षुद्रोपद्रव। अधिकं तु गुर्व्या रसरञ्जिन्या द्रष्टव्यम्।

ननु तथाऽप्यन्यपरिहारेणास्यैव व्याख्यानमयुक्तम्। ब्रह्मसूत्रवन्महाभारतस्यापि सर्वशास्त्रोत्तमत्वप्रतिपादकवचनविरोधादित्याशङ्कते। **नन्विति**॥ **उच्यत इति**॥ कुत्रोच्यत इत्यतो भारतं सर्वशास्त्रोत्तममुच्यत इति वक्तव्ये "भारतं सर्व शास्त्रे" ष्विति प्रमाणखण्डानुवादेन समग्रं प्रमाण सूचयति। तथा ह्युक्तं गीताभाष्ये प्रथमेऽध्याये—

**"वेदादपि पर चक्रे पञ्चम वेदमुत्तमम्।**
**भारत सर्वशास्त्रेषु भारते गीतिका वरा॥"**

इत्यादि। तथोक्तत्वमङ्गीकृत्य विरोधं परिहरति। **सत्यमिति**॥ **तदिति**॥ उत्तमत्वम् इत्यर्थः। **अविरोध इति**॥ तथा चास्य प्रमाणस्य भारतस्य विचार्येष्वेवोत्तमत्वाभिधायकत्वान्न तस्य ब्रह्मसूत्रसाम्यमिति युक्तमन्यपरिहारेणास्यैव व्याख्यानमिति भावः।

ननु ब्रह्मसूत्राण्यपि विचार्योत्तमान्येव न विचारकोत्तमानि। स्वातिरिक्तस्य विचारकस्याभावात्। भावेऽपि वा विचार्यतुल्ययोगक्षेमत्वात् स्वोत्तमत्वस्य स्वस्कन्धारोहणवद्विरुद्धत्वात्। अतो भारतस्य पुनः ब्रह्मसूत्रसाम्यमेवेति चेन्न विचार्यत्वे सति तदुत्तमत्वं भारतस्य। अत एव "भारत सर्वशास्त्रेषु" इति निर्धारणसप्तमी। तदसाधारणधर्मवत्वे सति तदुत्तमत्वे एव निर्धारणविभक्तिप्रयोगदर्शनात्। यथा "अश्वत्थः सर्ववृक्षाणा" मिति। विचारकत्वे सति विचार्योत्तमत्वं ब्रह्मसूत्राणामिति वैशेष्यात्। अत एव भारते "**वेदादपि परं चक्रे पञ्चम वेदमुत्तमम्**" इति वेदशब्दप्रयोगः। ब्रह्मसूत्रेषु "**तदर्थनिर्णयाय ब्रह्मसूत्राणि चकारे**" ति निर्णयात्मकत्वमेवोक्तम्।

अथवा प्रादुर्भूत इत्यारभ्य इयता प्रबन्धेन एतच्छास्त्रस्यैव इतरपरिहारेण व्याख्येयत्वसिध्द्यर्थम् आप्तवाक्यत्वादिहेतुभिरस्यैव सर्वोत्तमप्रामाण्यं समर्थितम्। तदयुक्तम्। ब्रह्मसूत्रवन्महाभारतस्यापि सर्वशास्त्रोत्तमत्वप्रतिपादकवचनविरोधात्। न हि प्रमाणविरुद्धोऽर्थ कुत्रापि सिध्यति। अतोऽयं प्रयास सर्वोऽपि व्यर्थ एव कुञ्जरशौचवदित्याशयेन शङ्कते। **ननु भारतमिति**। शिष्टं पूर्ववत्। **अविरोध**

इति। तथा च भिन्नविषयत्वेन प्रमाणविरोधाभावे ब्रह्मसूत्राणामेव सर्वोत्तमप्रामाण्यसिद्धेर्निष्प्रत्यूहत्वाद्युक्तमन्यपरिहारेणास्यैव व्याख्यानमिति न प्रादुर्भूत इत्यादिग्रन्थस्य वैय्यर्थ्यमिति।

इत्थं च निर्णायकत्वमनुग्राहकत्वान्नातिरिच्यते अतः ब्रह्मसूत्राणा निर्णायकत्वदृष्ट्या उत्तमत्वम्, अनुग्राहकत्वदृष्ट्या अनुत्तमत्वम् इति कथनं स्ववचनविरुद्धम्, अतएव हेयमितिबोध्यम्।

यथा स्ववचनव्याघातः तथा स्वाचार्यवचनव्याघातोऽपि आदित आरभ्यैव सदृश्यते असुधायाम्। यथा आदावेव "द्वैताद्वैतसम्प्रातिपन्नविप्रतिपन्नविषयसंग्रह" इति शीर्षकस्याधस्तात्। द्वैताद्वैतसिद्धान्तयोर्वेदनित्यत्वे तत्स्वत. प्रामाण्ये इत्यारभ्य अन्यत्र च तत्प्रसक्तानुप्रसक्तेषु न विप्रतिपत्ति" इत्यन्तेन, तथा उपोद्घातप्रारम्भे "द्वैताद्वैता विप्रातिपन्ना विषया' इति शिरोलेखाधोभागे "अत्र द्वैताद्वैतसिद्धान्तयोर्वेदनित्यत्वे तत्स्वत. प्रामाण्ये" इत्यादिना "धर्माधर्मयोरपि वेदैकगम्यत्वे च न विप्रातिपत्ति" रित्यन्तेन ग्रन्थेन कतिपयपदार्था द्वैताद्वैतासिद्धान्तयोराविप्रातिपन्नत्वेनोपवर्णिता। तत्र - वेदनित्यत्वे विप्रतिपत्त्यभावकथनं स्वाचार्यवचनविरुद्धं स्ववचनविरुद्धं च।

अद्वैतवेदान्तपारिभाषायाम् "**अस्माकं मते तु न वेदो नित्यः**" इति स्फुटमभिधानात्। असुधाकारै स्वकृते अ. वे. परिभाषाव्याख्याने वेदनित्यत्वनिरासाच्च श्रीशङ्कराचार्यैः असत्येन वेदान्तवाक्येनेत्यादिना वेदानामसत्यत्वोक्तेः "इष्यते एवास्माभि श्रुतेरप्यभाव प्रबोधे" इत्यादिवाक्यै वेदानामसत्यत्वत्रैकालिकनिषेधप्रतियोगित्वकथनेन असुधाकृता। वेदनित्यत्वनिषेधात् तद्व्याख्याने प्रदीपे तदुपपादनाच्च। यदि च द्वैतिभि वेदाः तन्नित्यत्वं च सत्यत्वेनांगीकृतं अद्वैतिभिरपि वेद तन्नित्यत्वं चासत्यत्वेनागीकृतमेवेति उभयोर्वेदनित्यत्वाविप्रतिपत्ति कथनं युक्तमेवेत्युच्यते, तदा सर्वैरपि सर्वपदार्थानां सत्यत्वेनासत्यत्वेन वा-अंङ्गीकृतत्वेन सर्वत्र सर्वसम्प्रतिपत्तिसम्भवेन विप्रातिपत्तिवार्ताविलयापातः।

वस्तुतस्तु कस्याचिदेकस्य वस्तुनः वादिप्रतिवादिभ्यामुभाभ्या सत्यत्वेनाङ्गीकारे अनित्यत्वेनाङ्गीकारे वा संप्रतिपत्तिव्यवहारः दृष्टचर; न तु एकस्य

वस्तुनः वादिना सत्यत्वेन प्रतिवादिना चासत्यत्वेनाङ्गीकारे इति। तथा च वेदनित्यत्वादौ विप्रतिपत्त्यभावकथनं स्वसिद्धान्तव्याहतं स्वव्याहतं च।

अपि चाद्वैतिप्रक्रियाणां सर्वासामसत्यत्वं जगदसत्यत्ववादिभिरद्वैतिभिः स्वीक्रियते एव। द्वैतिभिरपि अद्वैतप्रक्रियाणामसत्यमङ्गीक्रियते एवेति तत्र विप्रतिपत्तिप्रदर्शनमयुक्तमेव।

शंकराचार्यकृतदशश्लोकीनवमपद्ये "जगत्तुच्छमेतत्समस्त"मिति वाक्येन जगतस्तुच्छत्वोक्तेः, तद्व्याख्याने मधुसूदनसरस्वतीकृतसिद्धान्तबिन्दौ "सर्वं जगदसत्यमिति सिद्ध" मिति वाक्येन तुच्छशब्दस्य असत्यशब्देन व्याख्यानात् जगत असत्यत्वज्ञापनात् "न निरोधो नचोत्पत्ति" इति गौ. का. व्याख्यानावसरे शंकराचार्यैः जगतः शशविषाणवदसत्त्वाभिधानात्, शंकरानन्देन "असत्यमप्रतिष्ठंते" इति गीताव्याख्यानावसरे "वेदा वेदोक्ता धर्माः तत्फलभूताः लोकाश्च सर्वं मिथ्येत्याहुः" इति वाक्येन असत्यशब्दस्य मिथ्याशब्देन व्याख्यानात् व्यावहारिकसत्यत्वस्य तत्र तत्र अद्वैतिग्रन्थेषु परिभाषामात्रसिद्धत्वोक्तेश्च, "तुच्छम्, असत्यम्, मिथ्या, असत्, व्यावहारिकसत्यम्, बाध्यम्, त्रैकालिकनिषेधप्रतियोगि" इत्यादिशब्दाः एकार्थवाचका इति विज्ञेयम्। अत प्रक्रियाणामसत्यत्वोपवर्णनं द्वैतिनामिष्टमेवेति तत्र विप्रतिपत्तिप्रदर्शनमयुक्तमिति सिद्धम्। अत एव कौमारिलग्रन्थे सूक्तमुक्तम्। यथा

**"सत्य चेत्संवृतिः केयं मृषा चेत्सत्यता कथम्।**
**सत्यत्वं न च सामान्यं मृषार्थपरमार्थयो ॥**
**तुल्यार्थत्वेऽपि तेनैषां मिथ्यासंवृतिशब्दयोः।**
**वञ्चनार्थमुपन्यासः लालावक्त्रासवादिवत् ॥**
**नास्तिक्यपरिहारार्थं सवृतिः कल्पनेति च।**
**तस्माद्यन्नास्ति नास्त्येव यद्यस्ति परमार्थतः ॥**
**तत्सत्यमन्यन्मिथ्येति न सत्यद्वयकल्पना।** इति

एवम् असुधायामसदनुवादा शतश वर्तन्ते, कतिपये अत्र उदाह्रियन्ते—तथा हि—

१. 'यथा ज्ञास्यामि तत्त्वतः' इत्यस्य स्थाने "यथा स्यादिति तत्त्वतः" इति।

२, " तस्मात् प्राथमिकौ क्रमात् " इत्यस्य स्थाने ' तस्मान्माङ्गलिकं क्रमात् ' इति ।

३. " सत्त्रैविध्यं च मानेन " इत्यस्य स्थाने " सत्त्रैविध्यंच च मानाना"-मिति ।

४. " द्रव्य कर्म च कालश्च " इत्यस्य स्थाने ' नायं कर्म च कालश्च ' इति ।

५ असद्विलक्षणज्ञप्त्यै ज्ञातव्यमसदेव हि " इत्यस्य स्थाने " असद्विलक्षण-ज्ञस्य ज्ञातव्यमसदेव हि " इति ।

६. " जिज्ञासात्र विधीयते " इत्यस्य स्थाने " जिज्ञासात्राभिधीयते " इति ।

७. " मीमासा मेयशोधन " मित्यस्य स्थाने " मीमासा मेयसाधन " मिति ।

८. " अत इत्यभ्यसूचयत् " इत्यस्य स्थाने " 'अतः' इत्यारभ्यसूचयत् " इति ।

९. " अतस्तत्रैव विष्णुत्वसिद्धेर्ब्रह्मेत्यसूचयत् " इत्यस्य स्थाने " अतस्तत्रैव विष्णुत्वसिद्धेर्ब्रह्मेत्यसूत्रयत् " इति ।

१०. " न पृथक्त्चानुमेश्वरे " इत्यस्य स्थाने " न पृथक्त्वानुमेश्वरे " इति ।

एवमनुव्याख्यानादेः शब्दतोऽन्यथानुवादाः बहवो दृश्यन्ते । अर्थतोऽन्यथानु-वादस्तु प्रायः सर्वत्र दृश्यते । एवमेव सुधायाः शब्दत. अर्थतः अन्यथानुवादास्तु शतशः दृष्टिपथमायान्ति । विस्तरभयान्नेह उदाह्रियन्ते ।



# उपसंहारः ।

तथा च पूर्वोक्तसदृशः व्याहत्यादिदूषणगणः अनेकत्र दुर्दम सन् विदेद्युतीति । एतादृशा असदनुवादाश्चप्राचुर्येण दृश्यन्ते । एवमेव अनुक्तोपालम्भाः बहुलमुपलभ्यन्ते । पुनरुक्तादिदोषा नैकसंख्यतया दृष्टिपथमायान्ति । अनन्वितवाक्ययूथं यथेच्छं चञ्चरीति । हेत्वाभाससार्थं स्वेच्छया अटाट्यते । स्वमतानुवादोऽपि स्वगतविरुद्धतया साटोपं सोपस्कर समुपजोषं क्रियते । स्पष्टतया विरोधीन्यपि श्रुतिस्मृतिवाक्यानि स्वमतसाधनाय निर्भीकतया उपन्यस्यन्ते । अपशब्दाः अपयन्त्रणं ग्रन्थविस्तारं कलङ्कयान्ति । अल्पीयस्येव काले अर्थागर्भाण्यपि वाक्यानि यथाकथा च संदृभ्य ग्रन्थकर्तु बृहद्ग्रन्थनिर्माणेच्छा अनाच्छादितैव नरीनृत्यमाना अनिच्छदपि वाचकचक्षुः नितान्तं नियच्छति । तत्र तत्र प्रतिज्ञामात्रेण स्वाभीप्सितसाधन समर्थयन्ती निषेधमात्रेण प्रतिपक्षपराकरण निगमयन्ती अनितरसाधारणी अनाधारिणी युक्तार्थविरहिणी कापि प्रतारिणी बालमनोहारिणी स्वच्छन्दसारिणी शब्दस्तोमस्वरूपिणी असुधाकारसरणी ग्रन्थविस्तरणकारणीभवन्ती निस्सन्देहमुत्तानदृष्टिभिरपि ज्ञायते । अप्रतिपत्तिविप्रतिपत्तिजनकपदघटितत्वादिशब्ददोषा अन्वेषण विनैव अल्पायासेनैव सर्वत्र प्रतिपृष्ठमुपलभ्यन्ते इत्युक्ते नात्युक्तिदोष अस्मान् स्प्रष्टुं धृष्णुयात् । शब्ददोषोदाहरणसंग्रहोद्यमवत हस्ते तद्भाग्यवशादेव ' अद्वैततत्त्वसुधा, अकाण्डे उपनमेच्चेत् तस्य शास्त्रिभिः अतिमहोपकार कृतः स्यादिति विश्वसिम ।

इदमत्रावधेयम्—अद्वैततत्त्वसुधाखण्डन नाम तत्प्रामाण्याभावसमर्थनमेव । स च प्रामाण्याभावः विश्वमिथ्यात्वसमर्थकैः अनन्तकृष्णशास्त्रिभिः अङ्गीकृत एवेति तत्खण्डनमाम्रेडनमिवाभाति । तथापि जिज्ञासुसज्जनव्यामोहव्यावृत्तये अस्मदीया प्रवृत्तिः ।

अस्माभिरत्र कालान्तरे कर्तव्यतया निर्धारिता अधिकरणरचनाप्रणालीचिन्ता सद्य न व्यधायि । विस्तरभयात्, महाफलाभावाच्च । इदमेकं परं युक्तमुक्तं शास्त्रिभिः " आस्तामियमधिकरणरचनाप्रणालीचिन्ता । न चानेन द्वैतसिद्धान्तस्य अद्वैतसिद्धान्तस्य वा कोऽपि प्रबलः फलभेदः " इति ।

**ग्रन्थरचनाक्रम** – प्रथमभागे सम्प्रतिपन्नत्वेन पराभिमतद्वैतप्राक्रिया विप्रतिपन्नत्वेन अन्यथानूदितप्रक्रियाश्च विहाय यथावदनूदितद्वैतप्राक्रियाणा समर्थनं-विप्रतिपन्नतया परप्रदर्शिताद्वैतप्रक्रियाणा पराकरण च कृतम् । न्यायचान्द्रिकादि-प्राचीनग्रन्थाना च यथावत् परीक्षा तत्र तत्र विहिता ।

द्वितीयभागे अद्वैतपरत्वेन जगन्मिथ्यात्वपरत्वेन वा पराभिमतसूत्राणां परमत-खण्डनपूर्वकं द्वैतपरत्वजगत्सत्यत्वपरत्वसमर्थनं प्राचीनप्रबन्धान् विशेषतः बह्वंशेषु च, प्रातःस्मरणीयमायिमत्तेभकण्ठीरव-पण्डितकुलसार्वभौमश्रीमत्सत्यध्यानतीर्थ-मुनीन्द्रपूज्यचरणकृतग्रन्थानवलम्ब्यैव कृतम् ।

तृतीयभागे–अद्वैतसिद्धान्तप्रधानप्रमेयाणा विस्तरतो निराकरणं व्यधायि ।

**सत्यध्यानादिसंराध्यमूलरामपदाम्बुजे ।**
**समर्प्यते न्यायसुधामण्डनं भक्तिपूर्वकम् ।।**

शा श. १८८२ तमे
माघमासे मध्वनवम्याम्
**राजमहेंद्र–क्षेत्रे**

श्री १०८ श्रीसत्यप्रमोदतीर्थाः
श्रीमदुत्तरादिमठाधीशा

# अनुक्रमणिका।

# ॐ ओम् अथातो ब्रह्मजिज्ञासा ॐ

श्रीमदानन्दतीर्थभगवत्पादैः "**तत्र ताराथमूलत्वं सर्वशास्त्रस्य चेष्यते**" इत्यनुव्याख्याने "**ओम् अथातो ब्रह्मजिज्ञासे**" ति सूत्रशरीरं सूचितम् । श्रीमन्न्यायसुधाकारैः श्रीमज्जयतीर्थश्रीमच्चरणैश्च अनुव्याख्यानव्याख्यानावसरे "**यदयमोङ्काराथशब्दावादितः कृतवा**" नित्यादिना प्रमाणोपन्यासपुरःसरं तदेव समर्थितम् । मङ्गलादीनि मङ्गलान्तानि किल प्रचीयन्ते, परिसमाप्यन्ते च । अत एव नैयायिकादयोऽपि स्वग्रन्थारम्भे मङ्गलमाचरन्ति । मङ्गलस्यावश्याचरणीयता च प्रतिपादयन्ति ।

सत्यप्येव नैयायिकाद्यपेक्षयाप्यात्मन आस्तिकतरत्व मन्यमानैः कैश्चन वेदान्तसूत्रव्याख्यातृभिः स्वग्रन्थेषु मङ्गलं नोपनिबद्धमिति तु महदाश्चर्यम् ।

सत्सम्प्रदायप्रवर्तकेन भगवता बादरायणेन स्वप्रणीताना सर्वग्रन्थानामादौ मङ्गलमुपनिबद्धमिति भारत-पुराणोपपुराणावलोकनेन स्फुटीभवति । एवमेव स्वप्रणीतप्रबन्धमूर्धन्यभूतस्य ब्रह्ममीमासाशास्त्रस्याप्यादौ मङ्गल कृतम् निवेशितं च, ओङ्कार सूत्रादौ निवेशयता सूत्रकृता ।

तत्र भगवतो बादरायणस्य स्वतः पूर्णत्वेन स्वप्रयोजनाभावात्तत्कृत मङ्गलनिबन्धन शिष्यशिक्षार्थमेव न स्वप्रयोजनार्थम् । तत्र मङ्गलकरणं स्वीयविघ्नपरिहारार्थं सन्निहितशिष्यशिक्षार्थं च भवेत् । न तु सन्निहितासन्निहितसकलशिष्यशिक्षार्थम् । अतः सकलशिष्यशिक्षार्थं सूत्रकृता मङ्गल सूत्रादावुपनिबद्धमित्यवश्यं विज्ञेयम् ।

मङ्गलं भवत् त्रिविधं भवेत् "**आशीर्नमस्क्रिया वस्तुनिर्देशो वाऽपि मङ्गलम्**" इत्यभियुक्तोक्तेः । तत्र आशीःशब्दः अप्राप्तविषयकप्रार्थनावाची । नमस्क्रिया च स्वावधिकोत्कर्षबोधानुकूलो व्यापारः । वस्तुनिर्देशश्च वासुदेवापरपर्यायेश्वररूपवस्तुसंकीर्तनम् । "**धर्मः प्रोज्झितकैतवोऽत्र परम**" इति भागवते ईश्वरस्यैव वस्तुशब्देन ग्रहणात्; वस्तु तावत्पर ब्रह्मेति शांकरवचनाच्च ।

एतेन "आर्थिकस्याप्यर्थस्य प्रथममुपन्यासस्तु......मङ्गलाचरणम्.... उपलक्ष्ये" ति ( अ० सुधा ११९ ) कथयन्तः परास्ताः अध्यासस्यार्थिकार्थस्यावस्तुत्वादमङ्गलत्वाच्च ।

" **ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः** " इति गीतायाम् ओम् तत् सत् इति त्रयाणा ब्रह्मरूपवस्तुनिर्देशत्वमुपदर्शितम्। तेषु ओंकारस्य " **गिरामस्म्येकमक्षरम्** " " **प्रणवः सर्ववेदेषु** " इति भगवाद्विभूतिरूपत्वमुक्तम्।

**ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।**
**यः प्रयाति त्यजन् देहं स याति परमां गतिम्।**

इति वाक्येन च मोक्षप्रयोजकोच्चारणविषयत्वं च प्रतिपादितम्। अतः अत्यन्तमाङ्गलिकस्य ओंकारस्यैव सूत्रादौ निवन्धनं युक्तम्।

अत एव भगवता " **तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः। प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्** " इत्यत्र यज्ञादेरोङ्कारपूर्वकत्वमुक्तम्। अत्र यज्ञशब्देन " **श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप** " इति गीतोक्तदिशा सर्वयज्ञप्रधानभूतः ज्ञानयज्ञ एव मुख्यप्रतिपाद्यः। ज्ञानयज्ञश्च ब्रह्ममीमासाध्ययनरूप एव। ' **स्वाध्यायज्ञानयज्ञाश्चे**' त्यत्र स्वाध्याययज्ञस्य वेदाध्ययनरूपस्य ज्ञानयज्ञात् पृथग्ग्रहणात्। गीताव्याख्यानावसरे अद्वैतिभिरपि एवमेव विवृतत्वात्।

**स्वाध्यायज्ञानयज्ञाश्च**— स्वाध्याययज्ञाः यथाविधिवेदाभ्यासपराः। ज्ञानयज्ञाः न्यायेन वेदार्थनिश्चयपराः इति मधुसूदनीये।

" **विधिवद्वेदाभ्यासो यज्ञो येषां ते स्वाध्याययज्ञाः। ज्ञानं पूर्वोत्तरमीमांसाविचारेण शास्त्रार्थपरिज्ञानं यज्ञो येषां ते ज्ञानयज्ञाः** " इति भाष्योत्कर्षदीपिकायाम्।

**वेदाभ्यासो यथाशास्त्रमेषां स्वाध्यायिनां मखः।**
**शास्त्रार्थनिश्चयो येषां न्यायेन ज्ञानयाजिनाम्॥**

इति सदानन्दीये।

सूत्रकारः व्यासः गीताचार्यात् श्रीकृष्णादनन्य एव। अत एव गीताचार्य आत्मनः वेदान्तकृत्त्वं कथयति। " **वेदान्तकृद्वेदविदेव चाहं** " मिति। गीताचार्यरूपेण च—

' **तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः।**
**प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्॥**

इति ब्रह्ममीमांसाध्ययनरूपज्ञानयज्ञादीनामोङ्कारोच्चारणपूर्वकत्वनियममभिधाय स्वयं ब्रह्मसूत्रनिर्माणकाले कथं तन्नियममुल्लङ्घयेत्; कथंतरां ब्रह्मसूत्रोच्चारणस्य अविधानोक्तत्वम्; कथंतमां च आत्मनः अब्रह्मवादित्वमङ्गीकुर्यात्; सर्वशिक्षार्थं प्रवृत्तश्च कथं सूत्रादौ ओंकारनिबन्धनं च न कुर्यात् ।

" **यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः** "

इति श्रुतिरपि इममेवार्थं स्फुटं प्रतिपादयति ।

अत्र स्वरशब्दस्य '**एष उ स्वरः**' इति छान्दोग्योपनिषदनुसारेण ओंकार एवार्थः । तथा च यः स्वरः = ओंकारः वेदादौ प्रोक्तः वेदान्ते च = ब्रह्मसूत्रे तु प्रतिष्ठित इति योजना । ओंकारस्य वेदादौ प्रोक्तत्वं वेदान्तसूत्रे च प्रतिष्ठितत्वमिति विशेषोऽनेन श्रुतिवाक्येन ज्ञाप्यते । तत्र तुशब्दसमानार्थक 'च'-शब्देन सूचितो विशेषः प्रतिष्ठित इत्यनेन विशदीकृतः । प्रत्युपसर्गपूर्वकष्ठाधातुना ओंकारस्य घटकावयवत्वबोधनात् ।

इदमत्रावधेयम्-- तदवयवत्वं चात्र तत्प्रयोज्यकार्यप्रयोजकत्वम् । कार्यं च दृष्टादृष्टभेदेन द्विविधम् । लौकिकवाक्यतदवयवानां कार्यं दृष्टमात्रं, हुफडादीनां कार्यमदृष्टमात्रं, ब्रह्मसूत्रतदवयवानां कार्यं तु दृष्टादृष्टोभयम् । ब्रह्मसूत्रेष्वपि प्रथमसूत्रे 'कर्तव्ये' तिपदस्य दृष्टमात्रं प्रथमसूत्रान्त्यस्य द्वितीयादिसूत्राद्यन्तयोरुच्चार्यमाणस्य च ओंकारस्यादृष्टमात्रम् । अत एव 'कर्तव्ये' ति पदस्य प्रथमोंकारभिन्नोंकाराणां च ब्रह्मसूत्राघटकावयवत्वम्, ओंकारस्य तु सूत्रप्रयोज्यदृष्टादृष्टोभयकार्यप्रयोजकत्वात् घटकावयवत्वम् । तथा च सूत्रावयवः सूत्रघटकाघटकभेदेन द्विविध इति ज्ञेयम् । तथा चेदमेव घटकावयवत्वं प्रथमोंकारस्य 'वेदान्ते च प्रतिष्ठित' इत्यनेनोच्यते । इदं च व्याख्यानमुपदर्शितगीतानुसारि ज्ञेयम् ।

**ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।**
**स्रवत्यनोंकृतं पूर्वं परस्ताच्च विशीर्यते ॥**

इति मनुस्मृत्यनुसारि --व्याख्यान्तरमप्यत्रानुसन्धेयम् ।

" **विन्दन्त्यनेन परमात्मानमिति वेदशब्दोऽपि परमात्मप्रतिपादकमेव ग्रन्थमाचष्टे** " इति ( ऐ० आ० दीपिकायां ) विद्यारण्योक्तेः वेदशब्दः परमात्मप्रतिपादकग्रन्थपरः । तथा च पौरुषेया अपौरुषेयाश्च सर्वेऽपि वैष्णवशास्त्रग्रन्थाः वेदशब्देन गृहीताः । तथा च यः स्वरः ओंकारः वेदादौ वैष्णवशास्त्रादौ

वेदान्ते वैष्णवशास्त्रान्ते च प्रतिष्ठित इत्यर्थः इत्थं च मनुस्मृतिगतब्रह्मशब्दे ऽपि परमात्मप्रतिपादकशब्दराशिपरो ज्ञेयः।

केचित्तु "वेदशब्दस्य ब्रह्मविद्याऽर्थः सा च प्राधान्यात् ब्रह्ममीमांसारूपा परविद्यैव ग्राह्या। तथा च यः स्वरः वेदादौ = परविद्यादौ प्रोक्तः घटकावयवत्वरूप-विशेषविशिष्टोच्चारणविषयतावान्, वेदान्ते प्रतिष्ठितः अध्याहृतः। चकारात्, द्वितीयसूत्राद्यन्तयोश्च प्रतिष्ठित अध्याहृत," इति श्रुत्यर्थं सवर्णयन्ति। अपरे तु "वेदादिशब्देन बहुव्रीहिणा वेदघटितनिर्णयग्रन्थसमुदायोऽभिधीयते वेदान्तशब्देन निर्णायकब्रह्मसूत्राणि प्रतिपाद्यन्ते। तेन निर्णेयग्रन्थारम्भे निर्णायकग्रन्थारम्भे च ओंकार आवश्यक इत्यर्थः" इत्याहुः। एतेन—

**"प्रणवाद्यास्तथा वेदाः प्रणवे पर्यवस्थिताः।**
**वाङ्मयं प्रणवं सर्वं तस्मात्प्रणवमभ्यसेत्॥**

**ओंकारः स्वर्गद्वारं तस्माद्ब्रह्माध्येष्यमाण एतदादि प्रतिपद्येत"**
इत्यादिस्मृतिबलाद्विष्णुसहस्रनाम्नामोंकारपूर्वकत्वसमर्थनाय "**विश्वशब्देन ओंकारोऽभिधीयते, वाच्यवाचकयोरत्यन्तभेदाभावा**"दित्यादिना विश्व-शब्दोंकारयोरैक्यविवक्षणमपि सङ्गच्छते शंकराचार्याणां विष्णुसहस्रनामभाष्ये। स्मृतिघटकब्रह्मशब्दस्यापौरुषेयवेदमात्रपरत्वे विष्णुसहस्रनाम्नामपौरुषेयवेदभिन्नतया तेषामोंकारपूर्वकत्वे ब्रह्मशब्दघटितस्मृत्युदाहरणासङ्गत्यापत्तेः। इत्थं च विष्णुसह-स्रनाम्नामिव ब्रह्मसूत्राणामपि ब्रह्मविद्यात्वेन '**तस्माद्ब्रह्माध्येष्यमाण**' इति स्मृतिबलेनोंकारपूर्वकत्वं शंकराचार्याभिप्रेतमेवेति सिद्धवत्कृत्य, अथशब्दघटितत्वे-"

**"ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।**
**कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ"**

इति प्रमाणोदाहरणं च भामतीकाराणां सङ्गच्छते।

अत्र ओंकारस्य '**ओंकारस्स्वर्गद्वारं**' 'स्रवत्यनोंकृतं ब्रह्मे'त्यादिप्रमाण-बलान्माङ्गलिकत्वस्य प्रसिद्धत्वात्तस्यास्मिन्वाक्ये माङ्गलिकत्वकथनं दृष्टान्तार्थम्। इत्थं च यथा ओंकारो माङ्गलिकः तथाऽथशब्दोऽपि माङ्गलिक इति '**ओंकार-श्चाथशब्दश्चे**'ति वाक्यस्यार्थ इति विज्ञेयम्।

वस्तुतस्तु "**ओंकारश्चाथशब्दश्च** ... द्वावेतौ ब्रह्मणः पुरात्कण्ठं भित्त्वा-विनिर्यातौ— "**तस्मान्माङ्गलिकावुभौ**" इति 'बृहन्नारदीय' श्लोके पादत्रयेण

हेतुस्वरूपं विवृतम् । चतुर्थपादेन चानुमानं सूचितम् । तत्र तच्छब्दस्य पूर्व-परामर्शकत्वेन शब्दान्तरनिर्गमनपूर्वकालीनब्रह्मकण्ठनिर्गमनकर्तृत्वं तदा बोध्यते । ङसिप्रत्ययेन च तस्य ज्ञापकत्वरूपं हेतुत्वं प्रतिपाद्यते । माङ्गलिकावित्यनेन मङ्गलप्रयोजनकत्वरूपं साध्यं सूचितम् । पक्षनिर्देशस्तु 'द्वौ– एतौ,– उभौ' इति त्रेधा कृतः । तत्र हेतुविवरणपरवाक्ये 'एतौ द्वौ' इति प्रतिज्ञावाक्ये 'एतौ' इत्यनुवृत्त्य 'एतौ उभौ माङ्गलिकौ' इति योजनया ओंकाराथशब्दोभयं मङ्गल-प्रयोजकमिति प्रतिज्ञाशरीरं सम्पत्स्यते ।

अत्रोभयत्वस्य पक्षतावच्छेदकत्वं पर्याप्त्यैव, न तु स्वरूपसंबन्धमात्रेण, उभयपदवैयर्थ्यात् । तत्र एतौ इत्येतावता पक्षनिर्देशसंभवे द्वाविति उभाविति च पक्षनिर्देशेन ओंकाराथशब्दयोर्मङ्गलप्रयोजकत्वं न तृणारणिमणिन्यायेन, किं तु दम्पत्योरिव परस्परसाहित्येनैवेति ज्ञायते । तेन च दण्डः घटकारणमित्युक्ते दण्डत्वस्य घटकारणतावच्छेदकतालाभवत्, ओमथशब्दौ उभौ मङ्गलप्रयोजकावित्युक्ते उभयत्वस्यापि मङ्गलप्रयोजकतावच्छेदकत्वसिद्ध्या मङ्गलनिरूपितोभयत्वावच्छिन्न-प्रयोजकतावन्ताविति साध्यनिष्कर्षः । तथा च अग्नीषोमयोर्मिलितयोरेव यागविशे-षदेवतात्ववत् ओंमथशब्दयोः मिलितयोरेव मङ्गलप्रयोजकत्वम्, न केवलाथशब्दस्य न वा केवलोंकारस्येति ज्ञायते ।

न चैवं क्वचिदोंकारस्य केवलस्यापि माङ्गलिकत्वदर्शनादयुक्तमिदमिति वाच्यम् । केवलोंकारस्य मङ्गलप्रयोजकत्वसंभवेऽपि ब्रह्मसूत्राध्ययनप्रतिबन्धक-विघ्ननिवर्तकमङ्गलनिरूपितोभयत्वावच्छिन्नप्रयोजकत्वरूपस्यैवात्र माङ्गलिकत्वस्य विवक्षितत्वेन तस्य तत्राभावात् ।

ततश्चायमर्थः तत्तत्कार्यप्रतिबन्धकविघ्नपरिहारार्थकमङ्गलस्य कार्यारम्भ एव कर्तव्यत्वात्, ओमथशब्दयोरुपदर्शितमाङ्गलिकत्वात्, ब्रह्मसूत्रघटक-प्रथमद्वितीयावयवत्वमेव वक्तव्यमित्यभिप्रेत्य पुराणकृता भगवता सूत्रकृता बादरायणेन गारुडपुराणे—

**ओंकारश्चाथशब्दश्च तस्मात्प्राथमिकौ क्रमात् ॥**
**तद्धेतुत्वं वदंश्चापि तृतीयोत उदाहृतः**
**अतश्च पूर्वमुच्चार्याः सर्वं एते सतां मताः "**

इति वाक्येन विष्णोः सकाशात्प्रथमनिःसृतत्वरूपहेतोः परमसाध्यं प्राथ-

मिकत्वं साध्यतया निर्दिष्टम् । तत्र साक्षात्साध्य तु बृहन्नारदीयवचनानुसारेण माङ्गलिकत्वमेवेति वचनद्वयानुसन्धानेन लभ्यते । प्राथमिकत्व च ब्रह्मसूत्रघटक-प्रथम द्वितीयावयवत्व तृतीयावयवभूतातःशब्दपूर्वावयवत्व वेत्यन्यदेतदिति ।

सति चैवम् 'अ. सुधा' तु "**ओंकारश्चाथशब्दश्च तस्मात्प्राथमिकौ क्रमात्**" इति गारुडपुराणपाठे सुप्रसिद्धेऽपि तत्स्थाने "**ओंकारश्चाथशब्दश्च तस्मान्माङ्गलिकं क्रमात्**" इत्यपपाठ प्रकल्पयन्ती; असति बाधके विशेष्य-विशेषणवाचकपदयोस्समान—लिङ्गवचनकत्वनियमस्य विरोधं न मनागपि गणयति; न वा ओंकारस्य प्रथमपदत्व विना '**तृतीयोत उदाहृत**' इति वाक्योप-दर्शितस्य अतःशब्दतृतीयत्वस्यानुपपत्तिमपि गणयति। तेन च स्वप्रणेतुः वञ्चनाभिनिवेशमचातुर्यातिशय च समर्थयति ।

अत्र सूत्राणा संहितापाठकाले '**ओमथातोब्रह्मजिज्ञासे**' ति सूत्रपाठ विहाय '**ओम् अथातोब्रह्मजिज्ञासा**' इति ओंकारस्यासंहिततया निर्देशकरणात् न सूत्रावयवत्वमिति तु न शङ्क्यम् '**स्वरिते नाधिकार**' इति नियमानुसारेण यथा व्याकरणशास्त्रे केषाञ्चित् पदानामुत्तरसूत्रेष्वनुवृत्तिज्ञापनार्थ स्वरितयुक्ततया निर्देशः क्रियते; शब्दस्वरूपमात्रार्थकतया पृथङ्निर्देशो वा क्रियते; तथा ब्रह्ममीमासाशास्त्रे उत्तरत्रानुवृत्यर्थम् ओंकारस्य पृथङ्निर्देश-करणमुपपद्यते । ओंकारस्यप्रतिपाद्यता संबन्धेन सर्वेश्वरे विष्ण्वाख्येब्रह्मण्यन्वयान्ना-नुपपत्तिरिति ब्रह्मसूत्राणामोमथपूर्वकत्वसिद्धिः ।

# ईश्वरस्यैवोंकारार्थत्वम्

**"ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ॥**
**य. प्रयाति त्यजन् देहं स याति परमां गतिम्"**

इति श्रीमद्भगवद्गीताया श्रीकृष्णाभिन्नेश्वरस्योंकारार्थत्वोक्तेः ओंकारप्रतिपाद्यो भगवान् विष्णुरीश्वर एवेति सिद्ध्यति।

'**ओमित्येकाक्षरं ब्रह्म = ब्रह्मणोऽभिधानभूतमोंकारं व्याहरन्नु-च्चारयन्; तदर्थभूतमीश्वरं मामनुस्मरन्**' इत्यादिना शंकराचार्यैरपि श्रीकृष्णात्मकेश्वरस्यैवोंकारार्थत्वेन गीताप्रतिपाद्यत्व प्रदर्शितम् ।

एतेन '**ओमित्येकाक्षरं ब्रह्मे**' त्यत्र ब्रह्मशब्दस्य ब्रह्मणोऽभिधानभूत-मितिवत् "**प्रणवं ह्यीश्वरं विद्या**" दित्यत्र माण्डूक्योपनिषदि ईश्वरं ईश्वरस्या-

भिधानभूतमिति व्याख्यानं सूचितं भवति। अकारोकारमकारनादरूपोंकारेण व्यस्तसमस्तोंकारेण वा विश्वतैजसप्राज्ञतुरीयाणां भगवदीश्वररूपाणामेव प्रतिपाद्यत्वस्य माण्डूक्ये अभिधानात्। तत्र हि **"अयमात्मा ब्रह्म। सोऽयमात्मा चतुष्पात्"** इति तस्य ब्रह्मात्मनश्चतूरूपत्वमभिधाय **"एष सर्वेश्वर एष सर्वज्ञ एषोन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्"** इति वाक्येन तस्य सर्वज्ञत्व च वर्णयित्वा **"सोऽयमात्माऽध्यक्षर-मोंकारोऽधिमात्रं पादा मात्रा अकार उकारो मकार इति" "अमात्रश्चतुर्थ"** इति वाक्याभ्यामोंकारस्याऽपि व्याहृतीनामिव व्यस्तसमस्तरूपेण चतूरूपब्रह्म-वाचकचतूरूपत्व वर्णितम्। तत्र **"अभिधानाभिधेययोरेकत्वं च्चावोचामे"** ति **"ब्रह्म = ब्रह्मणो अभिधानभूतम्"** इत्यादि शांकरभाष्यानुसारेण **'ओंकार आत्मैव' 'प्रणवं हीश्वरं विद्या'** दित्यादौ ईश्वरमात्मानं प्रणववाच्य विद्यात् प्रणव वा ईश्वरवाचक विद्यादित्यर्थः। तथा चेश्वरस्यैव व्यस्तसमस्त-चतूरूपोंकारवाच्यत्वसिद्धिः।

तत्र चतुर्थस्य वासुदेवाभिधस्य मुकुन्दस्य जागराद्यवस्थाप्रेरणादि-व्यवहाराभावेनाव्यवहार्यत्वं संसारकालीन–जागराद्यवस्थात्रयनाशेन ससारनाशेन मुक्त्यवस्थाप्रापकतया प्रपञ्चोपशमत्वं चोक्त्वा नैयायिकोक्तरीत्या दुःखनाशवत् ससारसुखस्यापि नाशेन मोक्षस्यानुपादेयत्व—शङ्कापरिहाराय शिवशब्देन मङ्गलकरत्व नित्यसुखप्रदत्वमभिहितम्। विश्वतैजसप्राज्ञेभ्यस्तुरीयस्य भेद-शङ्कामपाकर्तु च तस्य 'अद्वैतपदेन' पूर्वोपदार्शत—रूपत्रयप्रतियोगिक भेदाभावः इतरेषां ब्रह्मादिसर्वजीवाना सर्वावस्थाप्रेरकत्वाभावेन सर्वावस्था-प्रेरकत्वेन स्वसदृशप्रेरकान्तरहीनत्व चोपवर्णितम्। तेन च सर्वथा ईश्वर एव ओंकारार्थः न त्वद्वैततत्त्वसुधोक्तरीत्या बौद्धाभिमतं निर्विशेषविज्ञानमात्रम्। सर्वशब्दावाच्यस्य तस्य सुतरामोंकारवाच्यत्वासभवात्। तत एव तस्य लक्ष्यत्व-स्याप्यसंभवः।

शकरानन्दकृत—'माण्डूक्योपनिषद्दीपिकायाम्' **"यच्चान्यत्त्रिकाला-तीतं तदप्योंकार एवे"** ति वाक्यव्याख्यानावसरे **'त्रिकालातीतं नर-विषाणादि तदप्योंकार एवे'** ति वाक्येन ओंकारप्रतिपाद्यब्रह्मणः नरविषाणाद्यभेदः कथितः। एतावता 'अद्वैततत्त्वसुधया' 'माण्डूक्योपनिषदी-

पिकया ' च स्वस्य विज्ञानवादि--शून्यवादि--बौद्धमतानुयायिप्रणीतत्वमाविष्कृतम् । तेन च वैदिकैर्हेयत्वमात्मनः सूचितम् ।

इत्थं च '**अयमात्मा ब्रह्मे**' त्याथर्वणं महावाक्यं सर्वेश्वरस्य हरेरेव ब्रह्मत्वं वर्णयति न तु जीवब्रह्माभेदम् । यतः "**ईशावास्यमिदं सर्वं**" मित्यस्य व्याख्यानभूते भागवतस्थे '**आत्मावास्यमिदं सर्वं**' मिति वाक्ये मनुना आत्मशब्देशशब्दयोरेकार्थत्वसूचनात् अयमात्मा = ईशः = ब्रह्म इत्येवोक्तवाक्यार्थः ।

"**आततत्वात्प्रमातृत्वादात्माहि परमो हरिः**"

इति श्रीधरस्वाम्युदाहृत--परमश्रुतिवचनेन आत्मशब्दस्य हरिवाचकत्व--समर्थनात्, हरिरेव ब्रह्म; स एवोंकारार्थः स एवच '**एष सर्वेश्वर**' इत्यादिना वर्णितः । इत्थच '**अयमात्मा ब्रह्मे**' ति वाक्यं न जीवब्रह्मैक्यपरं न वा सर्वेश्वरादन्यस्य विज्ञानमात्रस्य शून्यस्य वा ओंकारप्रतिपाद्यत्वपरमिति विज्ञेयम् ।

एवम् "**ओमित्येव ध्यायत आत्मानं स्वस्ति वः पाराय तमसः परस्तात्**" इति मुण्डकोपनिषदि,

"**ओमित्येव सदा विप्राः पठत ध्यात केशवम् ॥**
**हरिरेकः सदा ध्येयो भवद्भिः सत्वसंस्थितैः**"

इति शंकराचार्यकृत -- विष्णुसहस्रनामभाष्योद्धृत -- हरिवंशवाक्यानुसारेण

'**ओमित्येकाक्षरं ब्रह्मे**' ति भगवद्गीतावाक्यानुसारेण च ब्रह्मरुद्रादि-नियामकस्य केशवस्य हरेरेव ओंकारपठनपूर्वकध्यानविषयत्वेन ओंकारार्थत्व-समर्थनात् सर्वेश्वरो हरिरेवोङ्कारप्रतिपाद्यः ।

तथा नृसिंहतापनीये--

"**अथैष अकारः आप्ततमार्थः परे देवे नृसिंहे वर्तते । अथैष उकारः उत्कृष्टतमार्थः परे ब्रह्मणि नृसिंहे देवे वर्तते । अथैष मकारः महाविभूत्यर्थः परे ब्रह्मणि नृसिंहे देवे वर्तते**" इति

व्यस्तोंकारप्रतिपाद्यत्वं नृसिंहस्याभिधाय "**अथ तुरीयेण ओतश्च प्रोतश्च ह्ययमात्मा सिंहः । अस्मिन् हीदं सर्वम्**" इति वाक्येन तुरीयेण

समस्तेन वा ओंकारेण समस्तगुणपूर्णत्वादिरूपमोतत्व नृसिंहस्य प्रतिपादितम् । तेन च विश्वतैजसप्राज्ञतुर्यात्मकचतूरूपत्व भगवतः नृसिंहस्यैकस्यैव । अतो न विश्वादीना परस्पर भेदः । न वा नृसिंहस्यैतेभ्यो भेद इति चाद्वैतपदेन तत्र तत्रोच्यत इति ध्येयम् ।

किच "**प्रणव वाचकं मत्वा वाच्यं ब्रह्मेति निश्चितः ।**
**एकाग्रं सततं कृत्वा चित्तं विष्णौ निवेशयेत्**"

इति हरिवंशे सर्वेश्वरस्य विष्णोः ओंकारवाच्यत्वमुक्तम्
अपिच "**सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।**

**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सग्रहेण ब्रवीम्योमित्येतत्**"
इत्यभिधाय उतरत्र "**विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।**
**सोऽध्वनः पारमाप्नोति तद्विष्णोः परम पदम्**"

इति ओंकारप्रतिपाद्यत्व वासुदेवाख्यविष्णोरेवेति प्रदर्शित काठकोपनिषदि । एवं षटप्रश्नोपनिषद्यपि—

"**यः पुनरेत त्रिमात्रेणोमित्येतेनैवाक्षरेण पर पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्न. यथा पादोदरस्त्वचा विनिर्मुच्यत एव ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम् । स एतस्माज्जीवघनात् परात्पर पुरिशयं पुरुषमीक्षते**" इत्युक्त्वा '**तमोंकारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभय पर चेति**' इति वाक्येन पुरुषोत्तमस्योंकारार्थत्वं तस्य ब्रह्मलोक गतैः जीवोत्तमहिरण्यगर्भोपदेशेन ईक्षणीयत्वं; जाग्रत्स्वप्नसुषुप्त्यादिविशेषसर्वप्रपञ्चरहितत्वरूप शान्तत्व चोक्तम् । सचायं पुरुषोत्तमः "**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः**" इत्युक्तः वासुदेवात्मा श्रीकृष्ण एव ।

किंच "**क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर.**" "**तस्य वाचकः प्रणवः**" इत्यादि योगसूत्राण्यपि ईश्वरस्यैवोंकारार्थत्वं प्रतिपादयन्ति ।

एव वस्तुगतावपि 'अद्वैततत्त्वसुधायाः' १२१ पत्रे तथा १३० पत्रे 'ओमर्थो न नारायणः । भर्गशब्दार्थो न नारायणः । एवं १३५ – १३६ पत्रे

'ओंकारार्थो न सगुणं ब्रह्म किं तु निर्विशेषम् । ब्रह्मपदस्य न नारायणमात्रपरत्वम् । विष्णुनारायणपदयोरपर्यायत्वम् । ब्रह्मपदस्य निर्विशेष एव स्वारस्यम्, इत्यादि वर्णितम् । तच्चात्यन्तमयुक्तम् ।

तथाहि '**आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः**, इति श्रुत्या श्रवण – मनन – निदिध्यासन--दर्शनाना चतुर्णामेकवस्तुविषयकत्वमुपदर्शितम् । तच्चैक वस्तु बृहदारण्यके आत्मशब्देन निर्दिष्टम् ।

'**अथाऽतो ब्रह्म जिज्ञासे**' ति सूत्रे ब्रह्मपदेनोपदर्शित च ।

'**आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।**

**इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा**' इति सहस्रनाम शांकरभाष्योदाहृत – भारतवचनेन ब्रह्मसूत्रकृता वेदव्यासेन नारायणस्यैव जिज्ञास्यत्वं सर्वशास्त्रालोडनपरिनिष्पन्नोऽर्थ इत्युक्तम् । नारायणशब्दार्थोऽपि न ब्रह्मरुद्रादिजीवाः किंतु सर्वजीवनियामकत्वेन सर्वजीवेभ्योऽत्यन्तभिन्नः नारायणाख्यो विष्णुरेव । अत एव '**जन्हुर्नारायणो नर**' इति (वि. स. शा. भाष्ये) "नाराणा जीवानामयनत्वात्प्रलये इति वा नारायणः 'यत्प्रयन्त्यभिसंविशन्ती' ति श्रुतेः ।

'**नाराणामयनं यस्मात्तस्मान्नारायणः स्मृतः**' इति ब्रह्मवैवर्तवचनात् इत्युक्तम् '**यत्प्रयन्त्यभिसंविशन्ती**' ति वाक्यैकदेशोदाहरणेन च —

"**यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व तद्ब्रह्मेति**"

इति सम्पूर्णवचन सूचितम् । तेन नारायणस्यैव ब्रह्मत्व, जिज्ञास्यत्व, ब्रह्मादिस्थावरान्तसकलजीवजनकत्व, सर्वजीवजीवनहेतुत्व, सर्वजीवप्राप्यत्व, जीवप्रवेश्यत्व च नान्यस्येति च समर्थितम् । ब्रह्मवैवर्त--पुराणवचनोदाहरणेन च सर्वजीवाश्रयत्वेन ब्रह्मादिसर्वजीवभिन्नत्व जिज्ञास्यनारायणस्योपदर्शितम् । अत एवानन्दगिरिणा गी. शा भाष्यटीकायां "सूक्ष्मदर्शिनः पुनराचक्षते । नरशब्देन चराचरात्मक शरीरजातमुच्यते (तत्र नित्यसान्निहिताश्चिदाभासाः) जीवा नारा इति निरुच्यन्ते । तेषामयनमाश्रयः = नियामकः अन्तर्यामी नारायण इति यमधिकृत्याऽन्तर्यामिब्राह्मण श्रीनारायणाख्य मन्त्राम्नाय चाधीयते" इति नारायणशब्दो व्याख्यातः सूक्ष्मदर्शीविद्वद्दृष्ट्या । अत्र 'यमधिकृत्यान्तर्यामिब्राह्मणमधीयते इति वचनेन ।

"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः यं पृथिवी न वेद यस्य पृथिवी शरीरम् यः पृथिवीमन्तरो यमयति एष त आत्माऽन्तर्याम्यमृतः" इत्यारभ्य समग्रं सप्तम ब्राह्मण नारायणप्रतिपादकमिति सूचितम्। तत्र चैतद्ब्राह्मणभाष्यगत 'य ईदृगीश्वरो नारायणाख्यः पृथिवीं पृथिवीदेवता यमयति नियमयति। स्वव्यापारे अन्तरः अभ्यन्तरस्तिष्ठन् एष त आत्मा इति शांकरवचनं मूलम्।

इदं पुनरिहावधेयम्--जिज्ञास्यस्य नारायणाख्यस्य ब्रह्मणः सकलजीवान्तर्यामित्वेन जीवभिन्नत्वं च सूत्रकाराभिमितिशांकरभाष्यावलोकनेन स्फुटीभवति।

तथाहि "भेदव्यपदेशाच्चान्यः" इति सूत्रभाष्ये 'अस्तित्वावित्यादिशरीराभिमानिभ्यो जीवेभ्योऽन्य ईश्वरोऽन्तर्यामी 'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्य मन्तरो यमयत्येषत आत्मान्तर्याम्यमृतः" इति श्रुत्यन्तरे भेदव्यपदेशात्। तत्रहि 'आदित्यादन्तरो, यमादित्यो न वेदे' ति वेदितुरादित्याद्विज्ञानात्मनः अन्योऽन्तर्यामी स्पष्ट निर्दिश्यते इति।

एवम् "अन्तर्याम्यधिदेवादिषु तद्धर्मव्यपदेशात्" इति सूत्रभाष्ये 'य पृथिवी न वेदेति च पृथिवीदेवतायाः अविज्ञेयमन्तर्यामिणं ब्रुवन् देवतात्मनोऽन्यमन्तर्यामिण दर्शयति' इति।

तथा "शारीरश्चोभयेऽपि हि भेदेनैनमधीयते" इति सूत्रभाष्ये "नेति पूर्वसूत्रादनुवर्तते। शारीरश्चनान्तर्यामीष्यते। उभयेऽपि हि शाखिनः काण्वा माध्यन्दिनाश्च अन्तर्यामिणो भेदेनैनं शारीर पृथिव्यादिवदधिष्ठानत्वेन नियम्यत्वेन चाधीयते। यो विज्ञाने तिष्ठन्' इति काण्वाः 'य आत्मनि तिष्ठन्' इति माध्यन्दिना य आत्मनि तिष्ठन्' इत्यस्मिंस्तावत्पाठे भवत्यात्मशब्दः शारीरस्य वाचकः 'यो विज्ञाने तिष्ठन्' इत्यस्मिन्नपि पाठे विज्ञानशब्देन शारीर उच्यते। विज्ञानमयो हि शारीरः। तस्मादन्य ईश्वरोऽन्तर्यामीति सिद्धम्" इत्यादिसिद्धान्तसूत्राक्षरानुसारीणि शांकरभाष्यवचनानि प्रस्फुटानीति, इतरासिद्धान्ताविरुद्धतया समुपादेयानि। द्वैतसिद्धान्तविरुद्धानि शांकरवचनानि सूत्राक्षराननुगुणतया उत्सूत्रत्वेन हेयानीत्यत्र ब्रह्मसूत्रप्रामाण्यवादिना वेदान्तिना न विप्रतिपत्तिः।

अत एव 'चन्द्रिकामण्डना' द्यनेकाखण्डयगम्भीरार्थक-ग्रन्थप्रणेतृभिः श्रीमद्भिर्गुरुचरणैः '**भेदपराण्येव खलु ब्रह्मसूत्राणी**' ति शीर्षकान्विते अद्वैतखण्डनापराभिधाने ग्रन्थे सूत्रार्थवर्णनप्रसङ्गे शाकरभाष्यानुसारेणाऽपि सकलब्रह्मसूत्राणा भेदपरत्वमुपवर्णितम् ।

तेषामयमाशयः--शकराचार्यैः स्वभाष्येषु यावान् सूत्राक्षरानुसारी सूत्रार्थो वर्णितः; गीताक्षरानुसारी श्रुत्यक्षरानुसारी वाऽर्थोऽभिहितःस सर्वोप्यद्वैतासिद्धान्त-प्रतिक्षेपपरः द्वैतसिद्धान्तसमर्थकश्च । यश्च सूत्राक्षरेभ्यो न लभ्यते,अद्वैत्यभिमतोऽर्थः स सर्वोप्युत्सूत्र उन्मूलश्च । न केवलमुत्सूत्रः श्रुत्याद्यनेकप्रमाणविरुद्धः अनेक प्रबलतमयुक्तिविरुद्धः स्ववचनविरुद्धश्चेति । अतः प्रस्थानत्रयार्थविचारपरैः प्रेक्षावद्भिर्मूलग्रन्थाक्षरानुगुणे प्रमाणान्तराविरुद्धे सोपपत्तिके निर्दुष्टे चार्थे संभवति तद्विपरीतोऽर्थो नोपादेय इति सूचयितुमेव स्वोक्तार्थे तत्र शांकरभाष्योदाहरणं क्रियते श्रीगुरुचरणैः ।

स चायं नारायणः 'अव्यक्तापरः' 'अव्यक्तमव्याकृत मायेत्यनर्थान्तरम् । तस्मात्परः तेनाससृष्टः '**अक्षरात्परतः पर**' इति श्रुतेः' इत्यानन्दगिरिवचनोपदर्शितरीत्या न मायाशबलः; किं तु "आदिकर्ता नारायणाख्यो विष्णुः वसुदेवादंशेन कृष्णः किल सबभूव । स च भगवान् ज्ञानैश्वर्यशक्तिबलवीर्य-तेजोभिः सदा सम्पन्नः । अजः अव्ययः ईश्वरः = नित्यशुद्धबुद्धमुक्तस्वभावः स्वां माया मूलप्रकृति वशीकृत्येत्युक्तेः प्रकृतिनियामकः ।

एव समस्तवेदार्थसार--सग्रहरूपगीताशास्त्रस्य प्रतिपाद्यः परमार्थश्च । परमार्थतत्त्वं च **वासुदेवाख्य परं ब्रह्माभिधेयभूतमभिव्यञ्जयद्गीताशास्त्रमिति-शांकरोक्तेः** तथा च ब्रह्मरुद्रादिसकलजीवाभिन्नस्य वासुदेवनारायण--विष्णु-कृष्ण-भगव-दात्म--ब्रह्मादिशब्दबोध्यस्यैव जिज्ञास्यत्वम् '**ओमित्येव ध्यायत आत्मान**'मिति ओकारपठनपूर्वक ध्यातव्यत्वोक्तेः ओकारार्थत्व चेति सिद्धम् ।

यदुक्तं "**भूर्भुवस्सुव**" इति भूमसुखस्वरूपमपि न विशिष्य नारायण-पदवाच्यमित्यादि तदसत् । "**...दुःखौषध तदपि दुखमतद्धियाह भूमन् भ्रमाभि वद मे तव दास्ययोगम्**" इत्यादिना अनेक स्थले श्रीमद्भागवते नारायणस्यैव भूमपदेन सकीर्तनात्; भूरादिव्याहृतिप्रतिपाद्यो ऽपि नारायण एव ।

यदुक्तम् ‘ **तत्सवितुर्वरेण्यं भर्गो देवस्य धीमही** ’ त्यत्र भर्गशब्दः न नारायणस्वरूपं वदतीति; तदयुक्तम् । ब्रह्माण्डपुराणगत--वेङ्कटेशसहस्रनामसु नारायणस्य भर्गशब्दार्थत्वोक्तेः । तथा मैत्रायणीयोपनिषदि ‘ **भासयति रञ्जयति = गमयती--मान् लोकानिति** ’ व्युत्पत्तिप्रदर्शनपूर्वक विष्णोर्नारायणस्य भर्गशब्द-प्रतिपाद्यत्वसूचनात् । भर्गशब्दस्य सकारान्तत्वे तेजोवाचकत्वेऽपि “ **यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक** ” मिति गीतोक्तेः ।

ऋग्विधानगत--गायत्रीध्यानश्लोके “ **ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशंड्खचक्रः** ” इति शौनकोक्तेश्च । सवितुः भर्ग इत्यनेन सूर्यान्तर्गतं नारायणाख्यं तेज एवोच्यते ।

“ **अन्तस्तद्धर्मोपदेशा** ” दिति सूत्रव्याख्यावसरे-- “ **अथ य एषोऽन्त-रादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः--हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः तस्य यथा कप्यास पुण्डरीकमेवमक्षिणी । तस्योदिति नाम । स एष सर्वेभ्यः पाप्मभ्य उदितः । उदेति हवै सर्वेभ्यः पाप्मभ्यो य एवं वेद** ” इति श्रुतिप्रतिपादितः सुवर्णवर्णः पुण्डरीकाक्षः; संसारी जीवो वा, आदित्यदेवता वा, परमेश्वरो वेति सशय्य परमेश्वर एव स इति निर्धारितम् । सर्वथा पापसंबन्धशून्यत्वादिधर्माणामत्र श्रवणादिति ।

तत्र परमेश्वरस्य रूपाभावात्कथं तस्य हिरण्यश्मश्रुत्वादिकमित्याशक्य शंकराचार्यैः नारदं प्रति नारायणोक्तस्य “ **माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं मैवं मां ज्ञातुमर्हसी** ” ति वचनस्योपन्या-सेनात्र प्रतिपाद्यो नारायण एव परमेश्वरः । स एव गायत्रीप्रतिपाद्यश्चेति ( ब्र.सू. शां. भाष्ये ) सूचनाच्च ।

एवं पुरुषसूक्तप्रतिपाद्योऽपि नारायण एव भागवते द्वितीय स्कन्धे पुरुषसूक्तस्य नारायणपरतया व्याख्यानात् । **यमधिकृत्य** “ **श्रीनारायणाख्यं मन्त्राम्नायं चाधीयते** ” इत्यानन्दगिरिवचनानुसारेण “ **सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम् । विश्वं नारायणं देवमक्षरं परमं पदम् । विश्वतः परमान्नित्यं विश्वं नारायणं हरिम् । विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवती** ”

स्यादिमन्त्राम्नायवचनैः नारायणस्य पुरुषसूक्तोक्त–सहस्रशीर्षत्वादिगुणयुक्तत्वेन पुरुषपदेन च निर्देशात्।

" **ब्रह्मा तदुपधार्याथ सहदेवैस्तया सह**
**जगाम सत्रिनयनस्तीरं क्षीरपयोनिधेः।** इत्युक्त्वा
**पुरुषं पुरुषसूक्तेन उपतस्थे समाहितः** "

इत्यादिना ब्रह्मरुद्रादिभिः पुरुषसूक्तेन स्तूयमानत्वस्य क्षीरसमुद्रशायिनि नारायणे कथनात् पुरुषसूक्तप्रतिपाद्यो नारायण एव न सदाशिवादयः।

यदप्युक्तम्–" **ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥ तमेव शरणं गच्छ सर्वभावेन भारते** "ति, तमेव शब्देन भगवता स्वातिरिक्तेश्वरस्य ध्येयत्व–विज्ञेयत्वादि प्रतिपादनं च नारायणपदमात्रवाच्यस्यैव परमात्मत्वे विरुध्येते " ति तच्छांकरभाष्यानवलोकनमूलकं प्रतारणामात्रं वा। यतः शंकराचार्यैः '**ईश्वरः सर्वभूतानां**' मिति श्लोकव्याख्यानावसरे ईश्वरशब्देन नारायणादन्यः कश्चिदीश्वर इति भ्रमो माभूदित्यर्थमेव "**ईश्वरः ईशनशीलो नारायणः**" इति व्याख्यातम्। तथा च '**तमेवे**' त्यत्र तच्छब्देनापि नारायणाख्यस्यैवेश्वरस्य परामर्शः नान्यस्य। अत एव " **तत्प्रसादात् = ईश्वरप्रसादात् परां शान्तिं = प्रकृष्टां शान्तिं परामुपरतिं; स्थानं च मम विष्णोः परमं पदमवाप्स्यसि, शाश्वतं = नित्य** " मिति व्याख्यातम्।

तथा चतुर्थाध्याये **बहूनि मे व्यतीतानी**' त्येतत्पद्यावतरणिकायाम् '**या तु वासुदेवे अनीश्वरासर्वज्ञाशङ्का मूर्खाणां तां परिहरन् भगवानुवाचे**" ति वाक्येन 'कृष्णस्तु नेश्वरः; कृष्णादतिरिक्त एव कश्चिदीश्वर' इति वादिनां मूर्खत्वमुक्तं शंकराचार्यैः। भगवता श्रीकृष्णेनापि 'तमेवे' ति तच्छब्दनिर्देशेन श्रीकृष्णादन्य एव कश्चिच्छरणीकरणीय इति भ्रममपाकर्तुम्—

**सर्वगुह्यतमं भूयः शृणु मे परमं वचः।**
**इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम्॥**
**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे॥**

**सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वां सर्व पापेभ्यो मोक्षयिष्यामि मा शुचः ॥**

इत्यादिना '**मामेकं शरणं व्रजे**' त्युपसंहृतम् । विवृतमेतन्मधुसूदन-सरस्वतीभि--र्भाष्योत्कर्षदीपिकाकारैश्च । इत्थं च ओंकार--व्याहृति--गायत्री--पुरुषसूक्तादिसकलवेदप्रतिपाद्य, नारायणाख्यं ब्रह्मैव, तदेव च जिज्ञास्यमिति सिद्धम् ।

एतेन "अद्वितीयसविन्मात्रनिर्विशेषचैतन्यस्यैवोंकारार्थत्वम्" 'केवल मत्र ब्रह्मपदप्रयोगान्निर्विशेष ब्रह्मैव जिज्ञास्यमिति प्रतीयते' 'निर्विशेषब्रह्मस्वरूप-मात्रप्रतिपादकाश्च बहव उपनिषदः' 'तत्र ब्रह्ममीमासा निर्विशेष--परमात्मस्वरूप-मात्रमुख्यतात्पर्यकत्वं वेदान्ताना **निर्धारयति**" **इत्यद्वैततत्त्वसुधाम्रेडितं** परास्तम् शंकराचार्यैर्बृहदारण्यकभाष्ये '**ज्ञानं च तस्मिन् परात्मभाव-निवृत्तिरेवे**' त्यादिना निर्विशेषब्रह्मणः ज्ञानविषयत्वनिषेधात् । इष्टसिद्धिकृता अनुभूतित्वेन हेतुना ब्रह्मणः अनुभवाविषयत्वसमर्थनाच्च ।

किं च ज्ञानविषयत्व हि द्वेधा संभवति; फलव्याप्यत्व वृत्तिव्याप्यवं चेति । तत्र फलव्याप्यत्वं शास्त्रकृद्भिरेव निराकृतम् । '**फलव्याप्यत्वमेवास्य शास्त्र-कृद्भिर्निवारित**' मिति विद्यारण्योक्तेः । वृत्तिव्याप्यत्वं तु अ० सुधाकारैः अ० शास्त्रिभिः अद्वैतसिद्धिसंग्रहे प्रमाणोदाहरणपूर्वक निराकृतम् "यत्तदद्रेश्य मिति श्रुत्या वृत्तिव्याप्यत्वनिषेधात् वृत्तिव्याप्यत्वपक्षे नात्मनि व्यभिचारः" इत्यादिवाक्यैः । तथा च विशेषाभावकूटेन सामान्याभावसिद्धेर्निष्प्रत्यूहतया ज्ञान-विषयत्वसामान्याभावसिद्धेः ॥

अपि च वेदप्रतिपाद्यत्वं हि तात्पर्यज्ञानसहकारेणाभिधाद्यन्यतमवृत्ति-द्वारा वेदजन्यशाब्दज्ञानविषयत्वम् । निर्विशेषब्रह्मणि च न तात्पर्यं न वाऽभिधादि-वृत्तित्रयमिति वार्तिककृता स्पष्टमभिहितम् । यथा—

**"अगृहीत्वैव संबन्ध-मभिधानाभिधेययोः ॥**
**हित्वा निद्रां प्रबुध्यन्ते सुषुप्ते बोधिताः परैः ॥**

**जाग्रद्वन्न हि संबन्धं सुषुप्ते वेत्ति कश्चन**" इत्यादिना 'अद्वैत-सिद्धिकृता' **विनाऽपि संबन्धं शब्दादात्मसाक्षात्कार इति निरवद्य**' मिति ग्रन्थेन वार्तिकं विवृतम् ।

लघुचन्द्रिकाया च '**संबंधशब्दस्य वृत्तिज्ञानं तात्पर्यज्ञानं चार्थं**'-इत्युक्तम् । अ सुधाकारैश्च " जीवेश्वरभेदस्य प्रत्यक्षगोचरत्वेन तस्यापूर्वत्वाभाव:" इति निर्विशेषस्य प्रत्यक्षागोचरत्वेनापूर्वत्वमिति"च समर्थितम्। भामतीकारैरपि शब्दस्यापरोक्षधीहेतुत्व निराकृतम् । तया च अ०शास्त्रिप्रदर्शितरीत्या निर्विशेषस्यापूर्वत्वार्थं वेदेतरप्रत्यक्षादिप्रमाणजन्यज्ञानविषयत्वाभावः,वार्तिक-काराद्युक्तरीत्या तात्पर्यस्य वृत्तीनां चाभावाद्वेदजन्यशाब्दज्ञानविषयत्वाभावश्च सिद्ध इति। विशेषाभावे च सामान्याभावनियमाज्ज्ञानविषयत्वसामान्याभावो ब्रह्मणि सिद्धः ।

इदमत्रावधेयम्—निर्विशेषस्य ज्ञानविषयत्वाङ्गीकारे मिथ्यात्वानुमानस्य व्यभिचारापत्तिः। व्यभिचारपरिहाराय ब्रह्मणोऽपि मिथ्यात्वाङ्गीकारे 'ब्रह्म-सत्य जगन्मिथ्ये' ति डिण्डिमभङ्गः। ज्ञानविषयत्वानङ्गीकारे '**असच्चेन्न प्रतीयेत । प्रतीयते च तस्मादसन्न**' ति निर्विशेषे असद्वैलक्षण्यसाधनासंभवेन निर्विशेषस्यासद्रूपत्वापत्तिः। मन्ये चात एव किंकर्तव्यमूढैः शंकरानन्दैः माण्डूक्योपनिषद्दीपिकाया '**नरविषाणादिकमपि ओंकारार्थब्रह्मरूप**' मित्युक्त-मिति। एवमेव सभ्रान्तचित्तैरसुधाकारैः निर्विशेषस्य शुद्धस्य वृत्तिरूपज्ञानविषयत्व-सामान्याभावकथनेन 'असच्चेन्न प्रतीयेते' त्युक्तदिशा निर्विशेषस्यासत्वमङ्गीकृत-प्रायम्। सत्वाभावासत्त्वाभावोभयवत्वकथनेन च मिथ्यात्वमुररीकृतम्। उभयथा 'ब्रह्म सत्य जगन्मिथ्ये' ति डिण्डिमस्य विध्वसनमेव कृतम् ।

इत्थं च नरविषाणाद्यसद्रूपस्य निर्विशेषब्रह्मणः वन्ध्यासुतकण्ठनिर्गतों-कारार्थत्वमङ्गीक्रियतां कामं, न पुनर्ब्रह्मकण्ठनिर्गतोंकारप्रतिपाद्यत्वं कथमपि। ब्रह्मोच्चरितोंकारार्थत्वं तूपदर्शितानेकप्रमाणानुसारेण भगवतो नारायणस्यैव ।

तच्च ओंकारप्रतिपाद्यत्वं व्यासपक्षे, अकारोकारमकारप्रतिपाद्यत्वेन, तत्र अकारस्य "**अ इति ब्रह्म तत्रागतमहमिति**" इत्यैतरेयोपनिषदि अहमिति व्याख्यानं कृतम्। बृहदारण्यके च अहमित्यस्य "**तस्योपनिषदहमिति हन्ति च पाप्मानं जहाति च य एवं वेदे**" ति विवरणं कृतम्। शंकराचार्यैश्च "**अहमिति चैतद्रूपं हन्तेर्जहातेश्चेति यो वेद स हन्ति जहाति च पाप्मानं य एवं वेदे**" त्यनेनाहंशब्दार्थः सूचितः। तेन च अहमित्यत्र हकारो हनधातुनिष्पन्नः ओहाक् धातुनिष्पन्नश्चेति ज्ञायते। तत्र प्रथमाभिप्रायेण—

**“ हं नाम हन्यमानत्वाज्जीवस्य समुदाहृतम् ।**
**जीवादन्यो यतो विष्णुरहंनामा ततः स्मृत ॥ ”**

**“ यस्मात्क्षरमतीतोऽहम् ”**

इत्यादिस्मृतिवचनानि प्रवृत्तानि । चतुर्मुखब्रह्मरुद्रादिसर्वजीवाना
**“ अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्त वा उ ॥ ”**

इत्यम्भृणीसूक्तोक्तदिशा हन्यमानत्वात्हशब्दबोध्य-ब्रह्मरुद्रादिसकलजीवभिन्नत्वेन प्रकारेण विष्णोः अकारप्रतिपाद्यत्वमुपदर्शितश्रुतिस्मृतिभिः समर्थितम् ।

त्यागार्थकधातुनिष्पन्नत्वाभिप्राये तु “ **अहेयत्वादहंनामा** ” “ **अक्षरादपि चोत्तमः** ” इत्यादिस्मृत्यनुसारेण पारतन्त्र्यादिदोषशून्यत्वेन अकारप्रतिपाद्यत्व विष्णोरिति प्रतिपादित भवति ।

प्रथमपक्षे अकारः भेदवदर्थकः, अहंशब्दः नञ्तत्पुरुषरूपः भेदवदर्थकनञ्घटितश्च । द्वितीयपक्षे अकारः अत्यन्ताभाववदर्थकः, अहंशब्दश्च अत्यन्ताभावार्थकनञ्घटितो बहुव्रीहिरूपश्चेति विज्ञेयम् ।

क्वचित्तु अन्तर्यामिणः विष्णोः इतरेषां नियामकानामिव नियम्यैर्जीवैस्त्यक्तुमशक्यत्वात् अहेयत्वमित्यर्थवर्णनेन अहमित्यस्य त्यागार्थकधातुनिष्पन्नत्वेऽपि नञ्तत्पुरुषरूपत्वमुपदर्शितम् । माण्डूक्ये तापनीये च अकारस्य आप्ततमत्व–व्याप्ततमत्वम्–इत्यर्थ उक्तः । तेन “ **अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः** ” इति श्रुत्युपदर्शितरीत्या व्याप्तत्वेन अकारप्रतिपाद्यत्वमुक्तम् । उत्कृष्टतमत्वेन उकारप्रतिपाद्यत्वम्, महाविभूतिमत्वेन–मकारप्रतिपाद्यत्वम् । तथा ओतत्वेन—गुणपूर्णत्वेनरूपेण समस्तौस्तोंप्रतिपाद्यत्व च तापनीयश्रुत्या उपवर्णितम् ।

तथा च ओंकारघटक-उकारेण विष्णोः जडाभिमानिसकलजीवोत्तमत्वे जडोत्तमत्व स्वत एव सिद्धम् इत्यभिप्रायेण उत्कृष्टतमत्वमुक्तम् । तेन च अपकृष्टं जडजातम्, तदपेक्षया उत्कृष्टं जीवजातम्, उत्कृष्टतमश्च भगवान् नृसिंहाख्यो विष्णुरिति सिध्यति । तस्य उत्कृष्टतमत्वं च अपकर्षासमानाधिकरणोत्कर्षवत्वम् । एतदेवाभिप्रेत्य शंकराचार्यैरपि गीताभाष्ये जडानामपरत्वं जीवानां परत्वं श्रीकृष्णस्य च परतरत्वं समर्थितम् । तेन च जडजीवेश्वरभेदेन अपर–पर–

परतरभेदेन अधम–मध्यमोत्तम–भेदेन वा प्रमेयत्रैविध्यं श्रुति–गीता–सूत्र–प्रस्थान-त्रयप्रतिपाद्यमित्यविप्रतिपन्नम् ।

एवमेव प्रमाणान्यपि त्रीणि, कानिचिदपर–( अधम )– वस्तुमात्रतात्पर्य-काणि, का निचित् मध्यम =परवस्तुतात्पर्यकाणि । कानिचिद् परतर–(उत्तम)–वस्तुमात्रतात्पर्यकाणि । तानि च परस्परविरुद्धानि–चार्वाकदर्शनम्, निरीश्वर-साख्यदर्शनम्, वेदान्तदर्शनम् इत्यादिरूपाणीति केचित् । अपरे तु चार्वाकदर्शनादीना प्रामाण्याभावेन प्रमाणत्रैविध्यकथनप्रसङ्गे तेषा गणनमयुक्तं मत्वा तानि विहाय वेद एव कर्मकाण्डमुपासनाकाण्ड ज्ञानकाण्डमिति प्रतिपाद्यत्रैविध्यप्रयुक्त प्रमाणत्रैविध्यं प्रकल्पयन्ति ।

वेदान्तसप्रदायाभिज्ञास्तु पौरुषेयम्-अपौरुषेयम् ब्रह्ममीमासाशास्त्रमिति त्रैविध्य मन्यन्ते, तथा केषुचित्प्रमाणेषु परापरयोः मध्यमाधमयोः **अपरप्रमेयत्वेनैव** रूपेण सग्रह विधाय निरुपपदपरशब्देनोत्कृष्टतमस्यैव ग्रहणदर्शनात् परापरभेदेन स्वतन्त्रास्वतन्त्रभेदेन प्रमेयद्वैविध्यमपि प्रतिपादयन्ति । तत्पक्षे-अपरम्-अस्वतन्त्रम्-च जडजीवभेदेन द्विविधमिति चावान्तरविभाग उपवर्णनीयः । तत्र प्रमेयद्वैविध्यात् प्रमाणानामपि द्वैविध्यमिति केचन मन्यन्ते । तत्तु भगवद्गीताविरुद्धत्वादयुक्तम् । यतः गीताया सकलवेदाना “ **वेदैश्च सर्वैरहमेव वेद्यः** ” **सर्वे वेदा यत्पदमामनन्ति** ” इत्यादिना परप्रमेयविषयकत्वस्य, “ **त्रैगुण्यविषया वेदाः** ” इत्यादिना अपरप्रमेयविषयत्वस्य च कथनात् परप्रमेयविषयकत्वस्य अपरप्रमेयविषयकत्वस्य च विरुद्धधर्मत्वाभावान्न प्रमाणविभाजकतावच्छेदकत्वम्, अतः प्रमेयद्वैविध्यात् प्रमाणद्वैविध्यकथनमयुक्तम् । किन्तु निर्णयनिर्णायक-प्रमाणभेदेनैव शब्दप्रमाणद्वैविध्य वाच्यम् । तथा च प्रमाणेषु परत्व च द्विविधम् । विषयनिष्ठपरत्वप्रयुक्तमेकम् विषयस्य; परत्वेऽपि शब्दस्वरूपनिष्ठनिर्णायकत्वप्रयुक्त चापरम् । एवमेवापरत्वमपि विषयनिष्ठापरत्वप्रयुक्त, शब्दस्वरूपनिष्ठनिर्णेयत्वप्रयुक्तं चेति द्विविधंबोध्यम् । तत्र प्रथम न प्रमाण विभाजकतावच्छेदक किंतु द्वितीयमेवेति तत्त्वम् इद चानुपदमेव विशदीकरिष्यामः । तेन **स एव सर्ववेदार्थ** । इत्यनु-व्याख्यानोक्त न्यायसुधासमर्थित नारायणस्योंकारादिसमस्तवेदार्थत्वमुपपन्नतरम् । अत्र अ. सुधाकाराणामाक्षेपास्तदर्थाज्ञानमूलका इति ज्ञातव्यम् ।

**इतिविष्ण्वाख्येश्वरस्यैवोंकारार्थत्वसमर्थनम्**

## ब्रह्मसूत्राणामनुग्राहकतयोत्तम–शास्त्रत्वेन परविद्यात्वम्, सर्वशास्त्राणां च विष्णुबोधकत्वेन परविद्यात्वम् ।

यच्चोक्तम् " ब्रह्ममीमासा यद्यपि स्वतन्त्रशास्त्रम् तथापि परविद्यात्वं सर्वेषां वेदानामद्वितीयसविन्मात्रतात्पर्यवत्वेन; न तु सर्वेषा पदाना मुख्यवृत्या ब्रह्मबोधकत्वेने " ति तदयुक्तम् । ' निर्विशेषवाक्यमात्रस्य परविद्यात्वम् ' ' कर्मकाण्डानामपि विष्णुपरत्वेन ब्रह्मपरता न विकल्पसहे ' त्यादिस्ववचनविरोधात् ।

" **तदित्यस्य महतो भूतस्य नाम भवती** " ति ऐतरेयारण्यके " **तत् – कृत्स्नस्वाध्यायवाक्यम् । एको विष्णुर्महद्भूतमिति प्रसिद्धस्य विष्णो नाम भवती** " ति सर्वं वैदिकपदाना विष्णुनामत्वप्रतिपादनात्, विद्यारण्यैरपि तथैवारण्यकवाक्यव्याख्यानावसरे व्याख्यातत्वाच्च ।

एव विष्णुसहस्रनामभाष्ये शंकराचार्यैः ' कथितः ' इति शब्दस्य सर्ववेदप्रतिपाद्य इत्यर्थमभिधाय " **'सर्वे वेदा यत्पदमामनन्ति' ' वेदैश्च सर्वैरहमेव वेद्यः ' ' वेदे रामायणे चैव पुराणे भारते तथा । आदौ मध्ये तथान्ते च विष्णुः सर्वत्र गीयते ' इत्यादि वचनेभ्यः** " इति वाक्येन सर्ववेदप्रतिपाद्यत्व विष्णोरुपवर्णितम् ।

तथा अपरोक्षानुभूतौ—" **ब्रह्मैव सर्वनामानि बिभर्तीति श्रुतिर्जगौ** " इति सकलनामवाच्यत्वं ब्रह्मणः कण्ठरवेणोपवर्णित शंकराचार्यैः ।

पद्मपुराणे लौकिकवैदिकसकलनामवाच्यत्व श्रीरामचन्द्रस्योपवर्णित भगवता पार्वतीपतिना । तथा तेनैव सर्ववेदानां भगवन्नामत्वेऽपि तेषु विष्णुसहस्रनाम्ना प्राधान्यं तत्रापि रामनाम्नः अतिश्रेष्ठत्वं चोक्तं तत्सुप्रसिद्धमेव ।

शौनकमहर्षिणाऽपि—

" **वेदाक्षराणि यावन्ति कथितानि द्विजातिभिः ।**
**तावन्ति हरिनामानि कीर्तितानि न सशयः** "

इति ऋग्विधानवचनेन न केवलं वैदिकसकलपदवाच्यत्वं हरेः किंतु वैदिक–सर्वाक्षरवाच्यत्वमपीति प्रतिपादितम् ।

तथा " **वेदैश्च सर्वैरहमेव वेद्य** " इत्येतद्वाक्यव्याख्यानावसरे भाष्यो–त्कर्षदीपिकाकारप्रभृतिभिरद्वैतिभिरपि सर्ववेदैः कर्मकाण्डादिलक्षणैः कर्मो–पास्तिज्ञानकाण्डात्मकैः स्मृतीतिहासपुराणादिभिश्च श्रीकृष्णपरमात्मन एव प्रति–पाद्यत्वमुक्तम् । न तु निर्विशेषस्य ।

एतेन 'उपनिषदा त्वक्षरपरमात्मस्वरूपपरतया परविद्यात्वमित्यद्वैतराद्धान्तः। न्यायसुधादयस्तु कर्मकाण्डानामपि परविद्यात्व विष्णुपरत्वेन प्रतिपादयन्ती' ति यत्कथित तन्निरस्तम् । पूर्वोपदर्शिताद्वैतिवचनैः कर्मकाण्डानामपि विष्णुपरत्वेन परविद्यात्वस्यावश्यकत्वात् ।

इत्थ च कर्मकाण्डाना कर्माद्यपरवस्तुबोधकत्वेनापरविद्यात्व विष्णुरूपपरवस्तुबोधकत्वेन परविद्यात्वमपि । अत एवाथर्वणोपनिषदि प्रथमतः "**भारद्वाजोऽङ्गिरसे परावरा**" मिति परावरब्रह्मविद्यात्व विभाज्यतावच्छेदकसामान्यधर्मरूपमुक्तम् । तत्र परा च सा अवरा चेति व्युत्पत्त्या एकस्या एव ऋगादिविद्यायाः विषयभेदेन परत्वमपरत्व च गीयते । तथात्वे एव च तदुपपद्यते नान्यथा । एतदभिप्रायेणैव भाष्ये श्रीमदाचार्यैः—

"**ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः ।**
**ता एव परमा विद्या यदा विष्णोस्तु वाचकाः**" ॥

इति परमश्रुतिवचनोदाहरणेन परापरविद्यात्वमेकत्र समर्थितम् ।

नन्वेव परापरब्रह्मविद्यात्वस्य सामान्यधर्मत्वाङ्गीकारे परविद्यात्वापरविद्यात्वयोर्विभाजकधर्मत्वाऽनुपपत्तिः । परस्परविरुद्धयोरेव विभाजकोपाधित्वात्; एतयोश्च परस्परसमानाधिकरणत्वात् । किंतु ब्रह्मविद्यात्वमेवात्र सामान्यधर्मः । 'परावरा' मित्यनेन ब्रह्मविद्यायाः परस्मादवरेण प्राप्तत्वं वा परावरसर्वविद्याविषयव्याप्यत्वं वा उच्यते । '**द्वे विद्ये वेदितव्ये**' इति वाक्ये च द्वे इत्यस्य न द्वित्वसंख्यावन्तावित्यर्थः । ब्रह्मविद्याना-मानन्त्यात् । अपि तु द्वित्वसंख्यापर्याप्त्यधिकरणविभाजकधर्मान्यतरविशिष्टाविति । अत एवोपाधिद्वित्वेन द्विवचनोपपत्ति सर्वेऽपि व्याख्यातारो मन्यन्ते । इत्थ च परविद्यात्वापरविद्यात्वयोर्ब्रह्मविद्यात्वव्याप्य–विरुद्धनानाधर्मत्वेन तत्प्रकारकज्ञानजनकस्य 'द्वे विद्ये' इत्यस्य विभागवाक्यस्य नानुपपत्तिरिति चेन्न।

'**तत्राऽपरे**' त्यनेन ऋगादिसर्वविद्याना ग्रहणात्तदतिरिक्त–परविद्याया एवाप्रसिद्धेः । नच नाप्रसिद्धिः उपनिषदामेव परविद्यात्वादिति वाच्यम् । उपनिषदामपि ऋग्वेदाद्यन्तर्गतत्वेनापरविद्यात्वात् । परत्वापरत्वयोः परस्परसमानाधिकरणतया विभाजकोपाधित्वायोगेन विभागानुपपत्तितादवस्थ्यात् । एतदभिप्रायेणैव "**ननु ऋगादिबाह्या तर्हि सा कथं परा विद्या स्यान्मोक्षसाधनं**

**च** । **‘ या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टय ’ इति हि स्मरन्ति । कुदृष्टित्वान्निष्फलत्वादनादेया स्यात् । उपनिषदां च ऋग्वेदादि बाह्यत्वं स्यात् । ऋग्वेदादित्वे तु पृथक्करणमनर्थक ” मित्यभिहितं शंकराचार्यैः ।**

ननु तर्हि **‘ अथ कथ परेति । न । वेद्यविषयविज्ञानस्य विवक्षितत्वात् । उपनिषद्वेद्याक्षरविषयं हि विज्ञानमिह ‘ पराविद्ये ’ ति प्राधान्येन विवक्षितम् । नोपनिषच्छब्दराशि । वेदशब्देन तु सर्वत्र शब्दराशिर्विवक्षित ’** इति शकराचार्योक्तदिशा अपरविद्याशब्देन शब्दराशिर्ग्राह्यः परविद्याशब्देनोपनिपज्जन्यज्ञानमिति विवक्षणे, परविद्यात्वस्य शब्दराशावभावादपरविद्यात्वस्य च ज्ञाने अभावात् परत्वापरत्वयोर्विरुद्धत्वेन विभाजकधर्मत्वमुपपन्नमिति चेन्न ।

पूर्वं ब्रह्मविद्या **प्राह, प्रवदेत, उवाच, प्राहेति** कथनेन विद्याशब्दस्य ज्ञानार्थकत्वे तस्योच्चारणाद्यसभवेन शब्द एव तत्संभवात्, ब्रह्मविद्याशब्दः ब्रह्मज्ञानजनकशब्दपर एव । **“ अथ परा यया तदक्षरमधिगम्यते ”** इति वाक्योक्ताक्षराधिगतिकरणत्वरूपस्य परविद्यालक्षणस्य च शब्दमात्रवृत्तित्वेन ज्ञाने असभवात् । कथंचि **‘ दधिगम्यते ’** इत्यस्य प्राप्यते इत्यर्थाङ्गीकारेण, अक्षरप्राप्तिहेतुत्वस्य ज्ञाने उपपादनसंभवेऽपि विद्यात्वरूपस्य व्यापकस्य सामान्यधर्मस्य ज्ञाने अभावेन विभागानुपपत्तिरेव । विद्याशब्दस्य भावे क्यप्प्रत्ययान्तत्वमाश्रित्य ज्ञानार्थकत्वाङ्गीकारेण विद्यात्वस्य ज्ञाने उपपादनेऽपि, एवविधविद्यात्वस्य ऋग्वेदादावभावेन विद्यात्वस्य साधारणधर्मत्वानुपपत्तिरेव । किंचास्यशास्त्रप्रकरणत्वेन तत्रत्यविद्याशब्दस्य शास्त्रमात्रपरत्वं वाच्यम् । अतः **‘ यया तदक्षरमधिगम्यते ’** इति वाक्योक्ताक्षराधिगतिकरणत्वमक्षरज्ञानकरणत्वरूपमेव वक्तव्यम् । तथा च ऋग्वेदान्तर्गतोपनिषदामक्षराधिगतिकरणत्वेन परवस्तुबोधकत्वेन ऋग्वेदादीनामेव भागविशेषे परविद्यात्वम् । उपनिषदितरभागस्यापरवस्तुबोधकत्वेनापरविद्यात्वमिति वा । अस्मदुपदर्शितरीत्या **‘ सर्वे वेदा यत्पदमामनन्ति ’ ‘ वेदैश्च सर्वैरहमेव वेद्य ’** इत्युक्तदिशा उपनिषदितरभागस्याऽपि विष्णुरूपपरवस्तुबोधकत्वेन परविद्यात्वमपीति वा वक्तव्यम् । एवं सति पूर्ववाक्योक्तं ब्रह्मविद्यायाः परावरत्वमुपपद्यते इति ज्ञेयम् ।

नन्वेवमपि परत्वापरत्वयोः परस्परसमानाधिकरणयोर्विभाजकधर्मत्वानुपपत्त्या विभागानुपपत्तिस्तदवस्थैव । यद्यप्याथर्वणोपनिषद्भाष्यात् **‘ द्वे विद्ये ’** इत्यस्य

विभागवाक्यत्वं न ज्ञायते, तत्र प्रमाणोदाहरणपूर्वकं परापरत्वयोरेकधर्मिनिष्ठत्वसमर्थनात् । अतः स्वरूपसकीर्तनमात्रमेतत् । तथाहि तत्र ब्रह्मविद्याशब्देन ब्रह्मविशेष्यकज्ञानजनकशास्त्रेऽभिहिते प्रकारानिर्देशेन ब्रह्मविशेष्यकं ज्ञानं किं प्रकारकमित्याकाङ्क्षाया अनिवृत्तेः "**अथ परा यया तदक्षरमधिगम्यते**" इत्युक्तम् । तत्र अधिगम्यते इत्यस्य आधिक्येन गम्यते इति तात्पर्यात् ब्रह्मविशेष्यकाधिक्यप्रकारकज्ञानजनकशास्त्र '**पराविद्या**' इत्युच्यते । अत एव छान्दोग्योपनिषदि प्रथमतः "**ओमित्येतदक्षरमुद्गीथमुपासीते**" त्यत्र "**यया तदक्षरमधिगम्यते**" इत्यत्रोक्तस्याक्षरस्य ओङ्कारप्रतिपाद्यत्वम् उद्गीथशब्दप्रतिपाद्यत्व चोपदर्श्य तस्योद्गीथस्य "**स एव रसानां रसतमःपरमःपरार्घ्योऽष्टमो य उद्गीथः**" इत्यनेनाधिकोच्चत्वं सुविशदमुपवर्णितम् । तेन उद्गीथशब्दस्य अधिकोच्चत्वेन गीतः वेदप्रतिपादितः उद्गीतः स एवोद्गीथः इति व्युत्पत्तिः सूचिता । ओमित्यस्य उद्गीथपदसमानार्थकत्वसूचनात् । स्मृत्यन्तरे—

"**अकारेणाधिकं प्रोक्तमुकारेणोच्चमुच्यते ।**
**तथा मितं सर्ववेदैर्मकारेणाभिधीयते ॥**"

इति व्याख्यानाच्च, ओङ्कारस्याप्याधिकोच्चत्वेन सकलवेदप्रतिपाद्य इत्यर्थः । अत एवोङ्कारेण अनन्तार्थप्रतिपादकेन ब्रह्मणः स्वोपदर्शितोत्कृष्टतमत्वसमर्थनाय गुणपूर्णत्वरूपमोतत्व वर्णितम् । क्वचित्तु द्युम्वादिजगतः ब्रह्मण्योतत्वप्रदर्शनेन द्युम्वाद्यायतनत्वं ब्रह्मणः प्रतिपादितम् "**यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः**" "**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव**" इत्यादिश्रुतिस्मृतिवचनेषु ।

तथा ओङ्कारस्यावधातुनिष्पन्नत्वस्य सर्वैरभ्युपगतत्वात्, अवधातोश्च प्रवेशार्थकत्वाद्रक्षणार्थकत्वाच्च, जगत्प्रविष्टार्थकत्व जगद्रक्षकार्थकत्व च मन्तव्यमित्यभिप्रेत्य भगवद्गीतायाम्—"**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः**" इति वाक्येन लोकत्रयप्रविष्टत्वे सति लोकत्रयरक्षकत्वं विष्णुमात्रवृत्तित्वेन सर्वप्रसिद्धं लक्षणमभिधाय जगद्रक्षकत्वादेव सर्वेश्वरत्वं तथा स्वरूपतो देहतो गुणतश्च नाशरहितत्वरूपाव्ययत्वेन रक्षकान्तरनिरपेक्षत्वं चोपवर्ण्य रमाब्रह्मरुद्रादिसकलनियम्यचेतनोत्तमत्वेन कैमुत्यन्यायसिद्धेन रमाद्यभिमन्यमानसकलजडोत्तमत्वेन च प्रवृत्तिनिमित्तेन सर्ववेदेषु तदनुसारिलौकिकप्रमाणेषु च "**पुरुषोत्तम–**" नाम्ना अन्वर्थेकेन प्रसिद्धत्वं श्रीकृष्णेन स्वात्मनोऽभिहितम् ।

अनेन व्याहृतीनामपि सर्वलोकमहेश्वरत्व सर्वलोकप्रविष्टत्वे सति सर्वलोक-रक्षकत्वमर्थः सूचितः । अत एव बृहदारण्यके भूःशब्दस्य भगवच्छिरोवाचकत्वं भुवः शब्दस्य बाहुवाचकत्वं । सुवः शब्दस्य पादवाचकत्वं चोपदर्श्य उपलक्षणया सर्वावयवद्वारा सर्वरक्षकत्वं विवृतम् । तथा—

**" वासुदेवस्वरूपं तदकारेणोच्यते बुधैः ॥**
**उकारेण श्रिया देव्या रूपं मुनिभिरुच्यते ।**
**मकारेणोच्यते जीवः पञ्चविंशाक्षरः पुमान् " ॥**

इति पद्मपुराणे । तथा तत्रैवान्यत्र—

**" अकारेणोच्यते विष्णुः श्रीरुकारेण चोच्यते ।**
**मकारेण तयोर्दासाः ब्रह्माद्याः परिकीर्तिताः " ॥**

इत्यादिवचनैः वृद्धहारीतस्मृतिवचनैश्च ओङ्कारव्याख्यानरूपैः " **अस्येशाना जगतो विष्णुपत्नी** ", " **ईश्वरी सर्वभूतानाम्** ", " **यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्** " इत्यादिश्रुतिभिः ब्रह्मरुद्रादि-सर्वजगदीशानत्वजननीत्वादिमहिमशालितया विष्णुपत्नीत्वेन चोपवर्णिताया महा-लक्ष्म्या अपि ईश्वरः उत्तमश्च विष्णुरितिसूचितम् । तदेव ओङ्कारव्याख्यानभूत-व्याहृतिगतसुव इति पदेन भूतिवरार्थकेन विवृतम् । तेन च क्षरशब्दवाच्यब्रह्म-रुद्राद्युत्तमायाः अक्षरशब्दवाच्यायाः लक्ष्म्या अपि उत्तमत्वेन सर्वोत्तमत्व विष्णो-रुपदर्शितम् ओङ्कारेण व्याहृतिमन्त्रेण चेति सिद्धम् ।

गायत्रीमन्त्रेणापि वरेण्यशब्देन " **अतिशयेन वरं वरेण्यम्** " इति व्युत्पत्त्या पुण्डरीकाक्षस्य विष्णोः सर्वोत्तमत्व वर्णितम् ।

तथा पुरुषसूक्तेऽपि " **उतामृतत्वस्येशान** " इत्यादिना मुक्तामुक्तब्रह्मा-दिनियामकत्वमुक्त्वा —

**" एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः "**

इति मन्त्रेण विष्णोरेव सर्वोत्तमत्वमुपपत्तिप्रदर्शनेन विवृतम् । तेन तद्व्या-ख्यानभूतमन्त्रसंहिता च सम्पूर्णा विष्णोः सर्वोत्तमत्वं वर्णयतीति स्फुटमेव । अपि च मन्त्रसंहिताव्याख्यानभूते ऐतरेयब्राह्मणे उपक्रमवाक्य एव मन्त्रसंहिताया ब्राह्मणस्य च रहस्यं संगृहीतम् " **अग्निर्वै देवानामवमो विष्णुः परमः** "

इत्यादिना। तथा केनोपनिषदि देवसेनाग्रगामित्वेनाग्निशब्दवाच्यस्य अग्नेर्दहः तृणदहनसामर्थ्यमपि विष्ण्वधीनम्, नासिक्यवायोस्तृणचालनसामर्थ्यमपि विष्ण्वधीनम् इति दृष्टान्तविधया रमाब्रह्मरुद्रादिसर्वचेतनसामर्थ्यं मदधीनमिति ज्ञापयित्वा विष्णावन्तर्हिते सति—

" **ईश्वराज्ज्ञानमन्विच्छेन्मोक्षमिच्छेज्जनार्दनात्** " इति शङ्कराचार्यकृतव्यासमतसङ्ग्रहोक्तदिशा इन्द्रादिदेवगुरोः " **वैष्णवानां यथा शम्भु** " रिति विष्णुभक्तेषु (छिन्नभक्तेषु) प्राधान्येन परिगणितस्य शम्भोः पत्नी, उमा इन्द्रस्य गुरुपत्नी, साक्षाच्छिष्य देवेन्द्र विष्णोः सर्वोत्तमत्वमुपदिदेश। इन्द्रश्च वायुमग्निं चोपदिदेश। अतः क्रमेण अग्निनोपदिष्टा इतरे देवा विष्णोर्महिमानं व्यजानन्। अत एव मुमुक्षूपास्येषु ब्रह्मज्ञानिषु गुरुषु मुक्तप्राप्येषु देवेषु चाग्नेः पूर्वभावित्वाद् अग्नेरेवात्र निर्देशः। तदपेक्षयाऽधमानामनिर्देशश्चोपपद्यते। तथा च अग्नाविष्ण्वोर्मध्ये नासिक्यवायुदेवेन्द्रपार्वतीरुद्रभारतीमुख्यप्राणसरस्वतीचतुर्मुखरमाः ग्राह्या इति वा देवतातारतम्यवर्णनपरप्रमाणानुसारेणाग्न्यपेक्षयोत्तमत्वेनोक्ताः विष्णुभिन्नाः सर्वेऽपि ग्राह्या इति वा ज्ञेयम्। सर्वथा विष्णोः परमत्व रमाब्रह्मरुद्रेन्द्रादिसर्वचेतनोत्त मत्वरूपमेव न सकुचितामिति तत्त्वम्। " अधिक तु भेदनिर्देशात् " इत्यादिब्रह्मसूत्राण्यपि ब्रह्मविशेष्यकाधिक्यप्रकारकज्ञानजनकत्वरूपपरविद्यात्वलक्षणोपेतानि इति ज्ञेयम्। तत्र-

" **विज्ञेयं परमं ब्रह्म ज्ञापिका परमा श्रुतिः।**
**अनादिनित्या सा तच्च विना तां न स गम्यते॥** "

इति श्रुतिवचनेन ब्रह्मणोऽनादिनित्यत्वेन प्रमेयेषु परमत्वं श्रुतेरनादिनित्यत्वेन प्रमाणेषु परमत्वमुपवर्णितम्।

" **ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः।**
**ता एव परमा विद्या यदा विष्णोस्तु वाचकाः॥** "

इति परमश्रुतौ परमस्य विष्णोर्वाचकत्वेन वेदाना परमप्रमाणत्वमुपदर्शितम्। तत्र एवकारेण वेदभिन्नानां परविद्यात्वनिषेधश्च ज्ञायते। तथाऽप्याचार्यैः अनुव्याख्याने परत्वापरत्वयोर्वैय्यधिकरण्यसूचनात् श्रीमन्न्यायसुधाया तथा व्याख्यानात्, श्रीव्यासराजतीर्थैर्वाक्यार्थचन्द्रिकापरिमलादिटिप्पणीकारैश्च " **परापरशब्दयोर्नीलमनीलं चेत्यादिवद्विरुद्धार्थत्वप्रतीतेश्चे** " त्यादिना परत्वापरत्वयोर्वैय्यधिकरण्यस्योपपादनात्तद्विरोधो दुष्परिहरः।

किञ्च एवंसति द्वे इति द्विशब्दानुपपत्तिः । द्विशब्देन धर्मिगतद्वित्वविवक्षायां '**अनन्ता वै वेदा**' इति वेदानामेवानन्तत्वात्तत्र द्वित्वकथनायोगात् । नापि शते पञ्चाशन्न्यायेन तदुपपत्तिः । शते पञ्चाशन्न्यायेन त्रित्वादिसंख्यानामपि तत्र संभवेन 'तिस्रो विद्या वेदितव्याः; चतस्रोविद्या वेदितव्या' इत्यनुक्त्वा विशिष्य द्वेविद्ये इति कथने नियामकाभावात् । नच द्वित्वकथन यादृच्छिकम् । विद्याद्वित्वस्य "**द्वे विद्ये वेदितव्ये**" इत्यनेन अवश्यज्ञेयत्वविधानात् ।

विद्ये इति द्विवचनेनैव द्वित्वसंख्याबोधनेन द्विशब्दवैयर्थ्यापातेन न्यूनाधिकसंख्याव्यवच्छेदार्थकत्वे वक्तव्ये यादृच्छिकत्वासम्भवाच्च । द्विशब्देन धर्मगतद्वित्वसंख्याप्रतिपाद्यते इत्यंगीकारे तत्र धर्मशब्देन विद्यात्वरूपधर्मविवक्षाया तस्यैकत्वेन द्विवचनायोगः । विद्यात्वव्याप्यधर्माणा विद्यात्वसमानाधिकरणाना वा धर्माणा विवक्षणे तेषा ऋग्वेदत्व--यजुर्वेदत्व--सामवेदत्वादीनामनन्तत्वात् द्विवचनानुपपत्तिरेव । 'शतेपञ्चाशन्न्यायादीना' च नात्रावकाश इति प्रागेवोक्तमिति चेत्; अत्रोच्यते—

**"ब्रह्मा देवानां प्रथमः सबभूव विश्वस्य कर्ता भुवनस्य गोप्ता ।**
**स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ।। १ ।।**
**अथर्वणे यां प्रवदेत ब्रह्मा अथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम् ।**
**स भारद्वाजाय सत्यवहाय प्राह भारद्वाजोङ्गिरसे परावराम् ।। २ ।।**

इति मुण्डकोपनिषदि प्रथममन्त्रेण ब्रह्मविद्यायाः सर्वविद्याप्रतिष्ठात्वमुक्तम् । द्वितीयमन्त्रेण च परावररूपत्वमुपदर्शितम् । तदुत्तरम्—

**"शौनको ह वै महाशालोङ्गिरस विधिवदुपसन्नः पप्रच्छ ।**
**कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ।। ३ ।।**
**तस्मै स होवाच द्वे विद्ये वेदितव्ये इति हस्म यद्ब्रह्मविदो**
**वदन्ति परा चैवा परा च" ।। ४ ।।**

इति मन्त्रावुक्तौ । तत्र तृतीयमन्त्रेण आख्यायिकाकथनद्वारा ब्रह्मविद्यायाः सर्वविद्याप्रतिष्ठारूपत्वमुक्तप्रथममन्त्रोक्तं विशदीकृतम् । चतुर्थमन्त्रेण च द्वितीयमन्त्रोक्तं परावरविद्यात्वं विशदीकृतं विभागकथनेन । अतः '**द्वे विद्ये वेदितव्ये**' इति वाक्यं परावरब्रह्मविद्याविभागपरमेव । अत एव द्वे विद्ये इत्यत्र विद्याशब्दः

न विद्यासामान्यपरः वेदतत्सम्बन्धिभिन्नविद्यानां ब्रह्मविद्भिः वेदितव्यत्वकथनायोगात् । किं तु ब्रह्मविद्याऽपरपर्याया परावरविद्यैव । तथा च सर्वविद्याप्रतिष्ठारूपा परावरा ब्रह्मविद्या द्विविधा परा चैवाऽपरा चेति विभागवाक्यस्वरूपलाभः । पृथिवी द्विविधा नित्याऽनित्या चेत्यादिवत् । तत्र विभाजकधर्मपरवाक्ये प्रकारार्थकेतिशब्दाध्याहारनियमेन पृथिवीविभागवाक्ये पृथिवी नित्या इति अनित्या इति च द्विविधा इतिवत् प्रकृतेऽपि परावरब्रह्मविद्या परैवेति अपराचेति च द्विविधा इति विभागवाक्यस्य निष्कृष्टस्वरूपं बोध्यम् ।

यथाश्रुत समुच्चयावधारणरूप-विरुद्धार्थक--चकारैवकारयोरेकत्र प्रयोगे वाक्याप्रामाण्यापत्तेः ।

तत्र '**परैव इति**' इति वाक्येन अपरत्वासमानाधिकरणपरत्वाश्रयविद्यात्वमेको विभाजकधर्मः प्रतिपाद्यते; पृथिवीविभागवाक्ये नित्यपृथिवीत्वरूपविभाजकधर्मवत् । अपरा चेत्यत्र समुच्चयार्थक-च-शब्दवशात् परत्वसमानाधिकरणापराविद्यात्वरूपः द्वितीयो विभाजकधर्मः ज्ञायते । पराचैवेत्यत उद्धृतेनान्ते योजितेन चशब्देन विभाजकधर्मनिष्ठं परस्परविरुद्धत्वं, पृथिवी द्विविधा नित्याऽनित्या चेत्यादाविव बोध्यते । तथा चात्राऽपि, इतरविभागवाक्यवत्परापरब्रह्मविद्यात्वव्यापक -- परावरब्रह्मविद्यात्वव्याप्यपरत्वसमानाधिकरणापरत्वविशिष्टविद्यात्वविरुध्दाऽपरत्वासमानाधिकरण-परत्वविशिष्टविद्यात्व---अपरत्वासमानाधिकरणपरत्वविशिष्टविद्यात्वविरुद्धपरत्व—समानाधिकरणा--परत्वविशिष्टविद्यात्वान्यतराभिन्नद्वित्वसङ्ख्यापर्याप्त्यधिकरणविभाजकधर्मान्यतरवती परावरब्रह्मविद्येति विभागवाक्यजन्यबोधो बोध्यः । सचाबाधित एवेति न विभागवाक्यप्रामाण्यानुपपत्तिरिति ।

नन्वेवं सति अपरत्वासमानाधिकरणपरत्वविशिष्टविद्याया अप्रसिद्धत्वादुक्तविभागानुपपत्तिरेव । ऋग्वेदादिपदैरुपनिषदामपि ग्रहणात्तेषामप्यपरविद्यात्वोक्तेः ऋग्वेदादीतराविद्याया अपरविद्यात्वस्य सुप्रसिद्धत्वात् ।

न च न्यायसुधा--परिमलकारैः—

**"ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः ।**
**ता एव परमा विद्या यदा विष्णोस्तु वाचकाः"**

इति परमश्रुतिव्याख्यानावसरे "**ऋगाद्या**" **इत्यस्य उपनिषदतिरिक्तमन्त्रब्राह्मणात्मकवेदभागमात्रपरत्वं वक्तव्यम्; उपनिषदामपरवस्तुबोधकत्वाभावेनापरत्व-**

स्यासभवात्। अत एव **आरण्यकमावर्तयेत्, आरण्यकमावर्तये**दिति मन्त्रब्राह्मणव्यतिरेकेणोपनिषदामेवावर्तनविधानमुपपद्यते। तथा श्रीमदाचार्योदाहृतम् '**आरण्यकेष्वृते विष्णुं नैवान्यत्किञ्चिदुच्यते**' इत्यादिस्मृतिवचनं चोपपद्यते।" इत्युपपादनादपरत्वासमानाधिकरण--परत्वविशिष्टविद्यात्वमुपनिषदामेवोच्यते। अतो नाऽप्रसिद्धिरिति वाच्यम्।

मुण्डकोपनिषदि '**तत्रापरा ऋग्वेदो यजुर्वेद**' इत्यादिना ऋग्वेदपदगृहीतानामुपनिषदामपरत्वकथनात्तद्विरोधः। ब्राह्मणपरिव्राजकन्यायेन '**ऋग्वेदो यजुर्वेद**' इत्यत्रापि ऋग्वेदपदस्य '**ऋगाद्या अपरा विद्या**' इत्यत्र परिमलाचार्योपदर्शितदिशा उपनिषदातिरिक्तमन्त्रब्राह्मणपरत्वाङ्गीकारे "**ब्राह्मणपरिव्राजकन्यायस्त्वागतिकागतिः**" इति न्यायसुधोपदर्शितयुक्तिविरोध इतिचेन्न।

परिमलाचार्यैरुपनिषदां '**ऋगाद्या अपरा विद्ये**' ति वाक्यव्याख्यानावसरेऽपरविद्यात्वं निषिद्धं सुधानुसारेण। '**तत्रापरा ऋग्वेदो यजुर्वेद**' इत्यादि मुण्डकव्याख्यानावसरे अपरविद्यात्वं विहितम्। न च तेषां महात्मनां व्याहतभाषित्वं संभावितम्। अतः विहितमपरत्वमन्यत्, निषिद्धमपरत्वं चान्यदित्यङ्गीकार्यम्। तत्र निषिद्धमपरत्वं कर्मादिरूपापरवस्तुबोधकत्वम्, विहितमपरत्वं च विद्यान्तरावधिकापकर्षाश्रयत्वरूपम्।

इत्थं चोपनिषदामप्यवरत्वोक्तेः अपरत्वासमानाधिकरणपरत्वस्य तत्रासंभवात्तादृशविद्याया एवाप्रसिद्धत्वाद्विभागानुपपत्तिस्तदवस्थैवेति चेन्न। "**परं जैमिनिर्मुख्यत्वा**" दिति सूत्रभाष्ये शंकराचार्यैः "**स एनान् ब्रह्म गमयती**" **त्यत्र ब्रह्मशब्दालम्बनं किं परं ब्रह्मोतापरं ब्रह्मेति विचारे' 'परं हि ब्रह्म ब्रह्मशब्दस्य मुख्यमालम्बनम् गौणमपरम्। मुख्यगौणयोश्च मुख्ये संप्रत्ययो भवति**" इति वाक्ये।

अ. सुधाकृता च (१२० पत्रे) "न चात्र सूत्रम् 'अथातो गुणपूर्णं ब्रह्मजिज्ञासे' ति। केवलमत्रब्रह्मशब्दप्रयोगान्निर्विशेषं ब्रह्मैव जिज्ञास्यमिति प्रतीयते" इत्यादिना सविशेषस्यापरत्वं निर्विशेषस्य परत्वं च स्वयं परिकल्प्य केवलस्य निरुपपदस्य ब्रह्मशब्दस्य परब्रह्मपरत्वमुक्तम्। निषिद्धं च न्यायसुधाकारोपदर्शितं निरुपपदसूत्रशब्दस्य मुख्यभूतब्रह्मसूत्रपरत्वमिति तु

तेषां व्याहतभाषणस्वभावानुगुणमेवेत्यन्यदेतत् । तथाच निरुपपदाना शब्दानां स्वप्रतिपाद्यार्थावधिकापकर्षानाश्रयस्वार्थबोधकत्वमित्यविवादमेव ।

इत्थ च "**तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया**" इत्यत्र निरुपपद-कर्मशब्दस्य मुख्य कर्मेत्यर्थः । विद्याशब्दस्यापि मुख्यविद्येत्यर्थः । तेन च मुख्यकर्मणः हरिप्रीतिहेतुकर्मत्व लक्षणम् । मुख्यविद्यायाः परविद्यायाः हरिमति-हेतुविद्यात्व लक्षणमित्युक्त भवति । मतिशब्दस्य "**आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य**" इति श्रुत्यनुसारेण "**शृणुयाद्यावदज्ञानं मतिर्यावदयुक्तते**" तिस्मृत्यनुसारेण मननमर्थः । मनन च वेदार्थनिर्णायकयुक्त्य-नुसन्धानमित्यविप्रतिपन्नम् । तथा च हरिविशेष्यक—श्रौतपदशक्तितात्पर्यवि-षयत्वप्रकारकानुमितिजनकयुक्त्यनुसन्धानप्रयोजकशास्त्र परविद्याशब्दार्थः । ब्रह्मविद्या—ब्रह्मसूत्रशब्दयोरप्ययमेवार्थः ।

तथा 'शारीरकमीनासे' त्यत्र शारीरकपदेन—"**शारीरौ तावुभौ ज्ञेयौ जीवश्च परमस्तथा । अनादिबन्धनस्त्वेको नित्यमुक्तस्तथाऽपर**" इति नारदपुराणानुसारेण सर्वजीवनियामकतया सर्वजीवहृदयस्थत्वेऽपि पूर्णसुखरूपं परब्रह्मैवोच्यते । तस्यैव "**प्राणो ब्रह्म कं ब्रह्मे**" ति कशब्दप्रतिपाद्यत्वात् ब्रह्ममीमांसा—शारीरकमीमासाशब्दयोरेकार्थत्व बोध्यम् ।

इत्थं च "**शारीरको जीवः तमधिकृत्य कृतोऽयं ग्रन्थः शारीरक**" इति व्याख्यान तदुपपादनपरा अ. सुधाऽपि परास्ता वेदितव्या; "**जन्माद्यस्य यतः**" "**भेदव्यपदेशाच्चान्य**" इत्यादिसूत्रैः सर्वत्र जीवभिन्न ब्रह्मण एव मीमासितत्वस्यानुपदमेवोपदर्शितत्वात् ।

नन्वेव ब्रह्मसूत्राणा परविद्यात्वोपपादनेऽपि तेषा केवलपरविद्यात्वेन पराव-रत्वासंभवात्सामान्यधर्माभावेन अपरत्वासमानाधिकरणपरत्ववद्विद्यात्वरूपधर्मस्य सामान्यधर्मव्याप्यत्वाभावेन कथं विभाजकधर्मत्वोपपत्तिरिति चेदित्थम् — परावरशब्दो हि परा च सा अवरा चेति कर्मधारयत्वेनरूपेण परत्वसमानाधि-करणापरत्वरूप--परावरत्वबोधकः । पराः अवराः यस्याः सा इति बहुव्रीहित्वेन स्वभिन्न परविद्यात्वव्यापकापकर्षाबाधित्वरूप--परावरत्वबोधकः । एतादृशपरावर-त्वद्वयान्यतरवत्वं च सामान्यधर्मः । तव्द्याप्यत्वं चोक्तविभाजकधर्मयोर्द्वयोरप्य स्त्येव; बहुव्रीहिबोध्यार्थस्य ब्रह्ममीमांसाया कर्मधारयबोध्यार्थस्य ऋग्वेदादौ सत्वात्

इत्थं च " द्वे विद्ये वेदितव्ये परा चैवापरा च " त्यस्य विभागवाक्यत्व-मुपपन्नतरामिति स्थितम् ।

अत्र केचित् परविद्यात्वं हि अपकर्षानाश्रयप्रमाणत्वम् । ब्रह्ममीमांसायास्तु प्रमाणसहकारित्वमेव । न प्रमाणत्वम्; चक्षुरिन्द्रियसहकार्यालोकवत् । तथा च प्रमाणत्वस्यैवाभावेन अपकर्षानाश्रयप्रमाणत्वं तु दूरनिरस्तमिति वदन्ति तत्तु अज्ञानमूलकम् ।

तथा हि मीमांसाशास्त्रं हि परार्थानुमानरूपन्यायवाक्यरूपम् । न्याय-वाक्यं तु मतभेदेन परामर्शात्मकं शाब्दप्रमाकरणं परामर्शप्रयोजकं शाब्दप्रमाकरणं वा भवत्येव । अन्यथा परार्थानुमानमात्रोच्छेदप्रसंगः । ब्रह्मजिज्ञासा कर्तव्येति प्रति-ज्ञावाक्येन ब्रह्मजिज्ञासाविशेष्यककर्तव्यत्वावच्छिन्नप्रकारताक-शाब्दबोधरूपप्रमायाः जननेन, एवमेवतत्तदवयवैः स्वस्वार्थबोधजननेन, वेदान्तसिद्धान्ते पञ्चावयवनिय-माभावेन प्रतिज्ञाहेतुभ्यामेव मोक्षफलकत्वज्ञाप्यकर्तव्यतावदभिन्ना ब्रह्मजिज्ञासेति विशिष्टशाब्दप्रमासंभवेन प्रामाण्यावश्यंभावात् ।

न च ब्रह्मजिज्ञासा कर्तव्येति ज्ञानं न प्रमा । तथात्वे ब्रह्मजिज्ञासा कर्तव्या न वेति संशयस्य न कर्तव्येति विप्रतिपत्तेश्चानिवृत्तिप्रसङ्गात् । न च ब्रह्मविशेष्यक-प्रमाजनकत्वं प्रामाण्यं; तच्च न ब्रह्ममीमांसाया इति वाच्यम् । ' विश्वं ' सत्य मित्यादिश्रुतीनां घटादिप्रत्यक्षं हेतुभूतचक्षुरादीनामप्रामाण्यापातात् । ब्रह्मविशे-ष्यक--श्रोतपदशक्ति तात्पर्यविषयत्वप्रकारकबोधस्य ब्रह्ममीमांसाजन्यत्वेन तस्य च प्रमात्वेन, ब्रह्ममीमांसायाश्च तादृशशाब्दप्रमाकरणत्वेन ब्रह्मविषयकप्रमाजनकत्वरूप प्रामाण्यस्याप्यावश्यकत्वात् । बृहत्तन्त्रप्रमाणानुसारेण वासुदेवादिभगवत्स्वरूप— तन्माहात्म्यप्रतिपादकत्वस्याप्यपलपितुमशक्यत्वात् ' सा विद्या तन्मतिर्यया ' स्मृतिसिद्धयुक्त्यनुसन्धानात्मक—मननप्रयोजकविद्यात्वस्य ब्रह्ममीमांसायामपन्होतु मशक्यत्वाच्च; अत, ' ब्रह्ममीमांसायाः प्रामाण्यमेव नास्ति किमुतानुत्तमप्रामाण्य-मित्यादिकथनं दुराग्रहविलसितमेव ।

इदमप्यत्रानुसन्धेयम्—" **वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगा-द्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोकेऽषु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे** "इति परविद्याज्ञानफलवर्णनप्रसङ्गे मोक्षहेतुभूतनिश्चयः फलत्वेन सूचितः । स च प्रमाणानां प्राबल्यदौर्बल्यनिश्चयाधीनः । उपक्रमोपसंहारादीनां श्रुत्यादीनां च

प्राबल्यदौर्बल्यानिश्चये वेदतात्पर्यानिश्चयेन तत्त्वानिश्चयायोगात् । प्राबल्यदौर्बल्यनिश्चयश्च परत्वापरत्वरूपोत्कर्षापकर्षनिश्चयाधीनः । यद्यप्युत्कर्षः अपौरुषेयत्व प्रयुक्तः अनुग्राहकत्वप्रयुक्तश्चेति द्वेधा सम्भवति । तत्रापौरुषेयत्वप्रयुक्तोत्कर्षस्तु न प्राबल्यदौर्बल्यनिर्णयायोपयुज्यते । उपक्रमादीनां सर्वेषामप्यपौरुषेयत्वेन तस्य प्रबलदुर्बलोभयसाधारण्येनप्राबल्यदौर्बल्यानिश्चायकत्वात् । तथापि अनुग्राहकत्वप्रयोज्य परत्वरूपोत्कर्ष एव प्राबल्यप्रयोजको निरपवादः । अत एव श्रीमदाचार्यैः "**श्रुति मूलतये**" त्यनेन श्रुतिव्याख्यानत्वरूपनिर्णायकत्वेन परमप्रामाण्यमुपदर्शितम् । श्रीमन्न्यायसुधाकारैरपि "**सम्भवति त्वस्य परत्वमनुग्राहकत्वा**" दित्यादिना तदेवोपपादितम् ।

तथा च व्याख्यानत्वा—नुग्राहकत्व—निर्णायकत्वरूपाऽनतिभिन्नार्थरूप धर्मप्रयोज्योत्कर्षरूप परत्वमेव प्राबल्यप्रयोजकम् । प्राबल्यं च प्रमाणान्तरानिष्ठार्थान्तरपरत्वप्रयोजकविरोधप्रतियोगित्वरूपम् । तथा च श्रुतिसूत्रयोर्विरोधे किं सूत्रविरोधेन श्रुतीनानर्थान्तरपरत्वमुत श्रुतिविरोधेन सूत्राणामर्थान्तरपरत्व वाच्यमिति संशयपरिहारार्थमेव ब्रह्मसूत्राणा ऋगादिनिर्णयग्रन्थापेक्षया परत्व मुक्तम् । तादृशपरत्वे च "**वेदोक्तरूपोऽनुपचारतश्चे**" ति श्रुतौ तच्छब्दव्याख्यानात्, श्रौतपदशक्तितात्पर्यविषयत्वाविशिष्टाक्षराधिगतिकरणत्वस्य वेदानुग्राहकत्वस्य प्रयोजकत्वमुक्तम् । एतदभिप्रेत्यब्रह्मवैवर्ते—

" **ब्रह्मसूत्रानुसारेण वेदाद्यं सर्वमेव हि ।**
**योज्य न ब्रह्मसूत्राणि दृश्यमानार्थतोऽन्यथे** " ति

ब्रह्मसूत्राणा प्राबल्य निर्णयानां सर्वेषा वेदादीना ब्रह्मसूत्रविरोधप्रयुक्तार्थान्तरपरत्वरूपं दौर्बल्यं चोपवर्णितम् । व्याख्यानशब्देन व्याख्येयतदितर-सजातीय ग्रन्थाध्ययनाप्रयोज्य व्याख्यानत्व विवक्षितम् । तच्चोपसहारादिरूप—वेदैकदेशात्मकव्याख्याननिष्ट स्वतःसर्वज्ञेश्वरकृतव्याख्याननिष्ठ च, अत नानीश्वरकृतव्याख्यानेषु स्वव्याख्येयापेक्षया प्राबल्यादिशङ्कावकाशः ।

एव सति—

" **ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकः ।**
**ता एव परमा विद्या यदा विष्णोस्तु वाचकाः** "

इति परमसंहितावचनेन; उपनिषदां ब्रह्मसूत्राणा च परविद्यात्व न लभ्यते =न प्रतिपाद्यते इति चेत् । मास्तु, अनेन वचनेन प्रतिपादित पृथक् प्रामाण्यम् =अधमप्रामाण्यम् । तस्योपनिषत्सु ब्रह्मसूत्रेषु चानभ्युपगमादिति श्रीमन्न्याय-सुधाचार्याणा टिप्पणीकाराणा चाशयो बोध्यः ।

पृथक् प्रामाण्य द्वेधा, अपरवस्तुबोधकत्व विशिष्टपरवस्तुबोधकत्वरूपम् अनुग्राहकत्वासमानाधिकरणपरवस्तुबोधकत्वरूपचेति । तत्र प्रथममुपनिषव्द्यावृत्त तदितरऋगादिमात्रवृत्ति । द्वितीय चोपनिषत्सु वर्तत एव । ब्रह्मसूत्रेषु तु नोभयविधमपि पृथक् प्रामाण्यम् । अतः एवविधविशेषसूचनार्थमेव तेषा कण्ठरवेणात्र ग्रहणं कृतमिति विवेचनीयम् ।

अ. सुधाकारास्तु न्यायचन्द्रिकाभूमिकायाम्; " उपनिषदपेक्षया ब्रह्म-मीमासाशास्त्रमुत्तम--मितिकर्तव्यतात्वेऽपि ब्रह्ममीमासायाः " इति वाक्येन; अ. सुधाभूमिकाया च " उपनिषदर्थनिर्णायकतामात्रेण उत्तमशास्त्रत्वेत्वद्वैतिनो न विप्रतिपद्यन्ते " इति वाक्येन ब्रह्ममीमासाया उपनिषदपेक्षया उत्तमत्व स्वय वर्णयित्वा " ब्रह्ममीमासाया एवानुग्राहिकाया उत्तमत्वे तु विप्रातिपद्यन्त " इति स्वव्याघातमविगणय्य किमपि कथयन्ति । तत्तेषा भूषणमेव ।

एवमेव " क्वचित्सूत्राणा गुणत्वोल्लेखस्तु; असन्दिग्धवेदवाक्यापेक्षयेति तत्त्व " मिति तेषां कथनमपि व्याहतमेव । विषयवाक्यतया सन्दिग्धार्थकानन्दमय श्रुत्यपेक्षया " **आनन्दमयोऽभ्यासा** " दिति सूत्रस्य गौणताया अद्वैतिभिरङ्गीकारात् अ. सुधाकारास्तु केषु चिद्ग्रन्थेषु " **अथातोब्रह्मजिज्ञासे** " त्यत्र अब्रह्मजि. ज्ञासेति पदच्छेद विधाय " **तद्विजिज्ञासस्व तद्ब्रह्मे** " ति श्रुतिविरोध शाकर-भाष्यादिविरोधमप्यविगणय्य यथेच्छ सूत्रार्थ वर्णयन्ति । तत्कृते च ' नमस्तेषामपूर्व व्याख्यानकौशलायेत्येवोत्तरम् ' विदुषां नोत्तरं वाच्यमिति प्राभाकरगुरूक्तेः । इत्यलमेतेन ।

केनोपनिषदि " **तस्यै तपो दमः कर्मेति प्रतिष्ठा** " इत्युक्त्वा " **वेदाः सर्वाङ्गानि सत्यमायतन** " मिति वाक्येन विद्यायतनं = विद्यास्थान प्रमाण-शास्त्र वर्णितम् । तत्र आथर्वणोपनिषदि वेदाना वेदाङ्गानां चापराविद्यात्वं वर्ण-यित्वा सत्यशब्दबोध्यस्य ' **अथ परे** 'ति परविद्याशब्देनोल्लेखं विधाय " **परीक्ष्य लोकान् कर्मचिता** " नित्यादिना ब्रह्मविद्याऽधिकारिण च वर्णयित्वा ' **तस्मा**

**अधिकारिणे गुरुणा तत्त्वतः ब्रह्मविद्या प्रोक्ते** "ति वर्णितम् । श्रीमदानन्द-तीर्थभगवत्पादप्रभृतिभिः सर्वैरपि भाष्यकारैः ब्रह्ममीमांसाध्ययनाधिकारिस्वरूप-प्रदर्शनाय '**परीक्ष्य लोकान् कर्मचिता**' निति श्रुतिरेवोपन्यस्ता । अत एत-द्वाक्योपदर्शितोऽधिकारी ब्रह्ममीमांसाध्ययनाधिकारी एव विवक्षितः । तस्मै प्रोक्ता ब्रह्मविद्या ब्रह्ममीमासाशास्त्ररूपैव । '**तत्त्वत**' इति विशेषणेन तस्याः अपकर्षोऽन-धिकरणविद्यात्वरूपं परत्वमेव बोध्यते । अतएव तस्याः "**येनाक्षर पुरुष वेद सत्य**" मिति सत्यशब्देनोल्लेख इति कथनमपि नाप्रासङ्गिकम् । सत्यशब्दार्थत्वं च ब्रह्ममीमासायाः—

"**निर्णीयते यतः सम्यगिदं सत्यमिति स्फुटम् ।**
**श्रुतिस्मृत्युदित सर्वं व्यक्तं मीमांसयैतया ॥**
**सत्यमित्युच्यते तस्मान्मीमांसा ब्रह्मनिश्चया** "
इति शब्दनिर्णयवचनेन समर्थितं भाष्यकारैः ।
एतेन "**सत्यं सत्य पुनः सत्यमुद्धृत्यभुजमुच्यते ॥**
**वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम् ॥**

इत्यादिवचनान्यपि व्याख्यातानि । तत्र वेदशास्त्रशब्दः षष्ठीतत्पुरुषरूपः । अन्यथा शास्त्रशब्दवैय्यर्थ्य स्यात् । वेदशब्देन च परमात्मप्रतिपादकसकलनिर्णयग्रन्थजात-मुच्यते । षष्ठी । निर्णायकत्वरूपसम्बन्धमाचष्टे । तेन वेदपुराणेतिहाससकलग्रन्थार्थ-निर्णायकं ब्रह्ममीमासाशास्त्रं वेदशास्त्रशब्देन प्रतिपाद्यते । तस्यैव सकलशास्त्रोत्तमत्वम्। पर नास्तीत्यनेन उत्तमशास्त्रनिषेधद्वारा तदुत्तमत्वं बोध्यते इति ।

अतः ब्रह्मसूत्राणां प्रतीयमानार्थभिन्नार्थपरत्वकल्पन वेदविरुद्धं वेदव्यासवि-रुद्ध च । तत एव वेद-वेदव्यासमतविरुद्धं सूत्रभाष्यं हेयमिति प्रदर्शयितुमेव श्रुत्यादिसिद्ध ब्रह्मसूत्राणां परविद्यात्व प्रथमत उपपादित--मनुव्याख्यान--सुधा-त-ट्टिप्पण्यादाविति परमार्थः । **इति परापरविद्यानिर्णयः तत्प्रयोजनं च ।**

**जीवव्यतिरिक्तेश्वरसिद्धिः ।**

एतावता प्रबन्धेन जीवापेक्षया उत्तमत्वस्य जीवभेद विना अनुपपत्त्या उपदर्शितपरविद्ययैव सर्वजीवजडोत्तमस्य विष्णोः यथा सिद्धिस्तथैव सकलजीवजड-भिन्नस्यापि सर्वेश्वरस्यविष्णोः सिद्धिरपि निष्प्रत्यूहा । उपदर्शितमेतत् पूर्वतनप्रबन्धे प्रसङ्गात्तत्र तत्र विवेचनेन । अथेदानीं जीवत्वेश्वरत्वोपलक्षितैक्यवादनिरासायो-पोद्घातप्रक्रियया जीवव्यतिरिक्तेश्वरसमर्थनं क्रियते । तथाहि

**' जगद्व्यापारवर्जम् ' ' प्रकरणात् ' ' असन्निहितत्वाच्च "**
इत्यत्र जगदुत्पत्त्यादिव्यापार वर्जयित्वा अन्यदणिमाद्यैश्वर्य मुक्ताना भवितुमर्हति । जगद्व्यापारस्तु नित्य सिद्धस्यैवेश्वरस्य । कुतः; तस्य तत्र प्रकृतत्वात् । असन्निहितत्वाच्चेतरेषाम् । पर एव हीश्वरः जगद्व्यापारेऽधिकृतः तमेव प्रकृत्य उत्पत्त्युपदेशात् । नित्यशब्दनिबन्धनत्वाच्च परमेश्वराकूततन्त्रत्वमितरेषाम्' (ब्र.भा.) तथा ' किं च ईश्वरस्य नित्यसिद्धत्वाच्छब्दैः समधिगम्यत्वाच्च जगत्स्रष्टृत्वमुक्त न तु तत्प्रसादलब्धविधिकाना जीवानामित्याह नित्येति ' ( इति रत्नप्रभा. )

एव **' प्रकृतिं पुरुषं चैव विध्यनादी उभावपि '** ( इति गीताशाकरभाष्ये ) **"नित्येश्वरत्वादीश्वरस्य तत्प्रकृत्योरपि युक्तं नित्यत्वेन भवितुम् "** इति वाक्येन ईश्वरत्वनियम्यत्वादिधर्माणा नित्यत्वाभिधानात् ।

सति चैवं ' जीवेश्वरैक्यं जीवेश्वरत्वाविवक्षया इत्युक्तिरयुक्ता । अविवक्षा हि द्वेधा भवति । धर्मिणि विद्यमानस्यापि धर्मस्य प्रयोजनाभावेनाविवक्षा; धर्मिण्यविद्यमानस्य धर्माभिमतस्यासत्त्वादेवाविवक्षा इति । तत्राद्ये धर्मस्य विद्यमानत्वेऽस्मदीयतदविवक्षामात्रेण धर्मिणोरैक्यादर्शनान्न जीवेश्वरैक्यासिद्धिः । ईश्वरत्वादीनां धर्मिण्यविद्यमानत्वेनासत्त्वाद विवक्षेति कथनं तु सर्वथाऽनुपपन्नम् । उपदर्शितसूत्रगीतातद्भाष्येषु ईश्वरत्वादीना नित्यत्वाभिधानात् ।

**' सत्यधर्मपराक्रम '** इति नाम्ना ' सत्याः अवितथाः धर्माः ज्ञानादयो गुणाः पराक्रमश्च यस्य स सत्यधर्मपराक्रम ' इति भगवद्धर्माणामवितथत्वरूपमिथ्यात्वाभावस्य स्फुटमभिधानात् ।

**' सत्यधर्माय ' ' एष नित्यो महिमा ब्राह्मणस्य ' ' सत्यः सो अस्य महिमा ' ' परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे '** त्यादिश्रुतिभिः भगवन्महिम्नो जीवव्यावृत्तस्य स्वाभाविकत्व—नित्यत्व—सत्यत्वानामभिधानात् । इत्थं च व्यावर्तकधर्माणां स्वाभाविकत्वे नित्यत्वे च सिद्धे तत्साध्यव्यावृत्तेः=भेदस्यापि स्वाभाविकत्वं नित्यत्वं च सिद्धमेव । अङ्गीकृतश्च अ. सुधाकृता जीवेश्वरभेदः । " जीवत्वेन ईश्वरत्वेन च जीवेश्वरभेदेऽपि " " जीवत्वेश्वरत्वाविशिष्टैक्याभावेऽपि " " यत्र तदङ्गीकारेऽपी " त्यादिना एवस्थितेऽपि " यदुच्यते तदुपलक्षितरूपेण तदैक्यम् " " जीवेश्वरैक्यं जीवत्वेश्वरत्वाविवक्षया " ' तदुपलक्षितस्वरूपैक्यपरता समर्थनम् "

इत्यादि तदयुक्तम्, तत्र जीवत्वेश्वरत्वादिधर्मा न विकल्पसहेति प्रागुक्तमेव तदुपलक्षितस्वरूपेण तदैक्यमिति तु व्याहततरम्। अद्वैतसिद्धौ "येन च स्वोपरागमुदासीनं कुर्वता विशेष्यगतव्यावर्तकधर्मोपस्थापनेन व्यावृत्तिबुद्धिर्जन्यते तदुपलक्षणम् यथा काकादि" इति। लघुचन्द्रिकायां च "उदासीनं कुर्वतेत्यस्य विवेचनं विशेष्येत्यादि" "व्यावर्तकेति व्यावृत्तिव्याप्येत्यर्थः" इति।

उपलक्षणस्यापि व्यावर्तकधर्मोपस्थापकत्वोक्तेः "व्यावर्तकत्वं च व्यावृत्तिधीजनकधीविषयत्वं" इत्यद्वैतसिद्धावेवोक्तम्। तथा उपलक्षितशब्दस्यापि येन धर्मेणोपलक्षितमुच्यते अविद्यमानेन तेन तच्छून्याद्व्यावर्तितमुपलक्षितशब्दार्थः इति लघुचन्द्रिकाया संसूचितम्। तद्व्याख्याया च तच्छून्याद्व्यावर्तितः--प्रकारीभूततच्छून्याविषयकधीविषयीकृतः लिङ्गीभूततच्छून्यभिन्नत्वेन ज्ञापितो वा इति व्याख्यातम्। तथा चाद्वैतसिद्धिलघुचन्द्रिकातद्व्याख्याकाराणा मते "जीवत्वोपलक्षितस्वरूपम्" इत्यस्य यदि लघुचन्द्रिकाव्याख्यागतप्रथमपक्षानुसारेण जीवत्वशून्याविषयकधीविषयीकृतं स्वरूपमित्यर्थः, तर्हि जीवस्वरूपस्य जीवत्वशून्यत्वे-जीवस्वरूपे जीवत्वस्याविद्यमानत्वे मिथ्यात्वे वा तस्य जीवत्वशून्यविषयकधीविषयत्वमेव स्यात्। अतः जीवस्वरूपं जीवत्वशून्यं नैव भवति। एवमेव ईश्वरत्वोपलक्षितं स्वरूपमित्यत्रापि ज्ञेयम्।

एतेन जीवत्वं जीवे स्वाभाविकं--नित्यपारमार्थिकं च सिध्यति तथा ईश्वरत्वमपि ईश्वरे स्वाभाविकं--नित्यं--पारमार्थिकमिति च सिद्ध्यति। तथा च स्वाभाविकविरुद्धधर्मवतोः जीवेश्वरस्वरूपयोरैक्यकथनं व्याहतमेव। अत्र धर्मस्याविद्यमानत्वकथने तच्छून्य, तच्छून्याविषयकप्रतीतिविषयः इति उपलक्षितशब्दार्थः सम्पद्यते। स च व्याहत एवेत्यन्यदेतत्।

द्वितीयपक्षानुसरणे लिङ्गीभूततच्छून्याभिन्नत्वेन ज्ञापितम् इत्युक्त्या जीवत्वोपलक्षितस्वरूपमित्यस्य जीवत्वशून्येश्वरस्वरूपभिन्नत्वेन ज्ञापितं स्वरूपमित्यर्थः सम्पद्यते तथैवेश्वरत्वोपलक्षितस्वरूपमित्यस्यापि ईश्वरत्वशून्यजीवस्वरूपभिन्नत्वेन-ज्ञापितमित्यर्थः। अद्वैतसिद्धिगतोपलक्षणलक्षणवाक्यानुसारेण च जीवत्वोपलक्षितमित्यस्य जीवत्वोपस्थाप्यव्यावृत्तिव्याप्यधर्मान्तरज्ञानजन्यव्यावृत्तिप्रकारकज्ञानविशेष्य इत्यर्थः। एवमेवेश्वरत्वोपलक्षित इत्यस्यापि ईश्वरत्वोपस्थाप्यव्यावृत्तिव्याप्यधर्मान्तरज्ञानजन्यव्यावृत्तिप्रकारकज्ञानविशेष्य इत्यर्थः।

व्यावृत्तिश्च भेद एव स च जीवस्वरूपविशेष्यकज्ञाने भासमानः ईश्वरस्वरूपप्रतियोगिकः ईश्वरस्वरूपविशेष्यकज्ञाने भासमानश्च जीवस्वरूपप्रतियोगिकः।

तथा च व्याप्यवत्वप्रमाप्रमितभेदविशिष्टे ऐक्यकथनम् अद्वैतप्रक्रियानुसारेणैव व्याहतम् ।

इत्थं च यथा विशिष्टयोः विशेषणव्यावर्तितयोः नैक्यसंभवः किन्तु भेद एव तथा उपलक्षणव्यावर्तितयोरपि नैक्यसम्भावनाऽपि, किन्तु भेद एव । अतः अद्वैतप्रक्रियानुसारेणापि जीवव्यतरिक्तेश्वरासिद्धिरिति स्थितम् ।

**इति जीवव्यतिरिक्तेश्वरसिद्धिः।**

**ज्ञानस्येश्वरप्रसादद्वारैव मुक्तिहेतुत्वम् ।**

मुक्तिस्तु अज्ञानतत्कार्यदुःखनिवृत्तिरूपा स्वरूपसुखानुभवरूपा नित्यलोकावाप्तिरूपा विष्ण्वाख्येश्वरापरोक्षज्ञानजन्यात्तत्प्रसादादेव भवति ।

**न च " तमेव विद्वानमृत इह भवति " " नान्यः पन्था विद्यते अयनाय "** इति **" तमेवं विदित्वा अतिमृत्युमेति "**, इत्यादौ मोक्षज्ञानयोरव्यवहितपूर्वापरीभावकथनात् नान्य इत्यवधारणेन ज्ञानातिरिक्तमोक्षसाधनीभूतस्य पथः निषिद्धत्वाच्च न प्रसादसापेक्षत्वं मोक्षस्येति वाच्यम् । **" एष पन्था"** इति श्रुतौ **" तमेवैकं जानथ आत्मानमन्यावाचो विमुञ्चथ अमृतस्यैव सेतुः"** इति श्रुतौ च ज्ञानविषयस्य आत्मनः मोक्षहेतुत्वोक्तेः **" नान्य "** इति श्रुतौ ज्ञानविषयात्परमात्मनोऽन्यः पन्था न विद्यते इत्यर्थोपपत्तेश्च । गीतायां **" मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि "** इति ' मच्चित्तः ' इति भगवज्ज्ञानिनमुद्दिश्य " मत्प्रसादात्तरिष्यसी " ति भगवत्प्रसादाधीनाऽनर्थनिवृत्तिमत्वकथनात् ।

**" तेषामहं समुद्धर्ता मृत्युसंसारसागरात्**

**भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् "** इति ज्ञानिना मोक्षदातृत्वस्य श्रीकृष्णेन ' अहं समुद्धर्ता ' इत्यात्मन एव प्रोक्तत्वात् ।

**" तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् "**

इति वाक्येन सकार्याविद्यानिवृत्तिरूपपरमशान्तेः मधुसूदनसरस्वतीप्रदर्शितायाः भगवत्प्रसादाधीनत्वोक्तेः । नित्यभगवल्लोकरूपशाश्वतस्थानप्राप्तिस्वरूपमुक्तेश्च भगवत्प्रसादाधीनत्वकथनात् **" शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति "**

सर्वसंसारनिवृत्तिरूपायाः मोक्षपर्यन्तायाः शान्त्याः भगवदधीनत्वोक्तेश्च त्वाप्रत्ययेन प्रारब्धकर्मभोगातिरिक्तव्यवधाननिषेधवत् उपदर्शितप्रमाणबलेन ईश्वरप्रसादातिरिक्तव्यवधानस्यैव निषेधोपपत्तेः ।

तथा च यथा “ **ददामि बुद्धियोगं तं येन मामुपयान्ति ते** ” इति कृष्णस्य ज्ञानदातृत्वमुक्तं तथा ‘ मुकुन्दः ’ इति नाम्नैव मोक्षदातृत्वमुक्तम् । ‘ **शान्तिदः** ’, ‘ **सुखदः** ’ ‘ **सुप्रसादः** ’ इति नामभिः अज्ञाननिवृत्तिरूपशान्तिप्रदत्वं, स्वरूपसुखानुभवप्रदातृत्वं तदपि प्रसादद्वारेति स्फुटीकृतम् ।

एवं स्थिते यदुक्तं “ साक्षाद् बन्धनिवृत्तिद्वारा ज्ञानस्य मोक्षसाधनत्वं न त्वदृष्टविधया ईश्वरप्रसादद्वारा ” इति तत्तुच्छतरम् । साक्षात् पदेन द्वारानपेक्षत्वमुक्त्वा बन्धनिवृत्तिद्वारामोक्षसाधनत्वकथनस्य व्याहतत्वात् । अद्वैतिभिः ‘ अविद्यास्तमयो मोक्षः ” इत्युक्तत्वेन बन्धनिवृत्तेरेव मोक्षरूपतया तस्याः मोक्षद्वारत्वकथनायोगाच्च ।

किञ्च ‘ न त्वदृष्टविधये ’ ति वाक्यस्य न त्वदृष्टत्वेन रूपेणेत्यर्थो वाच्यः । अनुकूलवाच्यदृष्टस्य ज्ञानस्य न वेऽप्यदृष्टत्वं वा अदृष्टत्वेन रूपेण कारणत्वं वा मन्यन्ते, येन तन्निषेधः सम्भवेत् । अप्रसक्तप्रतिषेधः उन्मत्तप्रलापश्चेति प्रागेवास्माभिरुक्तमेव । तथा चोक्तगीतावचनैः ज्ञानस्य स्वप्रसादद्वारा स्वकार्याविद्यानिवृत्तिरूपशान्तिहेतुत्वस्य निर्वाणहेतुत्वस्य चोक्तत्वात् नेश्वरप्रसादद्वारेत्यपि निरस्तम् ।

एतेन “ [illegible] ” इति ज्ञानस्याज्ञाननिवृत्तिमोक्षप्रयोगित्वमस्य प्रतिपादयति । तत्र प्रसादो नामावरणनिवृत्तिमात्रमित्यादीनि असुदाववचनानि ( १४२ ) परास्तानि । आवरणनिवृत्तेरज्ञाननिवृत्त्यतिरिक्ताया अभावेनाज्ञाननिवृत्तिरूपमोक्षप्रयोजकत्वस्य तादृश्यावरण निवृत्तिरूपत्वकथनायोगात् ।

यच्चाम्रेडितम्—“ ईश्वरोऽप्यविद्योपधानेन प्राप्तात्मलाभोऽविद्योपहितः नित्योपाधिकत्वादीश्वरभावस्य सत्यपीश्वरप्रसादे नाविद्योपाधिप्रयुक्तबन्धविनाशः । अविद्याया निवृत्तौ त्वीश्वरभावोऽपि तस्य निवर्तते इति कस्येच्छया कस्य बन्धः, कस्य वा मोक्षः । अतो ज्ञानस्यैवाज्ञाननिवृत्तिद्वारा मोक्षसाधनत्वं स्वीकर्तव्य ”-मिति ( १४६--१४७ ) तत्तु नास्तिकानामवैदिकदार्शनिकानामेव गोष्ठ्या शोभते; न वैदिकास्तिकपरिषदि । यतः “ **उतामृतत्वस्येशानः** ” “ **अमृतस्यैष सेतुः** ” “ **तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्** ” “ **मुक्तोपसृप्यव्यपदेशात्** ” ‘ **मुक्तानां परमा गतिः** ’ इत्यादिश्रुतिसूत्रवचनेषु ईश्वरस्य मुक्तनियामकत्वं मुक्तप्राप्यत्वं च प्रतिपाद्यते । मुक्तशब्दस्य च ‘ अविद्या-

रागद्वेषादिदोषमुक्ता ' इत्यर्थः शंकराचार्यैरप्युक्तः । तथा चाविद्यादिदोषमुक्तैः प्राप्यत्वेन श्रुत्याद्युक्तस्येश्वरस्याविद्योपधानेन प्राप्तात्मलाभत्व--मविद्यानिवृत्तौ निवर्तमानत्वं वा वक्तुं निस्त्रपो महोन्मत्तो वा प्रभवेन्नापरः ।

यदप्युक्तम्– " नचान्धकारनिवृत्तिः प्रदीपाधीना कस्यापि प्रसादमपेक्षते; येन ज्ञानमपि प्रसादद्वारैव मोक्षसाधन स्या " दिति तदप्यनीश्वरवादिगोष्ठीनिष्ठं प्रलापमात्रम् । यतः " **पयोम्बुवच्चेत्तत्राऽपि** " इति सूत्रे तद्भाष्ये च " **अचेतनं स्वभावेनैव पुरुषार्थसिद्धये प्रवर्तिष्यत इति नैतत्साधूच्यते । सर्वत्रैवेश्वरापेक्षत्वमापद्यमानं न पराणुद्यत** " इति वचनेन प्रदीपस्यान्धकारनिवर्तनशक्तिः तमसः आवरणशक्तिश्चेश्वराधीनैव " **योऽग्नौ तिष्ठन्** " "**यस्तेजसि तिष्ठन्**" " **यस्तमसि तिश्ठन्** " इत्यादिना एतेषा वचनानामुपलक्षणत्वेन ज्ञाननिष्ठा अज्ञाननिवर्तनशक्तिः अज्ञाननिष्ठा आवरणशक्तिश्चेश्वराधीनैवेति ज्ञेय वैदिकैरिति घोषयामः । अतः युक्तमुक्तम् " **अज्ञानां ज्ञानदो विष्णुर्ज्ञानिनां मोक्षदश्च सः । आनन्ददश्च मुक्तानां स एवैको जनार्दन** " इति ।

**इति ज्ञानस्येश्वरप्रसादद्वारा मुक्तिहेतुत्वसमर्थनम् ।**

## अनादीनामपि ईश्वराधीनत्वम्

यत्तूक्तम्–" अनादिप्रकृत्यादीना प्रकृत्युपाधीनामीश्वरोपाधीनामौपाधिकधर्मादीना वा निर्विशेषचैतन्यसमकालिकत्वमात्रम्; नेश्वराधीनत्वम् ईश्वरवदेव तेषामप्यनादित्वा " दिति ( ८ ) तदप्यतिहेयम् । ईश्वरस्य " **नित्यो नित्याना** " मिति कठश्रुत्या नित्यत्वाभिधानात् । " **परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे** " त्यादिना तद्धर्माणामपि स्वाभाविकत्वोक्तेः; ' ईश्वरोपाधीनामौपाधिकधर्मादीना ' मित्यादिवल्गनमवैदिकजनमात्रमनस्तोषकरम् ।

निर्विशेषचैतन्यस्य नरविषाणादिसरूपस्य कालमात्रसंबन्धशून्यतया तत्समकालिकत्वप्रलापस्य त्वदभिप्रेतविकल्पमात्रहेतुत्वेनाप्रमाणत्वात् । सर्वेषामप्यनादीनां सादीनां च पदार्थाना–मन्तर्यामिब्राह्मणरूपशास्त्रदृष्ट्या ईश्वराधीनत्वेनानादीनां जीवानामिव प्रकृत्यादीनामनादित्वेऽपि ईश्वराधीनत्वस्य शंकराचार्योक्तेस्तदनुसारिणा भवता तद्विरुद्धकथनस्यायुक्तत्वात् ।

**इति अनादेरीश्वराधीनत्वम् ।**

## अविद्याया ब्रह्माश्रितत्वनिरासः ।

यच्चाभिहितम्— " स्वभावतः ब्रह्माश्रितयाऽविद्यया ब्रह्मणो जीवस्य वा आवरणमीश्वरशक्तिमनपेक्ष्ये " ति ( ८–७ ) तदप्युपदर्शितवचनैरन्तर्यामिब्राह्मण-गतैः साक्षादुपलक्षणया वा तमःशब्दवाच्याया अविद्याया अपि ईश्वराधीनत्वस्य भवदाचार्यैरङ्गीकृतत्वेन तद्विरुद्धकथनस्य तद्द्रोहापादकत्वात् ।

यच्चोक्तम्— " ब्रह्माश्रिता अविद्ये " ति तदपि हेयम् । —

" **नात्मान न पराश्चैव न सत्यं नाऽपि नानृतम् ।**

**प्राज्ञः किंचन सवेत्ति तुर्यं तत्सर्वदृक्सदा** "

इति माण्डूक्ये '**प्राज्ञः किंचन सवेत्ती**' ति पूर्ववाक्ये प्राज्ञस्य सर्व-विषयकज्ञानाभावेऽभिहिते तुर्यस्य तद्वैजात्यकथनाय प्रवृत्तस्य '**तुर्यं तत्सर्वदृक्सदे**' ति वाक्यस्य तुर्यविशेष्यकसर्वविषयकज्ञानाश्रयत्वप्रकारकबोधजनकत्वस्यैव वक्त-व्यत्वात् । अन्यथा सर्वविषयकज्ञानाश्रयत्वाभावस्य प्राज्ञतुर्योभयसाधारण्यात्; तुर्ये प्राज्ञवृत्तिधर्मशून्यत्वरूपवैजात्यायोगात् । तथा च तुर्यस्य शुद्धस्य ब्रह्मणः सार्वज्ञ्याविरोधात् ; ब्रह्माश्रिता अविद्येति कथनमयुक्ततरम् ।

अत्र अ. सुधया मौनाऽवलम्बनादद्वैतसिद्धि–लघुचन्द्रिके परीक्ष्येते ।:— तत्राद्वैतसिद्धौ " सर्वदृक्त्वेन सर्वेषा दृग्भूत चैतन्यमित्युच्यते । न तु सर्वज्ञ तुरीय-मिति यदुक्तं तदसत् । – " आनन्दो विषयानुभवो नित्यत्व चेति सन्ति धर्माः । अपृथक्त्वेऽपि चैतन्या" दिति पञ्चपादिकोक्तेः सर्वविषयकज्ञानरूपत्वं सर्वविषयक-ज्ञानाश्रयत्व ब्रह्मणोऽस्तीत्युपदर्शितम् । " कालः सदाऽस्तीत्यादिव्यवहाराणा स्वभावविशेषादेवोपपत्ते " रिति प्रकरणान्तरे वदता अद्वैतसिद्धिकारेणैव स्वभाव-विशेषादेव सर्वविषयकज्ञानाश्रयत्वमप्यङ्गीकार्यम्, न त्वविद्यावशादिति । ततश्च ज्ञानस्य सर्वविषयकत्वमीश्वरस्य सर्वविषयकज्ञानाश्रयत्वं नाविद्यकं किं तु स्वाभा-विकमिति सिध्यति इति । अवश्यं चैतदेव वक्तव्यम् । तयोराविद्यकत्वे अविद्याकार्य-तया सादित्वेनाविद्यानाशनाश्यतया चानित्यत्वेन सदापदोक्तसार्वकालिकत्वासिद्धेः ।

ब्रह्मण्यविद्यासबन्धवदेव स्वरूपज्ञप्तेः विषयसबन्धस्याप्युपपत्तेः । न च ब्रह्मरूपज्ञप्तेः, अविद्यासंबन्धोऽपि न स्वतः किं तु आविद्यक एवेति युक्तम् । त्वदाचार्यैः अविद्याताच्चितोर्योग " इति तस्यानादित्वाभ्युपगमात् । देशकाल-संबन्धस्यापि सादित्वे ब्रह्मणोऽपि सादित्वापत्त्या देशकालसंबन्धस्याप्यनादित्वेन स्वाभाविकत्वस्यैव वक्तव्यत्वाच्च ।

असंगशब्दस्य संबन्धाभावप्रतियोगिकसंगतदभावाभ्या व्याघातान्न संगसामान्याभावोऽर्थः । किं तु पापपुण्यसंगाभाव एव । सर्वविषयकज्ञानाश्रये तुरीये शुद्धे ब्रह्मणि कदापि किंचिद्विषयेप्यज्ञानासंभावात्, ब्रह्माश्रिताऽविद्येति कथनमयुक्तम् । एतदभिप्रेत्यैव श्रीमदाचार्यैरुक्तम्-"**अज्ञताऽखिलसवेत्तुर्घटते न कुतश्चने**" ति ।

यदुक्तं लघुना ब्रह्मानन्देन 'यत्तूक्तं ताच्छीलिकतृन्नन्तेनेति तन्न । कैवल्ये विषयवेत्तृत्वस्याभावेनाविषयवेदनस्वभावत्वात्' इति तत्तुच्छम् । "**तुर्य तत्सर्वदृक् सदे**" ति वाक्येनैव कैवल्ये विषयवेत्तृत्वाभावनिषेधात् । ज्ञानार्थकविदेः सेट्कत्वेन वेदितृपदस्यैव साधुत्वाच्चेति । तदपि "**वेत्ताऽसि वेद्यं च परं च धामे**" ति भारते प्रयोगादुक्तनियमाभावसिद्धेः । अत एव भारतप्रणेतुर्वेदव्यासस्य शिष्यैरानन्दतीर्थभगवत्पादैरपि प्रयुक्तस्य संवेत्तृपदस्य साधुतमत्वम् ।

"वस्तुतो अविद्याश्रयत्वेन न सर्वज्ञत्वस्य विरोधः । किंतु य प्रत्यावरिका अविद्या तत्र न सार्वज्ञ न च जीवान्यं प्रत्यावरिकेति ध्येयम्" इति । तदप्यतिलघु । न हि चैत्राश्रितमज्ञानं मैत्रं प्रत्यावरकं, किंतु यदाश्रितमज्ञानं त प्रत्येव तदावरकमिति नियमः सुप्रसिद्धः । तथा च ब्रह्माश्रितं चेदज्ञान तदा तत् ब्रह्म प्रत्येवावरकं स्यान्न जीवं प्रति । तथा च ब्रह्मणि सर्वदा सर्वविषयकज्ञाने जाग्रति कस्मिन् विषये अज्ञानं ब्रह्म प्रति आवरक स्यात् । ब्रह्म प्रति आव्रीयमाणविषयाभावात्तत्सापेक्षमज्ञानं न संभवतीति, अविद्या ब्रह्माश्रितेत्ययुक्तम् ।

**इति अविद्याया ब्रह्माश्रितत्वनिरासः ।**

## बन्धस्येश्वरशक्तिनिबन्धत्वम् ।

यच्चोच्यते-- "बन्धस्य बन्धजीवान्यतराश्रितमायोपाधियोगनिबन्धनत्वं नत्वीश्वरशक्तिनिबन्धनत्व" मिति । तत्तुच्छम् । पूर्वमेव सर्वस्येश्वराधीनत्वोक्तिस्तद्विरोधात् । "**पराभिध्यानात्तु तिरोहित ततो ह्यस्य बन्धविपर्यया**" विति बन्धस्येश्वराधीनत्वस्य सूत्रकृतैवोक्तत्वात् ।

छान्दोग्योपनिषदि—"**प्राणबन्धनं हि सौम्य मन**" इत्यत्र मनःशब्दबोध्यजीवस्य प्राणशब्दबोध्येश्वराधीनबन्धवत्वोक्तेः ।

**इति बन्धस्येश्वराधीनत्वसमर्थनम् ।**

## अनादेरपि प्रकृतेर्नित्यत्वम् ।

न केवलमनादिभूता प्रकृतिः; किं तु नित्याऽपि । "**प्रकृतिं पुरुषं चैव विध्यनादी उभावपी**" त्यत्र गीताभाष्ये "**नित्येश्वरत्वादीश्वरस्य**

तत्प्रकृत्योरप्यनादिनित्यत्वेन भवितुं युक्त" मित्यादिना प्रकृतिजीवयोर्नियम्ययोरनादिनित्यत्वस्याभिधानात् । तथा भागवतेऽपि

" यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् ।
प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् "

इत्यनेन प्रकृतेः नित्यत्वस्य स्फुटमभिधानाच्च ।

॥ इति अनादेः प्रकृतेर्नित्यत्वसिद्धिः ॥

॥ अज्ञानस्य बन्धस्यचानिर्वचनीयत्वनिरासः ॥

यदुक्तम् " अज्ञानस्यतत्प्रयुक्तस्यबन्धस्योभयस्याऽपि सदसद्विलक्षणत्वेनानिर्वचनीयत्व"मिति । यच्चोक्तम्,

" अनिर्वचनीयत्व न दुरुपपादम् । तद्धिसत्वासत्त्वाभ्यां दुर्निरूपत्वमेव । तच्च सत्वाभावासत्वाभावोभयवत्वमेव । तदेव सदसद्विलक्षणत्वं नाम, इति न सदसद्रूपत्वेनार्थान्तरम्, असद्विलक्षणत्वेन सिद्धसाधन वा " इति । तदमत्, अद्वैतमते ब्रह्मणः अवाच्यत्वेन सत्वासत्वाभ्यां दुर्निरूपत्वेन अज्ञानवद्बन्धवच्च तस्यापि मिथ्यात्वापत्तेः । मण्डनमिश्रमतानुसारेण ब्रह्मणि निर्धर्मकत्वेन भावरूपधर्मासभवेऽपि सत्वाभावासत्वाभावोभयवत्वेन तदभिन्नसदसद्विलक्षणत्वेन च मिथ्यात्वस्य वज्रलेपायितत्वात्, उपदर्शितानां दुर्निरूपत्वोभयवत्वविलक्षणत्वानां मिथोऽत्यन्तभिन्नत्वेन तेषामैक्यकथनस्य तत्तत्पदानामर्थभेदाज्ञानमूलकत्वेनायुक्तत्वात् ।

यदि च भावरूपा अभावरूपाश्च सर्वेऽपि धर्मा अतात्त्विकाः, अतः ब्रह्मणि न सत्वाभावासत्वाभावोभयवत्त्वमिति न ब्रह्मणो मिथ्यात्वापत्तिरित्युच्यते, तदा तस्य सदसद्वैलक्षण्याभावेन सदसद्रूपत्वापत्तिः । एवमेव जगत्यपि सदसद्वैलक्षण्यस्य मिथ्यात्वेन तदभावाऽवश्यंभावे सदसद्रूपतापत्त्या अर्थान्तरत्वाऽवश्यम्भावात् । द्वैतिभिः जगतः केवलसद्रूपत्वाङ्गीकारेण सदसद्रूपत्वानभ्युपगमात् सदसद्विलक्षणत्व तन्मते जगतः सिद्धमेवेति सिद्धसाधनताया अपि दुर्निवारत्वात् । असद्विलक्षणत्वस्य सिद्धत्वात्तदंशे सिद्धसाधन वज्रलेपायितमेव ।

व्याघातसमर्थनम् ।

यदप्युक्तं " सत्त्वासत्त्वयोः परस्परविरहरूपत्वं किं रूपं वा सत्त्व, असत्त्वं चाभिप्रेत्य यद्यबाध्यत्वं सत्त्वं, तुच्छत्वमसत्त्वं तर्हि तयोर्व्याप्तिरात्मनीति वक्तव्यम् — आत्मन्यबाध्यत्वरूपसत्त्वं वर्तते असत्त्व नास्ति । एवं तुच्छे असत्त्वं वर्तते सत्त्वम-

बाध्यत्वरूपं नास्तीति । न चैतद्युक्तम् तुच्छे असत्त्वं वर्तते सत्त्वमत्राध्यत्वरूपं नास्तीति । न चैतद्युक्तम् तुच्छे असत्त्ववत् अबाध्यत्वरूपसत्त्वाभावाभावात्, तुच्छस्याप्यबाध्यत्वात् । अत एवात्मत्वस्याबाध्यत्वेऽसाति व्यभिचारापादनं परेषामुपपद्यते " इति तदसंबद्धप्रलपितमेव । वादावल्या यत्रासत्त्वाभावः तत्र सत्त्वमिति व्याप्तिमाश्रित्य विश्व सत् असत्त्वाभावादित्यनुमानं सूचितम् । तेन च सत्त्वासत्त्वयोः परस्परविरहव्यापकत्वरूपविरुद्धत्वाभिप्रायेणैव व्याघातः प्रदर्शितः, न तु परस्परविरहरूपत्वाभिप्रायेण इति असदनुवादोऽयम् ।

यदि वा परस्परविरहरूपत्वस्य कण्ठरवेणानुक्तत्वेऽपि तद्व्याप्यस्य परस्परविरहव्यापकत्वस्य कथनेन तस्यापि लाभ इति मतं तथापि परस्परविरहव्यापकत्वप्रदर्शनाय यत्रासत्त्वाभावः तत्र सत्त्व यथा आत्मनि असत्त्वाभावो वर्तते तत्र सत्त्व, यत्र सत्त्वाभावः तत्रासत्त्व यथा शशविषाणे सत्त्वाभावो वर्तते तत्रासत्त्वं चास्तीति व्याप्तिः प्रदर्शनीया । तथा व्याप्तिप्रदर्शन विहाय आत्मनि अबाध्यत्वरूपसत्त्व वर्तते तत्रासत्त्वं नास्तीत्यादिरूपेण व्याप्तिप्रदर्शनस्यानौचित्यमेव । अस्तु वा कथचित् अभिन्नयोः परस्परव्यापकत्ववत् परस्परव्याप्यत्वमपि । इत्थ चात्र परस्परविरहरूपत्वमित्यस्य परस्परविरहव्याप्यत्वरूपपरस्परविरुद्धत्वमर्थं इत्यभिप्रायः, आत्मनि सत्त्व वर्तते तत्रासत्त्वं नास्तीत्यादिरूपेण व्याप्तिप्रदर्शनौचित्यं चेति दुराग्रहः, तथापि वादावल्या किं तदात्मत्वमित्यादिना किं वा सत्त्वम्, उतावाध्यत्वमिति सत्त्वाबाध्यत्वयोः भेदकथनात् । एव सच्चेन्न बाध्येतेत्यत्र किमिद सद्विवक्षित सत्तायुक्तमथाबाध्यमित्यादिना सत्त्वाबाध्यत्वयोर्भेदाभिप्रायेण विकल्पकरणात् । " यद्यबाध्यत्वं सत्त्वमिति प्रश्नस्यैव बधिरप्रश्नरूपत्वात् । यद्यत्राध्यत्वं सत्त्वं तुच्छत्वमसत्त्व तर्हि तयोर्व्याप्तिरात्मनीतिवक्तव्यम् "-- इति वाक्यमत्यन्तासंबद्धप्रलापः । न हि सत्त्वासत्त्वयोरबाध्यत्वतुच्छत्वयोर्वा व्याप्तिः केनाप्युच्यते । वस्तुतः तयोः सामानाधिकरण्यमेव नास्ति व्याप्तिर्नास्तीति किं वक्तव्यम् । तयोरात्मनि व्याप्तिरिति तु दूरानिरस्तम् । व्याप्तिप्रदर्शनमपि आत्मानि सत्त्वं वर्तते असत्त्वं च वर्तते इत्येवंरूपेण कार्यम् । तथा च आत्मनि सत्त्वं वर्तते तत्र असत्त्वं नास्तीति कथनमसंबद्धप्रलाप एव । वस्तुतः सत्त्वासत्त्वयोः देशकालसम्बन्धतदभावरूपयोः त्रैकालिकनिषेधप्रतियोगित्वतदभावरूपयोः बाध्यत्वतदभावरूपयोर्वा परस्परविरहरूपत्वस्य परस्परविरहव्यभिचारशङ्काकलङ्कशून्यतया परस्परविरहव्यापकत्वस्य परस्परविरहव्याप्यत्वस्य च सूपपादत्वात् सत्त्वासत्त्वयोर्व्याघातो वज्रलेपायितः ।

एव च बाध्यत्वस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपत्वम् अस्तः प्रतीत्यभावम् अत एव तस्य ब्रह्मवदबाध्यत्वम्, एवंविधस्य अबाध्यत्वस्यैव सत्त्वरूपत्व तथा असत्त्वस्य, नञ्स्वभावलब्धेनाबाध्यत्वरूपसत्त्वाभावरूपत्वेन प्राप्त बाध्यत्वरूपत्व, विहाय सत्त्वासत्त्वयोः स्वाभिलपितपरस्परविरहव्याप्यव्यापकभावविरोधि व्यभिचारप्रदर्शनार्थम् अबाध्यत्वरूपसत्त्वाभावातिरिक्तत्वं चेत्यप्रामाणिकानेककल्पनापूर्वक "किंरूपं वा सत्त्वम्" इत्यादि चोद्यकरणेन असुधाकारैः आत्मनः अवद्य पठित्वा कुचोद्य करोतीति प्राचीनाभाणकमुख्यविषयत्वमेव सम्पादितम् ।

यच्चोक्तम् "अत एव आत्मत्वस्याबाध्यत्वेऽसति व्यभिचारापादन परेषामुपपद्यते" इति तदप्युन्मत्तप्रलपनमेव । यतः वादावल्याम् अद्वैतिभिः आत्मत्वरूपाबाध्यत्वस्य सत्त्वस्य च भिन्नत्वविवक्षापक्षे असति व्यभिचार उपदर्शितः । असुधाकृता तु तयोरभेदं स्वीकृत्य व्यभिचारस्योपपन्नत्वमुच्यते । न हि अभिन्नयोः परस्परव्यभिचारस्य कदापि कथमपि अनुन्मत्तः उपपन्नत्व कथयेत् । आत्मत्वस्याबाध्यत्वे असति व्यभिचारापादनमिति वचन तु अतीवोपहासास्पदम् । आत्मत्वस्याबाध्यत्वे तस्यात्मत्वान्तर्भावेणैव सत्त्वव्यभिचारः स्यात्, न असदन्तर्भावेण । अतः आत्मत्वस्याबाध्यत्वरूपत्वे इत्येव वक्तव्यम् । न च असुधाकृता आत्मत्वस्याबाध्यत्वरूपत्वे इत्येव लिखितं मुद्रकदोषात्तु आत्मत्वस्याबाध्यत्वे इति प्रमादादायातमिति वाच्यम् । "अनिर्वचनीयत्वस्य भावाभावविलक्षणत्वादिनाऽनिर्वचनीयत्व यत्र भावाभावविलक्षणसदसद्विलक्षणत्वादिना प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वादिना च तस्य निर्वचनसम्भवः" (२७१) "जीवन्मुक्तिः स्थितप्रज्ञतया गुणातीततया च गीयते" (६१९) इत्याद्यनेकस्थलेषु धर्मधर्मिभावमर्यादाऽनभिज्ञेन शास्त्रमर्यादाऽनभिज्ञेनेव च अशुद्धम् असम्बद्ध समुट्टङ्कितम्; अतः आत्मत्वस्याबाध्यत्वे इत्येतस्य मुद्रकदोषाधीनत्वासम्भवेन असुधाकृद्दोषायत्तत्वावश्यम्भावात् ।

यदुक्तम् – "अतः सत्त्वासत्त्वयोरेकतरस्य रूपान्तरं वक्तव्यम् तत्र चासत्त्वं क्वचिदुपाधौ सत्वेन प्रतीत्यनर्हत्व तदभावश्च सत्त्वम्" इति तदपि हेयम्, विचारासहत्वात् । तथा हि रूपान्तरमिति कोऽर्थः ? भिन्नं रूपमिति चेत् किंरूपं कस्माद्रूपाद्भिन्नम् इति विवेचनीयम् । यथाश्रुते सत्त्वासत्त्वयोः भिन्नरूपत्वं वक्तव्यमित्यर्थो लभ्यते । स चायुक्तः । सत्त्वासत्त्वयोः परस्परभिन्नरूपत्वस्य सर्वाभ्युपगतत्वेन तत्कथनविधानस्यानुचितत्वात् ।

वस्तुतस्तु असत्त्वघटकसत्त्वतदघटकसत्त्वयोःसत्त्वघटकासत्त्वतदघटकासत्त्वयो-र्वा एकतरस्य रूपान्तरं वक्तव्यमिति लेख्यम्, अन्यथा लेखन तु लेखमर्यादाऽन-भिज्ञानमूलं ग्रन्थकर्तृप्रमादमूलकमेव न तु मुद्रकदोषमूलकमिति स्फुटम् । तस्य कथंचिदुपपन्नत्वेऽपि " रूपान्तर वक्तव्यम् " इति प्रतिज्ञाय क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वम् असत्त्वं तदभावश्च सत्त्वमिति सत्त्वघटकाघटकयोरसत्त्वयो-रेकरूपत्वमेवोपवर्णितम् । तादिद पर्वतस्य वह्निमत्त्वं साधयामीति प्रतिज्ञाय 'पर्वतो न वह्निमान्' इति कथनवद् व्याहतमेव । किं च सत्त्वेन प्रतीत्यर्हत्वं सत्त्वमिति कथने सत्त्वस्य सत्त्वघटितत्वेनात्माश्रयापातः ।

यच्च " तद्यथा इति प्रतिज्ञाय क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वाभावस्य तस्य शशशृङ्गादावभावात् शुक्तिरूप्यादौ घटादौ चासत्त्वाभावो वर्तते सत्त्वाभावस्त्व-बाध्यत्वाभाव एव । स तु शुक्तिरूप्यादौ वर्तते इति सत्त्वाभावासत्त्वाभावोभय-वत्वं शुक्तिरूप्यादा घटादौ च वर्तते ब्रह्मणि तु नाबाध्यत्वरूपसत्त्वाभावः, न वा क्वचिदुपाधौ सत्त्वेन प्रतीत्यर्हत्वम् इति न तत्रातिव्याप्तिः न वाऽसति क्वचिदुपाधौ सत्त्वेन प्रतीत्यर्हत्वाभावादित्यद्वैतासिद्धिः " इति अद्वैतसिद्धेरनुवादकरण तदप्यस-ङ्गतम् ।

अनन्वितार्थकेन " क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वाभावस्य सत्त्वरूपत्वे तस्य शशशृङ्गादावभावात् " इत्यव्यवहितपूर्ववाक्येन सत्त्वेन प्रतीत्यनर्हत्वाभावस्य सत्त्वरूपत्वोक्तेः शुक्तिरूप्यादौ घटादौ चासत्त्वाभावो वर्तते इत्यनन्तर सत्त्वाभावस्तु सत्त्वेन प्रतीत्यनर्हत्वाभावाभाव एवेति वक्तव्यं; स च सत्त्वेन प्रतीत्यनर्हत्वरूपः शुक्तिरूप्यादौ वर्तते इति वक्तु न शक्यते; अतः शाखाचङ्क्रमसन्यायमवलम्ब्य सत्त्वाभावस्त्वबाध्यत्वाभाव एव तु शुक्तिरूप्यादौ वर्तते इति कथनस्य प्रतिज्ञा-तार्थविरुद्धत्वात् । एवं पूर्वं क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वाभावस्य सत्त्वेन प्रतीत्यर्हत्वरूपस्य सत्त्वरूपत्वाम्रेडनात् ब्रह्मणि तु न सत्त्वेन प्रतीत्यर्हत्वरूप-सत्त्वाभावः इत्येव वक्तव्यम्, तद्विहाय ब्रह्मणि तु नाबाध्यत्वरूपसत्त्वाभावः इति कथनस्यासङ्गतत्वात् । ब्रह्मणि क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वाभावरूपस्य सत्त्वेन प्रतीत्यर्हत्वस्याभावो नास्तीत्येवोच्यते इति चेत् उत्तरवाक्ये " न वा क्वचिदुपाधौ सत्त्वेन प्रतीत्यर्हत्व "मिति ब्रह्मणि सत्त्वेन प्रतीत्यर्हत्वनिषेधानुपपत्तिः । इत्थं च ब्रह्मणि सत्त्वाभावाभावान्नातिव्याप्तिरिति न वक्तव्यम्, किन्तु सत्त्वेन प्रतीत्यनर्हत्वरूपासत्त्वाभावाभावान्नातिव्याप्तिरिति, सति चैवं प्रच्छन्नं बौद्धत्वं प्रकटीकृतं स्यात्; ब्रह्मणः द्वौ नञौ इति न्यायेनासत्त्वसमर्थनात् ।

अत्र शशविषाणमस्तीति शब्दजन्यभ्रममादाय असत्यपि क्वचिदुपाधौ सत्त्वेन प्रतीत्यर्हत्वस्यापि सत्त्वेन तत्रातिव्याप्तिनिवारणासम्भवः, असति अबाध्यत्वरूप-सत्त्वस्यैव विद्यमानत्वात् सत्त्वाभावाभावादेवातिव्याप्तिवारणसंभवेन प्रकारान्तरानु-सरणस्य वैयर्थ्यं च ।

एवं शून्यस्याबाध्यत्वरूपसत्त्वसमर्थनेनापि बौद्धत्वमाविष्कृत स्यात् ।

यदप्युक्तम् – "न्यायचन्द्रिका तु यत्र सत्त्वाभावः सत्त्वे तत्रासत्त्वं नास्ति यत्रासत्त्वाभावोऽसत्वो (त्वे) ? तत्र सत्त्वं नास्तीति परस्परविरहव्याप्यत्वाभावात् सत्त्वाभावासत्त्वाभावयोरैकत्राविरोधात् न व्याघात इति विवेचयति । तथा च सत्त्वासत्त्वाभ्या निर्वक्तुमशक्यत्वरूपं सत्त्वाभावासत्त्वाभावोभयवत्वरूपमनिर्वाच्यत्वं मिथ्यात्वं सुष्ठु लभति" इति

अत्र हि सौष्ठवं न्यायचन्द्रिकाभूमिकायाम् असुधाकारैः "तत्र मिथ्यात्वं सदसद्विलक्षणत्वमबाधितं, तत्र सत्त्वासत्त्वयोः परस्परविरहरूपत्वेन एकत्र सामा-नाधिकरण्य व्याहतमिति न्यायसुधादयः । तत्र यद्यपि न्यायामृतकारैर्बहु परा-क्रान्तम् । अद्वैतसिद्धिश्च तत्परिहारप्रसङ्गेन सत्त्वमबाध्यत्त्वम्, असत्त्वं क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वामित्यादिरूपेणेत्यनेकरूपस्य सत्वस्यासत्त्वस्य च विवक्षणेन सत्त्वासत्त्वयोः परस्परविरहत्वाभावमुपपादयति । लघुचन्द्रिकाऽपि तदेवानुसृत्य विशदं व्याचष्टे । न्यायचन्द्रिका त्वेकरूपमेव सत्त्वं तद्विरोध्येव चासत्त्व गृहीत्वैव सत्त्वासत्त्वयोः परस्परविरहरूपत्वं विघटयति । यत्र सत्त्वं नास्ति–सत्त्वे तत्र नासत्त्वं, यत्रासत्त्वं नास्ति असत्वे न तत्रासत्त्वमिति सत्त्वासत्त्वयोः परस्परविरहरूप-त्वाभावोपपादनेन अतः सत्वासत्वोभयाभाव एकत्र न बाधितः, इति सदसाद्विलक्षणं न दुर्धटम् । यथा भावाभावविलक्षणत्वमपि न व्याहन्यते तथा न्यायसुधाविचार-धाराया अनुवादेन न्यायचन्द्रिका विशदयति" इति वाक्येन विशदीकृतम् । तच्च, ब्रह्मानन्दकृतलघुचान्द्रिकायाम् उक्तं हि छान्दोग्यभाष्ये-"असतः पदान-भिधेयत्वेऽपि नञ्युक्तवाक्यस्य तद्युक्तवाक्यार्थविरोधिधीजनकत्वमानुभाविक" मिति शङ्कराचार्योपदर्शितमनुभव प्रमाणीकृत्य नञ्घटितेन सदेवेत्यादिना यत्र यत्प्रकारकबोधो जन्यते नञ्घटितेन असदेवेत्यनेन तत्र तदभावप्रकारकधीरेव जन्यते इति प्रदर्शितम् । तेन नञः स्वसमभिव्याहृतपदार्थविरोधिधीजनकत्व-नियमस्य तत्रापि प्रसज्यप्रतिषेधार्थकस्य नञः स्वाव्यवहितोत्तरवृत्तिपदार्थप्रतियोगि-काभावज्ञानजनकत्वनियमस्य लाभेन न्यायचन्द्रिकया च उपदर्शितनियममनुल्लङ्घ्य

शाङ्करमनुभवं चानुसृत्य नञ्समभिव्याहृतकेवलसत्त्वपदबोध्यसत्त्वस्यैव नञ्समभिव्याहृतासत्त्वपदघटकसत्त्वपदेन बोधनरूपमेव; अन्यस्यायोगात् इत्यभिप्रेत्यैव, न्यायचन्द्रिका तु एकरूपमेव सत्त्वं तद्विरोध्येव चासत्त्वं गृहीत्वैवेत्यत्र न्यायचन्द्रिकापदोत्तर वैशिष्ट्यार्थकतुशब्दः प्रयुक्तः। इत्थं च न्यायचन्द्रिकाप्रदर्शितप्रक्रियायाः सौष्ठवकथनेनाद्वैतसिद्धिप्रदर्शितप्रक्रियायाः उपदर्शितशाङ्करानुभवविरुद्धत्वेनासौष्ठवं स्वरसत एव प्राप्तमिति तन्न पृथग् विवेचितम्। अत एव न्यायचान्द्रिकाभूमिकायाम् ( ६५ पत्रे ) "न्यायसुधोपक्षिप्तसत्त्वासत्त्वपरस्परविरहरूपत्वमादाय सदसद्वैलक्षण्यनिरसनं न्यायचन्द्रिकया यथा समाधीयते न तथाऽन्यत्र। अद्वैतसिद्धिस्तु यथाश्रुत सत्त्वासत्त्वपरस्परविरहरूपत्वमव्याहतं मत्वा सत्वासत्त्वयो रूपान्तरमाभिप्रैति—क्वचिदप्युपाधौ प्रतीत्यनर्हत्वमसत्त्वम्, अबाध्यत्वं सत्त्वमित्यादिरूपेण, अतो ज्ञायते—मधुसूदनसरस्वत्या न न्यायचन्द्रिकेय दृष्टिपथमगा" दिति ग्रन्थेन स्वाशयः असुधाकृता प्रकटीकृतः। इत्थ चात्राद्वैतसिद्धिपक्षावलम्बनेन न्यायमृतसौगन्धविमर्शकारैः स्वयमेवाद्वैतसिध्द्युक्तप्रक्रियायाः असौष्ठवरूपासमीचीनत्वस्यायुक्तत्वापरपर्यायस्य स्वीकृतत्वात्, वनमालिमिश्रप्रभृतिभिस्तत्र सुनिपुणं पराक्रान्तत्वाच्च न वयं तदयुक्तत्वसमर्थनायात्मनो लेखनीं पुनर्व्यापारयामः। किन्तु न्यायचन्द्रिकापरीक्षामेव यथावत्करिष्यामः।

न्यायचन्द्रिकायां हि एवमुल्लिखितम् "न च भावत्वाभावत्वात्यन्ताभाववत्वासम्भवः, सत्त्वासत्त्वात्यन्ताभावयोः परस्परपरिहारनियमादिति वाच्यम्। सत्त्वे तावन्न सत्त्वमस्ति वृत्तिविरोधात्, न चासत्त्वं तथा सति सर्वशून्यतापातात्। एवमसत्त्वे नासत्त्वं वृत्तिविरोधात्, न सत्त्वं विरोधादेवेति सदसतोरेकतरनिषेधस्येतरविधित्वनियमासिद्धेः" इति

तत्र न्यायप्रकाशिका—

"कुतोऽनिर्वचनीयम्--अत आह सत्त्व इति। सर्वशून्यतेति। असत्त्वाधिकरणस्य निस्स्वरूपत्वात् सत्त्वस्यैव शून्यतापत्तौ तदधिकरणव्यक्तीनामसत्त्वापातादित्यर्थः। विरोधादिति। असत्त्वे न सत्त्वं वर्तितुमर्हति, सत्त्वासत्त्वयोर्विरोधात्। अन्यथा स्वाभावारूढो घटः स्यात्। सत्त्वाधिकरणत्वे वा सत्त्वस्यापि घटादिवत् सद्व्यक्तित्वादसदाश्रयत्वविरोधाच्चेत्यर्थः" इति।

तत्र तावत् "सत्त्वे तावन्न सत्त्वमस्ति वृत्तिविरोधा" दित्ययुक्तम्।

पञ्चपादिकायाम् — "आनन्दो विषयानुभवः, सत्यत्वं चेति सन्ति धर्माः अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते" इति। सत्यत्वस्य ब्रह्माभि-

न्नत्वेऽपि ब्रह्मधर्मत्वरूपवृत्तेः तत्र स्वीकारात्, सत्त्वस्य सत्त्वाभिन्नत्त्वेऽपि वृत्तिविरोधाभावात् । इत्थं च सत्त्वाभावस्य सत्त्वान्तर्भावेणासत्त्वव्यभिचारोपपादनं न्यायचन्द्रिकाकृता पद्मपादाचार्यमतविरुद्धत्वादपसिद्धान्तसम्पादकत्वादयुक्तम् । अतस्तदुपदर्शितप्रक्रियाया अत्यन्तासौष्ठवमेव समर्थयति ।

यद्यभेदे नाधाराधेयभाव इत्याग्रहः तदापि निर्धर्मके ब्रह्मण्येव सत्त्वाभावासत्त्वाभावयोः सत्त्वेन सत्त्वासत्त्वोभयाभावः एकत्र नाबाधितः इति वक्तुं शक्यत्वेन सत्त्वपर्यन्तानुधावनवैयर्थ्यात् ब्रह्मापि सत्त्ववद् व्यभिचारनिरूपकत्वेन विवक्षितमेवेति चेद् ब्रह्मणोऽपि सत्त्वाभावासत्त्वाभावोभयवत्त्वेन मिथ्यात्वापातेन "ब्रह्म सत्य जगन्मिथ्ये" ति डिण्डिमभङ्गापत्तेः । एवमेव "न चासत्त्व तथा सति सर्वशून्यतापातात्" इत्यप्यसङ्गतम् । अद्वैतिभिः ब्रह्मणो निर्धर्मकत्ववादे तत्र सत्त्वस्यासत्त्वेऽपि सद्रूपत्वेन सर्वशून्यत्वाभावाङ्गीकारात् । एवम् "असत्त्वे नासत्त्वं वृत्तिविरोधात् न सत्त्वं विरोधादेवे" त्ययुक्तम् । ब्रह्म असदिति बौद्धवाक्यबोध्य ब्रह्मासत्त्वम् असदिति व्यवहाराद् बाधितत्त्वाच्च, असत्त्वेऽप्युपदर्शितदिशाऽसत्त्वाङ्गीकारावश्यम्भावात् ।

शशविषाणमसदिति प्रतीतेर्बाधाभावेन तद्विषयीभूतासत्त्वस्य सत्त्वाङ्गीकारावश्यम्भावेन सत्त्वाभावासत्वाभावोभयवत्वस्य कुत्राप्यसत्त्वे अभावेनासत्त्वे व्यभिचारप्रदर्शनानौचित्यात् । अनुवाकृता "न्यायचन्द्रिका तु यत्र सत्त्वाभावः सत्त्वे, तत्रासत्त्व नास्ति, यत्रासत्त्वाभावोऽसत्त्वो (त्त्वे ?), तत्र सत्त्व नास्तीति परस्परविरहव्याप्यत्वाभावात्" इति अन्यथाऽनुवादेन स्वस्येव न्यायचन्द्रिकाकृतोऽपि व्याप्यव्यापकमर्यादाऽनभिज्ञतैव प्रकटीकृता, परस्परविरहव्याप्यत्वाभावादिति कथनं तु तदोपयुज्यते यदि यत्रासत्त्व तत्र सत्त्वाभावः यत्र सत्त्वं तत्रासत्त्वभाव इति व्याप्तेर्विघाताय व्यभिचारप्रदर्शनं स्यात् । न चास्या व्याप्तेर्विरोधी व्यभिचारोऽस्तीति ज्ञेयम् ।

एतेन सिद्धिव्याख्यागतम् "यद्वा सत्त्व एव तत्रासिद्धिः आत्माश्रयदोषेण स्वस्मिन् स्वस्याभावात् असत्त्वस्याभावाच्चे" ति वचनं परास्तम् । उक्तपञ्चपादिकया अभेदेऽपि धर्मधर्मिभावस्य स्वीकारेण क्वचिदात्माश्रयस्यादूषणत्वसूचनात् ।

तथा—अद्वैतसिद्धौ "कालः सदाऽस्ति देशः सर्वत्रास्ति सत्ता सतीत्यबाधितव्यवहारार्थं विशेषोऽङ्गीकार्य इति चेन्न स्वभावविशेषादेव सर्वस्योपपत्तेः"

इति वाक्येन सत्तायामपि सत्त्वोपपादनेन क्वचित्स्वभावविशेषादेवाधाराधेयभावसम्भवेन तत्रात्माश्रयस्य दोषत्वासम्भवः सूचितः ।

एवं लघुचन्द्रिकायां सत्तादात्म्यस्य पक्षतावच्छेदकत्वमुक्त्वा " ननु तादृशतादात्म्यस्यापक्षत्वापत्तिः तस्य स्वस्मिन्नभावात् तादात्म्यस्य तादात्म्यान्तरस्यानवस्थापत्त्याऽनङ्गीकारात् इति चेन्न घटाद्यभावस्येव तस्य स्वस्मिन् स्वरूपसम्बन्धेन वृत्तिस्वीकारात् घटाभावे घटो नास्तीतिवत् सत्तादात्म्यं सदिति प्रतीतेः इत्यादिना अभेदेऽप्याधाराधेयभावसमर्थनं कृतम् ।

अत एव एतमेवास्वरसमनुसन्धाय सिद्धिव्याख्याकारैः

" अथवा निर्धर्मकब्रह्मण्येव तत्प्रसिद्धिः । न चैवं तद्वदेव सद्रूपत्वेनामिथ्यात्वोपपत्त्याऽर्थान्तर, सधर्मकत्वेन पक्षविशेषणात्; एवं च सधर्मके प्रपञ्चे सत्त्वात्यन्ताभावविशिष्टासत्त्वात्यन्ताभावः सिध्यन् पक्षधर्मताबलान्मिथ्यात्वमादायैव पर्यवस्यति न तु सद्रूपत्वमादाय ब्रह्मवत्सद्रूपत्वे, सधर्मकत्वव्याघातात् । न हि ब्रह्मण इव प्रपञ्चस्य सदेव रूपं संख्यापरिमाणादिरूपान्तराङ्गीकारादिति " इत्यभिहितं तदतितुच्छम् । ब्रह्मणोऽपि सत्त्वाभावासत्त्वाभावोभयवत्वरूपमिथ्यालक्षणाक्रान्तत्वेन " ब्रह्म सत्यं जगन्मिथ्ये " ति वेदान्तडिण्डिमस्य संपूर्णभङ्गापत्तेः ।

किं च सिद्धिव्याख्याकृतैव " इदमुपलक्षणम्, वस्तुतो ब्रह्मभिन्ने शून्यवादिभिरस्माक साम्यमिष्टमित्यपि बोध्यम् " इत्यादिना ब्रह्मभिन्नेऽपरतत्वे शून्यवादिसाम्यमङ्गीकृतम् ।

असुधाकृताऽपि तत्रैव " शून्यवादिभिरपि शून्यत्वभावनानिवर्त्यानामपि वियदादीना यावत्सत्यवासनं सत्यत्वाङ्गीकारेण व्यावहारिकव्यवस्थाया उपपादनात् विज्ञानरूपात्ममिथ्यात्वमतमेव शून्यमतामिति वर्णितम् ।

प्रकृते च ब्रह्मणः सत्वाभावासत्वाभावोभयवत्वरूपमिथ्यात्वसमर्थनेन परतत्वरूपब्रह्मविषयेऽपि साम्यमुपदर्शितम् । तेन " सौगतब्रह्मवादिनोरेप विशेष " इत्यादिना ज्ञानज्ञेयरूपं सर्वं जगत्सत्वाभावासत्वाभावादिरूपानिर्वाच्यत्ववत् सौगतो मन्यते । ब्रह्मवादिनस्तु विज्ञानरूपब्रह्मव्यतिरिक्त सर्वमनिर्वाच्यमिति संगिरन्ते इति खण्डनकारप्रदर्शितं सौगतब्रह्मवादिवैलक्षण्यं निराकृत्य अद्वैतिनां बौद्धत्वं स्फुटीकृतं स्यात् ।

यच्चात्रार्थान्तरतत्परिहारकथनं तदप्यतिहेयम् ब्रह्मणोऽपि " एकमेवाद्वितीयम् " " सत्यं ज्ञानमनन्तं ब्रह्म " " अणोरणीयान् महतो महीयान् " एको देवः सर्वभूतेषु गूढः " एकस्तथा सर्वभूतान्तरात्मा " इत्यादिना संख्यापरिमाणादिरूपान्तरप्रतिपादनेन तस्यापि जगत इव सद्रूपत्वाभावापत्तेः ।

इत्थ च न्यायचन्द्रिकाप्रदर्शितप्रक्रियाणामतिनिर्दलतया न ताः न्यायसुधान्यायामृतकारादिभिः पूर्वपक्षतया समुट्टङ्किता न वा अद्वैतसिद्धिकारादिभिः सिद्धान्ततया सनिर्भरमुल्लिखिताः सति चैवम् असुधाकाराणां तत्प्रशंसनम् " अहो रूपमहो ध्वनि " रित्याभाणकं स्मारयति । इत्यलं सिकताकूपखननायासेन ।

अनयैव दिशा चित्सुख्याद्युक्तमपि निरस्तम् ।

इदं पुनरकौशलम् असुधाकृतः यद्बालसंघेनापि सुबोधम् । सदसद्विलक्षणत्वमिथ्यात्वोपपादनम् इति शिरोलेखे उपक्रमरूपे सदसद्विलक्षणत्वरूपानिर्वचनीयत्वस्य मिथ्यात्वे न कोऽपि लक्षणदोषः इत्युपसंहारवाक्ये च सदसद्विलक्षणत्वस्य मिथ्यात्वाङ्गीकारे असम्भवरूपलक्षणदोषस्य स्फुटत्वान्न लक्षणदोष इति कथनम् पृथिव्याः गन्धवत्वस्य मिथ्यात्वे असम्भवरूपदोषस्य स्फुटत्वेपि न कोऽपि दोषः इति कथनं यथा अकौशल्यापादकं तथैवेति बोध्यम् ।

एतेन (अ. सु. २०३ पत्रे) " सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावोभयरूपस्यैव सदसद्वैलक्षण्यस्य मिथ्यात्वरूपत्वस्वीकारात्, सत्त्वस्याबाध्यत्वरूपस्य ब्रह्ममात्रनिष्ठस्यैकत्वेने " त्यपि निरस्तम् । अबाध्यत्वस्यासत्साधारण्येन भवदङ्गीकृतस्य सत्त्वरूपत्वायोगात्, असत्साधारणस्य तस्य ब्रह्ममात्रनिष्ठत्वकथनायोगश्च । अ. सुधायामेव (४८ पत्रे) " तुच्छस्याप्यबाध्यत्वात् " (५० पत्रे) " यद्यप्यसतो ऽपि बाध्यत्वाभावा " दित्यादिना अनेकस्थलेषु असतोऽप्यबाध्यत्वसमर्थनात् ।

यत्तु " अबाध्यत्वाऽनधिकरणत्वस्यैव असद्वैलक्षण्यपदार्थत्वात् असद्वैलक्षण्येऽसत्पदेन क्वचिदुपाधौ सत्त्वेन प्रतीत्यर्हत्वस्य सत्तादात्म्यपर्यवसितस्य अबाध्यत्वाभावरूपस्य चैव सत्त्वासत्त्वोभयाभावपदार्थत्वात् " इति तदयुक्तम् । असत्पदेनेत्यनेन क्वचिदुपाधौ सत्त्वेन प्रतीत्यर्हत्वस्य सत्तादात्म्यपर्यवसितस्य असत्पदप्रतिपाद्यत्वमुपदर्शितम्, तेन च असत्त्वाभावो नाम क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वं सत्तादात्म्याभावो वा स्यात् । न चैतद्युक्तम्, त्वदाचार्यैः त्वया च पूर्व क्वचिदुपाधौ सत्त्वेन प्रतीत्यर्हत्वस्य सत्तादात्म्यस्य चासत्त्वाभावरूपत्वोक्तेः ।

किञ्च एवं सति सत्तादात्म्यस्य असत्त्वरूपत्वे तस्याबाध्यत्वाभावरूपत्वकथनमयुक्तं स्यात् असतः पूर्वमबाध्यत्वाङ्गीकारात् । एवं शुक्तिरजतादेः सत्तादात्म्यस्य सत्त्वेन प्रतीत्यर्हत्वस्य च त्वत्सिद्धान्तत्वेन सत्तादात्म्यस्यासत्पदार्थत्वेन शुक्ति-रजतादेरसत्त्वापत्त्या तवात्सख्यातिवादित्वस्यैव प्राप्त्या असत्ख्यातिनिराकरणाऽयोगः । अपि च शतभूषण्याम् " सत्तादात्म्यमात्र जगत्यध्यस्यते . . . सत्तादात्म्याभावे तुच्छत्वप्रसक्तिं वारयितुम् । असद्विलक्षणत्वं स्थाप्यते " इत्युक्तम् । असुधायां च सत्तादात्म्यस्यासत्पदार्थत्वमुक्तम् अतः स्फुटो विरोधः । अन्यच्च सत्त्वाभावः यदि भूषण्युक्तदिशा सत्तादात्म्याभावः तर्हि असत्त्वाभावः सत्तादात्म्यरूप एव वक्तव्यः । तथा सति तयोः परस्परव्याघातो दुष्परिहरः । तथा सत्तादात्म्यस्य असत्पदार्थत्वकथनं सत्त्वाभावासत्त्वाभावोभयरूपत्वकथनं च सर्वथा व्याहतम् ।

यच्चोक्तमसुधया " सदसद्भिन्नत्वख्यातिरूपानिर्वचनीयत्वनिरुक्तिः " इति शीर्षकस्याधस्तात् ( अ. २२० प ) " अनिर्वचनीत्वं ( नीयत्वं ? ) तु सदसद्भिन्नत्वम् । तच्च सत्त्वात्यन्ताभावसमानाधिकरणासत्त्वाभावमात्रम् । तत्र समानाधिकरणेति विशेषणमसत्त्वस्य । तेन च शुक्तिरूप्येऽसत्त्वादिनामपि ( त्ववादिनामपि ? ) सत्त्वेनप्रतीतिमङ्गीकुर्वाणानामपि दृष्ट्या शुक्तिरूप्यदृष्टान्तसिद्धिरनुसन्धेया । तत्र सत्त्वाभावाविशिष्टासत्त्वाकारेण चोक्तविशिष्टसिद्ध्या निदर्शनत्वाविरोधः " इति । तच्च अनिर्वचनीयत्वस्य ख्यातिरूपत्वायोगात् अधस्तदसमर्थनाच्चासम्बद्धप्रलाप एव । द्वैतिभिः शुक्तिरूप्ये सत्त्वाभावविशिष्टासत्त्वस्य स्वीकृत्वेन तत्र सत्त्वाभावविशिष्टासत्त्वास्वीकारेणेति कथनमसङ्गतम् । किञ्चोक्तविशिष्टसिद्धौ निदर्शनत्वस्य विरुद्धत्वात्तदविरोधकथनमप्यत्यन्तासम्बद्धम् ।

किञ्च किमर्थमयं विचित्रो विशिष्टाभावः साध्यते । किमसत्त्वमात्राभावस्य-विशेष्याभावस्य द्वैतवादिभिः जगत्यङ्गीकृतत्वेन सिद्धसाधनतोद्भाव्येतेति भयात् तत्परिहारार्थम् उत प्रयोजनमनपेक्ष्य एवमेव, आद्ये विशेषणाविवक्षणेऽपि द्वैतवादिभिः सत्त्वात्यन्ताभावरूपविशेषणस्य असत्त्वरूपविशेष्यस्य च जगत्यनङ्गीकारेण विशिष्टाभावस्य सिद्धत्वेन सिद्धसाधनताया दुरुद्धरत्वमेव । द्वितीयेऽनर्थकासम्बन्धप्रलापकारित्वेन निग्रहस्थानापातः । नापि दृष्टान्ते साध्यवैकल्यपरिहारार्थम्, द्वैतमते विशेष्याभावमात्रसाधने यथा दृष्टान्ते साध्यवैकल्यं तथा विशिष्टाभावसाधनेऽपि दृष्टान्ते साध्यवैकल्यं स्थिरमेव । न वा अद्वैतमते बाधपरिहारार्थमिति युक्तम्

विशेष्याभावमात्रस्यैवाबाधितत्वात्। नाप्यद्वैतमते दृष्टान्ते साध्यवैकल्यपरिहारार्थम् केवलासत्त्वाभावस्य साध्यत्वेऽपि दृष्टान्ते साध्यवैकल्याप्रसक्तेः विशेषणाभावप्रयुक्त-विशिष्टाभावसाधनप्रयासो विफलः। किञ्चात्र "शुक्तिरूप्यादौ सत्त्वसमानाधि-करणासत्त्वस्यास्वीकारेण सत्त्वाभावविशिष्टासत्त्वस्यास्वीकारात्" इति वाक्यम-सङ्गतम्। सत्त्वसमानाधिकरणासत्त्वास्वीकारस्य सत्त्वाभावविशिष्टासत्त्वास्वीकारं प्रत्यप्रयोजकत्वात् सत्त्वसमानाधिकरणासत्त्वस्वीकारस्य कथञ्चित् स्यात् न च तथा वक्तुं शक्यम्, शुक्तिरूप्येऽद्वैतिभिः सर्वथा असत्त्वाऽनङ्गीकारात्। वस्तुतस्तु ईदृशानिर्वचनीयत्वस्य ब्रह्मसाधारण्यात् तस्याप्यनिर्वचनीयत्वस्य वज्रलेपायितत्वेन "ब्रह्म सत्यं जगन्मिथ्या" इति सिद्धान्तः समूलमुन्मूलितः। खण्डनकार-प्रदर्शितस्य सौगतब्रह्मवादिवैलक्षण्यस्यापि निरासेन प्रकटबौद्धत्वमेव समर्थितं स्यात्। सत्त्वाभावविशिष्टो यः असत्त्वाभावः तद्वत्त्वं मिथ्यात्वम् इति प्राचीनमते कथञ्चित् ब्रह्मणि सत्त्वाभावरूपविशेषणाभावाद्विशिष्टरूपस्य मिथ्यात्वस्याभावेन "ब्रह्म सत्यं जगन्मिथ्या" इति कथनं सौगतब्रह्मवादिवैलक्षण्यकथनम्। तेन बौद्धत्वप्रच्छादनं च स्यात्। तत्पक्षे ब्रह्ममिथ्यात्ववादित्वस्य ब्रह्मणि भावरूपधर्मानङ्गीकारेण सत्त्वाभावासत्त्वाभावोभयवत्वस्यावश्यमङ्गीकार्यतया जगत इव तस्यापि मिथ्यात्व-वादिन एवाद्वैतिनोऽपि इत्युपपादनसापेक्षत्वात्। किं बहुना एक व्याघातापह्नवाय प्रवृत्ता अ.सुधा परःशतान् व्याघातान् स्वीकरोति। मन्ये च एवंविधानवलोक्यै-वोक्तं "**विवेकभ्रष्टानां भवति विनिपातः शतमुखः** इति। एतेन भावाभाव-विलक्षणत्वं मिथ्यात्वमित्यपि निरस्तम्।

यच्चोक्तम् (अ. २०१ प.) "अविद्यापरिणामस्य विश्वस्य न भावरूप-त्वमभावरूपत्वं वा सम्भवति" इत्यादि तदयुक्तम्। प्रत्यक्षेण सौषुप्तानुभवेन विवरणोपदर्शितानुमानैः अर्थापत्त्या च महता प्रयासेन अज्ञानस्य भावरूपत्व-समर्थनात् परिणाम्युपादानोपादेययोः सरूपत्वनियमेन भावरूपाविद्याकार्यस्य जगतोऽपि भावरूपताया एव वक्तव्यत्वात्। न च अविद्यायाः भावत्वोक्तेः अभाव-त्वानधिकरणत्वमेवार्थः प्रमाणान्यभाववैलक्षण्यमेव विषयीकुर्वन्तीति वाच्यम्। सर्वेषामप्यभावाना घटवति भूतले भासमानाना घटाभावादीनां चाज्ञानपरिणामत्वेन परिणामिकारणतत्कार्ययोरेकरूपत्वेनाज्ञानस्याभावविलक्षणत्वायोगात्। तथा चा-ज्ञानस्य तत्कार्याणा च भावाभावविलक्षणतृतीयप्रकारताकथनमयुक्तम्। चतुर्थ-प्रकारस्य तृतीयप्रकारत्वकथनमप्यद्वैतासिद्धान्ताऽनभिज्ञानमूलकमेवासुधायाः।

यच्चोक्तं तत्रैव "**अभावस्यासत्पदार्थत्वमेव गतिः**" इति । तेन हि द्वितीयाभावरूपाद्वैतस्य विशेषसामान्याभावरूपनिर्विशेषत्वस्य असद्रूपत्वसमर्थनेन साधु समर्थितः स्याददैतवादः निर्विशेषचैतन्यवादश्च । किं चैवं त्वन्मतरीत्या अद्वैतस्यातत्त्वरूपत्वेन त्वत्प्रणीतप्रबन्धानां "अद्वैताऽतत्त्वशुद्धिः" "अद्वैताऽतत्त्वसुधा" इत्यन्वर्थकनामकरणमेव युक्तम् । मन्यामहे च अद्वैतश्रद्धालवः तिरस्कुर्युरिति भयादेव भवताऽन्वर्थकसंज्ञाकरणं विहाय पारिभाषिकसंज्ञा कृतेति ।

यच्चाभिहितम् ( अ. २०१ ) "तथा च न भावाभावान्यतरविलक्षणत्वमत्र सदसद्विलक्षणत्वम् । किन्तु भावाभावोभयवैलक्षण्यमेवेति नात्र सिद्धसाधनम्, अर्थान्तरता वा" इति । तत्रेदं वक्तव्यम् उभयवैलक्षण्यमित्यस्य किमुभयत्वाश्रयनिष्ठप्रतियोगिताकभेदवत्वमर्थः उतोभयत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वम् आद्ये भावे अभावे च तत्सिद्धमेवेति सिद्धसाधनं दुर्वारम् ॥

द्वितीयेऽपि एकं नोभयमिति प्रतीतेः प्रत्येकं व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्य सकलतान्त्रिकसम्मतत्वेन प्रत्येकं भावे अभावे च भावाभावोभयत्वावच्छिन्नप्रतियोगिताकभेदसत्वेन सिद्धसाधनताया वज्रलेपायितत्वसम्पादनमेव कृतं स्यात् । एकं नोभयमिति प्रतीतेः प्रामाण्यनिर्वाहाय उभयवैलक्षण्यमित्यस्य उभयत्वनिष्ठपर्याप्तिसम्बन्धाऽवच्छिन्नाऽवच्छेदकताकप्रतियोगिताकभेदबोधकताया एव वक्तव्यत्वेन भेदस्य प्रतियोगिताऽवच्छेदकतावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकवत्येव वृत्तिविरोधात् प्रत्येकं भावस्य अभावस्य वा पर्याप्तिसम्बन्धेन उभयत्वाऽनधिकरणत्वेन तत्रोपदर्शितोभयवैलक्षण्यस्य निष्प्रत्यूहत्वात् ।

वस्तुतस्तु "न भावाभावोभयवैलक्षण्यमत्र सदसद्विलक्षणत्त्वम्, किन्तु भावाभावान्यतरविलक्षणत्वमेवेति नात्र सिद्धसाधनमर्थान्तरं वा" इति अद्वैतिभिर्वक्तव्यम् एतत्पक्षे भावाभावान्यतरविलक्षणत्वं नाम भावाभावान्यतरत्वनिष्ठस्वरूपसम्बन्धाऽवच्छिन्नाऽवच्छेदकताकप्रतियोगिताकभेदवत्वं तच्च प्रतियोगितावच्छेदकतावच्छेदकेन स्वरूपसम्बन्धेन प्रतियोगितावच्छेदकीभूताऽन्यतरत्ववति भावे अभावे वा न सम्भवतीति न सिद्धसाधनाऽवकाशः, इति कथंचिदुक्तं युक्तम् परं सकलतान्त्रिकमर्यादोल्लङ्घनेनैव प्राप्तात्मलाभा वराकी कथं तान्त्रिकमर्यादानुसारि तदविरुद्धं वा तत्त्वं प्रतिपादयेदसुधा ।

यदपि " एतेन विवादपदं सदसाद्विलक्षणं दृश्यत्वादिति सदसाद्विलक्षणत्वेऽनुमानप्रमाणमपि व्याख्यातमित्युक्तं तदपि निरस्तम् सत्त्वासत्त्वयोः परस्परविरहरूपत्वसमर्थनेन शुक्तिरूप्यादौ कचिदुपाधौ सत्त्वेन प्रतीत्यर्हत्वस्य तदनर्हत्वस्य चासम्भवात् लघुचन्द्रिकाद्युक्तदिशा सत्त्वेऽपि सत्त्वाङ्गीकारेण असत्त्वेऽपि सत्त्वाङ्गीकारेण सत्त्वाभावासत्त्वाभावोभयवत्वस्य सदसाद्विलक्षणत्वस्य वा सत्त्वे असत्त्वे वा असम्भवात्साध्याप्रसिद्धेर्वज्रलेपायितत्वात् ।

एतेन " अयमेव न्यायः सत्त्वासत्त्वे एकवस्तुनिष्ठात्यन्ताभावप्रतियोगिनी धर्मत्वादित्यनुमानेऽपि । तत्र वस्तुपदेन सत्पदार्थो वा विवक्ष्यताम्, धर्मिमात्रं वा, उभयथाऽपि सत्त्वासत्त्वायोरेकत्र सद्रूपे ब्रह्मण्युक्तरूपयोरभावात्, धर्मिमात्रविवक्षायां तु शुक्तिरूप्यादौ सामानाधिकरण्यमिति न व्याघातः " इत्यपि निराकृतम् । वस्तुशब्देन सत्पदार्थविवक्षया ब्रह्मणः सत्त्वाभावासत्वाभावोभयवत्वरूपमिथ्यात्ववर्णनेन " विज्ञानरूपात्ममिथ्यात्वमतमेव शून्यमतम् " इति स्वयं कण्ठरवेणोद्घोषितत्वेन सौगताद्वैतमतयोरैक्यापातात् सद्रूपे सत्त्वाभावः व्याहतः इत्युक्त दोषस्य सद्रूपे सत्त्वाभावोक्तिमात्रेण कथ परिहारः । किञ्चैव वन्ध्यायाः पुत्रवत्त्वमित्युक्तिमात्रेण मम माता वन्ध्येति वाक्येऽपि व्याघातपरिहारप्रसङ्गः ।

धर्मिमात्रविवक्षया शुक्तिरूप्यादौ सामानाधिकरण्यकथनमपि व्याहत सत्त्वासत्त्वयोः " तत्र चासत्त्वम् " इत्यादिना परस्पराविरहरूपत्वस्य स्वयमेव समर्थनात् । तथा अद्वैतसिद्धिप्रदर्शितप्राक्रियाया असौष्ठवस्यापि स्वयमुपपादनात् न्यायचन्द्रिकाप्रदर्शितप्रक्रियायां अपि पञ्चपादिकाविरुद्धत्वेन अनादरणीयतया सत्त्वासत्त्वयोः परस्परविरुद्धत्वावश्यंम्भावेन शुक्तिरूप्यादौ तयोः सामानाधिकरण्यकथनस्य व्याहतत्वात् ।

यच्चोक्तम् " ब्रह्मणि सद्रूपे निर्धर्मके प्रमेयत्वाभिधेत्वयोरप्यभावेन तत्रसाध्यस्यापि सत्त्वात् नानैकान्तोऽपी " ति तदप्ययुक्तम् । निर्धर्मकत्वस्य ब्रह्मणि भावाभावाभ्यां ' मूको ऽहमि ' तिवत् स्वव्याघातात् । यदि निर्धर्मकत्वरूपधर्मोऽप्यनेनैव निषिध्यते इत्युच्यते तर्हि मूकोऽहमिति वाक्येन मूकोऽमितिवाक्यमपि निषिध्यते इति समम् ।

यद्वि च " निर्धर्मकत्वस्य धर्मरूपत्वे धर्मत्वेनैव रूपेण तन्निषेधस्याद्वितीयवाक्ये द्वितीयाभावरूपद्वितीयनिषेधस्येवोपपत्तेः । अन्यथा विशेषत्वावच्छिन्ननिषेधप्रतीतिरनुपपत्तेः " इत्युच्यते तदा मूकोऽहमित्यस्य वचनत्वे वचनत्वेनैव रूपेण तन्निषेधस्योपपत्तेरित्यपि वक्तुं शक्यत्वेन स्वव्याघातवार्ताविलोपप्रसङ्गात् ।

यदि वा अभावस्याधिकरणस्वरूपत्वपक्षे निर्धर्मकत्वस्य ब्रह्मस्वरूपानतिरेकितया न तेन सधर्मकत्वापत्तिरित्युच्यते तदा वचनसामान्याभावस्यापि अधिकरणस्वरूपत्वेन न वचनाभाववत्वमित्यपि सुवचम् । धर्माभावधर्मयोर्धर्मत्वेन एकरूपेण निषेधसम्भवेऽपि मूकोऽहमित्यत्र वक्तृत्वतदभावयोरेकरूपेण निषेधाभावात् व्याघातोपपत्तिरिति न वाच्यम् । मूकशब्देन वचनत्वेन वक्तृत्वत्वेन रूपेण एकेनैव मूकोऽहमिति वचनतदितरवचनयोर्निषेधेन व्याघातोपपत्तिरिति साम्यात् व्याघातवार्तोच्छेदभिया ब्रह्मणि निर्धर्मकत्वाङ्गीकारायोगात् ।

किञ्च निर्धर्मकत्वस्य निर्धर्मकत्वप्रकारप्रमाविषयत्वसापेक्षत्वेन निर्धर्मकशब्दाभिधेयत्वसापेक्षत्वेन च अभिधेयत्वप्रमेयत्वयोरावश्यकत्वेन तन्निषेधायोगात् मेयासिद्धेर्मानापेक्षत्वात् ब्रह्मणः निर्धर्मकत्वप्रकारकप्रमाविषयत्वाभावे निर्धर्मकत्वमेव न सिध्येत् । अन्यथा घटादेरपि निर्धर्मकत्वं स्यात् । इत्थ च प्रमेयत्वादावनैकान्त्यं दुष्परिहरम् । ब्रह्मत्वाब्रह्मत्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी धर्मत्वात् रूपरसवदित्याभाससमानयोगक्षेमत्व च ।

ब्रह्मण्युभयाभावस्यापीष्टत्वात्पक्षसमत्वकथनं तु नास्मिन् पक्षे युज्यते ब्रह्मवादिना ब्रह्मणि ब्रह्मत्वाभावाङ्गीकारायोगात् ।

एतेन "घटादिकम् अनिर्वचनीयम् अधिष्ठानज्ञानप्रयुक्ताभावप्रतियोग्यज्ञानपरिणामत्वात् संप्रतिपन्नवद्" इत्यपि परास्तम् असिद्धेः दृष्टान्ते साधनवैकल्याच्च ।

यदुक्तम् "एतेन सच्चेन्न बाध्येत असच्चेन्न प्रतीयेतेत्यर्थापत्तिरपि शुक्तिरजतानिर्वचनीयताया प्रमाणम्" इति । तन्न, अस्य तर्कत्वेनार्थापत्तिरूपत्वाभावात् । नचास्य वाक्यस्य प्रतीतिबाधान्यथानुपपत्तिरूपार्थापत्तावेव तात्पर्यमिति वाच्यम् । तावताऽपि विमतं सदसद्विलक्षणं बाध्यत्वे सति प्रतीयमानत्वाद् इत्यनुमान एव पर्यवसानेन तस्य च दृष्टान्ते साध्यवैकल्यप्रदर्शनादिना दूषितत्वात्, अर्थापत्तेः पृथक्प्रामाण्याभावस्यानुपदमेव समर्थयिष्यमाणत्वाच्च । अस्तु वा अर्थापत्तेः पृथक्प्रामाण्यं, तथापि "न च भ्रान्तिविषयो रजतमसद्रूपं भवितुमर्हति तस्य तदुपादानाज्ञानाविषयत्वात् तन्निवर्तकज्ञानाविषयत्वाच्च" इति असुधा स्मृतिभ्रंशमूलैव । तदुपादानेत्यत्र तत्पदेन असद्विलक्षणे तस्योपादानाप्रसिद्धेः रजतविवक्षणे शुक्तिरजतम् असद्रूपं न भवति तदुपादानाज्ञानाविषयत्वात् तन्निवर्तकज्ञाना-

विषयत्वाद् इत्यनुमानद्वयस्यापि असति व्यभिचारः । वस्तुतस्तु भ्रान्तिविषयो रजतम् असद् भवितुमर्हति तदुपादानाज्ञानाविषयत्वात् तन्निवर्तकज्ञानाविषयत्वाद्वा शशविषाणाद्यसद्वत् इत्यनुमानेन भ्रान्तिविषयरजतस्यासद्रूपत्वमेव सिध्येत् । तथा च स्वप्रातिकूल्यमेवाचरितं स्यात् भ्रष्टस्मृत्या अज्ञुधयेति विज्ञेयम् ।

यच्चोक्तम् " तथा च शुक्तिरूप्यादिकं यद्युक्तरूपमसद्रूपं स्यात् तर्हि न बाध्येत बाध्यते तु अतः सद्विलक्षणम् " इति । तत्र ब्रूमः यदीदं वचनं सच्चेन्न बाध्येतेति तर्कस्यैव पुनः प्रदर्शनं तदा सद्रूपत्वस्य प्रागापादकत्वमुक्त्वा तत्क्षण एव पुनः तत्स्थाने असद्रूपत्वस्यापादकत्वकथनेन स्मृतिभ्रंशस्य पराकाष्ठा समासादिता स्यात् । यदीदं तर्कान्तरं तदा तर्काङ्गेषु आपादकविपर्ययपर्यवसानस्य मुख्यतया असद्रूपत्वस्यैवापादकत्वेन अतः असद्विलक्षणमित्येव विपर्ययपर्यवसानस्य कर्तव्यत्वे " अतः सद्विलक्षणम् " इति अनापादकविपर्ययपर्यवसानकरणेन तर्कस्य पञ्चमाङ्गविनाशात् बुद्धिप्रणाशस्यापि पराकाष्ठा समासादिता स्यात् " इति ।

किञ्च " तत्र सच्चेदित्यत्र सत्पदार्थो न सत्ताजातिविशिष्टम्, अबाध्यम्, ब्रह्म वा, किन्तु सद्रूपम् । तच्च तत्तद्विवर्तोपादानमधिष्ठानस्वरूप सदात्मना भासमानं ब्रह्मैव, यस्याखण्डात्मना साक्षात्कारोऽज्ञानादिनिवर्तकः " (अ. प. ४९) इत्यपि व्याहतमेव । पूर्ववाक्ये सत्पदार्थो न ब्रह्मेत्युक्त्वा किन्त्वित्यादिना सदात्मना भासमानं ब्रह्मैवेति ब्रह्मण एव सत्पदार्थत्वकथने व्याहतेः स्फुटत्वात् । तथा च सद्विलक्षणमित्यस्य ब्रह्मविलक्षणमित्यर्थः स्यात् । तथा च तत्त्वस्य जगति सिद्धत्वेन सिद्धसाधनतायाः स्थैर्यसंपादनेन द्वैतिनामेवानुकूल्यमाचरितम् । किञ्च सच्चेदित्यत्र सत्पदार्थः कः इति प्रश्नस्य ' किन्तु सद्रूपम् ' इत्येतदनुत्तरमेव । तत्रापि सद्रूपमित्यत्र सत्पदार्थः कः इति प्रश्नस्य तदवस्थत्वात् ।

" यद्यप्यसतोऽपि बाध्यत्वाभावाद् बाध्यत्वादेवासद्वैलक्षण्यमप्यर्थसिद्धम् " (अ. प. ५०) इति कथनमपि व्याहतमेव । असत्त्वस्य त्रैकालिकनिषेधप्रतियोगित्वरूपत्वात् बाध्यत्वस्य च प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपत्वात् । तथा च बाध्यत्वं व्याप्यम् असत्त्वं व्यापकमित्यायातम् । सति चैवं व्याप्यविशेषेण व्यापकसामान्याभावसाधनस्य व्याहतत्वात् । न हि पृथिवीत्वरूपव्याप्यविशेषेण द्रव्यत्वसामान्याभावसाधनं न व्याहतम् । वस्तुतस्तु " सत्त्वाभावस्त्वबाध्यत्वाभाव एव " इति पूर्वमुक्तत्वात् । असत्त्वमित्यत्रापि

सत्त्वस्याऽभावोऽसत्त्वमिति व्युत्पत्त्या नञः स्वसमभिव्याहृतपदार्थप्रतियोगिकाभावबोधकत्वनियमानुसारेणासत्त्वस्याबाध्यत्वाभावरूपत्वात्। अबाध्यत्वाभावश्च बाध्यत्वमेव। तथा च जगत् असद्विलक्षणं बाध्यत्वाभाववत्–बाध्यत्वात् इति विरुद्धमेव।

उक्तं हि असुधायामेव "क्वचिदुपाधौ त्रैकालिकनिषेधप्रतियोगित्वमसत्त्वम्, तदभावः सत्त्वम्, सत्त्वं तु मिथ्यात्वघटकमबाध्यत्वमेव" (अ. प ७२) इति। यच्चोक्तम् "असत एव भ्रमे भानं भवतु" "असत एव रजतादेः सत्त्वेन भानसंभवाच्चेति शङ्कावारणार्थम् असच्चेन्न प्रतीयेतेति प्रसङ्गान्तरमत्रानुसन्धीयते" (अ. प. ५०) इति तदपि व्याहतम्। अग्रे "असद्वैलक्षण्येऽसत्पदेन क्वचिदुपाधौ सत्त्वेन प्रतीत्यर्हत्वस्य" (अ. प. २०३) इति ग्रन्थेन असतोऽपि सत्त्वेन प्रतीतेः असुधयैव स्वीकारात् "असच्चेन्न प्रतीयेत" इति तर्कस्य व्याप्तिरूपाङ्गविकलत्वेनाभासत्वात्।

यदपि कथितम् "'तत्र न प्रतीयेते' त्यत्रापाद्यमानाऽप्रतीतिः सदात्मनाऽसत्त्वेन वा, अपरोक्षतयावाऽप्रतीतिरेव। तत्र शुक्तिरजतादि यद्यसत्, तर्हि तस्याविद्यावृत्तिरूपविकल्पाख्यप्रतीतिरेव स्यात्, न त्वपरोक्षविपर्ययविषयता; अन्यथाविपर्ययाविकल्पभेदेन वृत्तिगणनायोगः; विपर्ययस्याप्यसत्प्रतीतिविषयत्वाविशेषात्"। (अ. प. ५०) इत्यादि तदपि व्याहतम्, विकल्पविपर्ययोः अद्वैतमतेऽपि असद्विलक्षणत्वेनासत्प्रतीतिविषयत्वायोगात्। एवं न प्रतीयेतेत्यत्रापाद्यमाना अप्रतीतिः नापरोक्षप्रतीत्यभावरूपेति वक्तुं शक्यम्, नित्यातीन्द्रियाणामसद्वैलक्षण्यासिद्धिप्रसङ्गात्। किन्तु परोक्षापरोक्षसाधारणप्रतीत्यभावरूपैव। एवं च "नरशिरासि विषाणमस्तीति वाक्य तु विशेषणसम्बन्धमात्र बोधयति, स चासन्नेवाऽनुयोगिमात्रस्य तत्र सत्त्वेऽपि। सर्वथा तु नेद प्रत्यक्षम्, इति शब्दात्, तद्बोधो न दोषाय" (अ. प. २३२) इति असुधयैव स्पष्टमभिधानात्। असतः सत्त्वेन परोक्षभ्रमरूपप्रतीतिविषयत्वम् असत्त्वेन परोक्षप्रमारूपप्रतीतिविषयत्वं चास्त्येवेति असच्चेन्न प्रतीयेतेति तर्कस्य व्याप्तिविकलत्वेनाभासत्वमेव। सति चैवं परोक्षे त्वन्यथाख्यातिरित्यादिग्रन्थेन भ्रमविषयसंसर्गस्य न प्रातिभासिकत्वं न वा असत्त्वं किन्तु सत्त्वमेवेति कथनं स्वव्याहतमेव।

यच्चाभिहितम् "सर्वथा तु प्रमाणजन्यप्रत्यक्ष–परोक्षज्ञानविषयत्वं भ्रमे भासमानस्यासत्त्वे प्रतिबन्धि" (अ. प २३२) इति तदतिहेयम्, शशविषाणमसत्

इत्याकारकशब्दप्रमाणजन्यासत्त्वप्रकारकपरोक्षज्ञानविषयत्वस्य असत्यपि सत्त्वेनासत्त्वाप्रतिबन्धित्वात् ।

किञ्च प्रमाणजन्यप्रत्यक्षपरोक्षज्ञानविषयत्वमित्यनेनान्यतरपदाघटितेन हि एकस्यैव ज्ञानस्य प्रमाणजन्यत्वं प्रत्यक्षत्व परोक्षत्वं च विशेषणमिति ज्ञायते । तच्च प्रत्यक्षत्वपरोक्षत्वयोर्विरुद्धत्वादयुक्तम् ।

अपि च, एव सति असच्चेन्न प्रमीयेतेति तर्कस्वरूपं स्यात् तथा च शुक्तिरजतमसच्चेन्न प्रमीयेतेति व्याहततरमुक्त स्यात् । किञ्चेयमसुधा विकल्पाख्यप्रतीतिरेव स्यादिति वाक्येन विकल्पस्यापि प्रतीतित्वमङ्गीकरोति । असच्चेन्न प्रतीयेतेत्यत्र प्राचीनैरद्वैतिभिः असतः प्रतीतिरेव निवारिता । ( अनुव्याख्यानकारैः न्यायसुधाकारैश्च )

**" तस्मादसत्प्रतीतिश्च कथं तेन निवार्यते "**

इत्यादिना प्रतीत्यन्यथाऽनुपपत्त्या असद्वैलक्षण्यसिद्धिर्निराकृता । तदुक्तदोषोद्धाराय प्रवृत्तया असुधया "असच्चेन्न प्रमीयेत" "न साक्षात्क्रियेत" इत्यादितर्कान्तरप्रदर्शनं च कृतम्, न तावता पूर्वोपदर्शिततर्कदोषोद्धारः सम्भवति । एतेषां प्रतीतिविशेषाभावापादनरूपाणा तर्काणां दुष्टत्वमभिप्रेत्यैव प्राचीनाद्वैतिभिः ते परित्यक्ताः । प्राचीनाद्वैत्यभिमतदोषाज्ञानाच्च असुधा भ्रान्तचित्ता आसीत् । अतस्तान् दोषान् संक्षेपेण प्रदर्शयामः येन स्वस्थचित्ता स्यात् । तथा हि—"न प्रमीयेत" इत्युक्तौ शुक्तिरूप्ये असद्वैलक्षण्यासिद्धिः सत्त्वेन प्रमीयमाणत्वस्य तत्राभावात् यथा कथञ्चित् अत्यन्तासदेव रजतं प्रत्यभादित्यादिप्रमाविषयत्वस्य च असत्त्वसाधकत्वेन असद्वैलक्षण्यासाधकत्वात् । न साक्षात्क्रियेत इति तु नित्यातीन्द्रियाणां साक्षात्कारविषयत्वाभावेन तत्रासद्वैलक्षण्यासिद्धिप्रसङ्गात् हेयमेव । किञ्च "यद्यसत्स्यात् तर्हि सत्त्वप्रकारकविपर्ययविषयो न स्यात्" इत्यापादनमप्यसङ्गतम् । द्वैतिभिः सत्त्वप्रकारकविपर्ययविषयत्वस्य असत्त्वव्याप्यत्वाङ्गीकारेण तर्कस्य व्याप्तिविकलतयाऽऽभासत्वापातात् ।

किञ्च अत एव भ्रमस्य विकल्पाख्यवृत्तितो भेदेन योगसूत्रे परिगणनम् "प्रमाणनिद्रास्मृतिविपर्ययविकल्पाः" इति वाक्येन प्रमाणत्वादीनां वृत्तिविभाजकधर्मत्वे परस्परासामानाधिकरण्यस्यावश्यकत्वेन विकल्पेऽपि विपर्ययत्वाङ्गीकारे विकल्पत्वविपर्ययत्वयोः परस्पराविरुद्धत्वेनास्य वृत्तिविभागपरस्य योगसूत्रस्याप्रामाण्यापत्तिः । अतः विपर्ययस्य—भ्रमस्य—विकल्पस्य च भेद एवाङ्गीकार्य इति

प्रतिपाद्य–" स्मृतेरपि भ्रमत्वेऽपि " इत्यादिना उपदर्शितसूत्रस्य विभागपरत्वे अप्रामाण्यमेव पर्यायेण समर्थयति । परा कोटिमुपारूढश्चास्याः सम्मोहः । अत इदानीं चक्रीवतो धर्मपत्नीं वराकीमिमामद्वैततत्त्वसुधां वारिधिमेव काष्ठामवलम्बमानामुपेक्ष्य ग्रामसिंहप्रियपत्नीमद्वैतसिद्धिं समुत्सारयामः ।

यदुक्तमद्वैतसिद्धौ " प्रतीत्यभावेऽपि असतः असन्नृशृङ्गमिति विकल्पमात्रेण सर्वोपपत्तेः । तदुक्तं शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति " इति । तन्न मनोरमम् गौडपादाचार्यैः " निश्चितायां यथा रज्वां विकल्पो विनिवर्तते " । इत्यादिना निश्चयभिन्नज्ञानस्यसंशयस्य विकल्परूपत्वोक्तेः प्रतीतिविशेषरूपविकल्पाविषयत्वे प्रतीतिसामान्याभावकथनायोगात् किञ्च " स्वप्नमाये यथादृष्टे गन्धर्वनगरं यथा " इति गौडपादकारिकाव्याख्यानाऽवसरे शंकराचार्यैः " स्वप्नमाये असद्वस्त्वात्मिके असत्यौ सत्यौ सद्वस्त्वात्मिके इव लक्ष्येते अविवेकिभिः " इत्यादि वाक्ये असतः सत्त्वप्रकारकदर्शनविषयत्वस्य स्पष्टमभिधानात् । तथा " असज्जागरिते दृष्ट्वा स्वप्ने पश्यति तन्मनः । असत्स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्यति " इति गौडपादकारिकाव्याख्यायाम् असदविद्यमान रज्जुसर्पवद्विकल्पित वस्तु जागरिते दृष्ट्वा स्वप्नेऽपि विकल्पयन् पश्यति " इत्यादि वाक्यैः विकल्पस्य अपरोक्षभ्रमस्य चैकरूपत्वं वर्णितं तैरेव । अतः शङ्कराचार्यानुयायिनः तव तदनभिमतायाः तत्र तत्र भाष्ये निराकृतायाः योगशास्त्रप्राक्रियायाः अवलम्बनस्यानौचित्यात् ।

किञ्च अद्वैतसिद्धावेव सूत्रव्याख्यानोपदर्शितायाः एतावन्तं कालं न किञ्चिदवेदिषमिति परामर्शसिद्धसौषुप्तिकप्रत्यक्षरूपनिद्रायाः अविद्याविषये प्रामाण्यं समर्थयता अद्वैतसिद्धिकृता प्रमाणविपर्ययविकल्पनिद्रास्मृतय इति वृत्तिविभागपरयोगसूत्रप्रामाण्यस्य पर्यायेण निराकृतत्वात् पुनर्योगसूत्रप्रामाण्याङ्गीकारे स्वव्याघातः । योगसूत्रश्रद्धायां तु श्रीवनमालिदासप्रदर्शितरीत्या असद्विशेष्यको भ्रमः विकल्पः सद्विशेष्यको भ्रमः विपर्ययः इति विशेषाश्रयणेन पृथग्गणनसम्भवेन उक्तयोगसूत्रस्य विभागपरत्वमुपपादनीयम् ।

केचित्तु आहार्यभ्रमो विकल्पः अनाहार्यभ्रमो विपर्यय इति विशेषमङ्गीकृत्य विभागमुपपादयन्ति । योगसूत्रभाष्यकाराः टीकाकाराः वाचस्पतिमिश्राश्च अभेदेऽपि स्वभावविशेषबलाद्यत्र सम्बन्धप्रतीतिः तत्र विकल्पः स च प्रमाणोपारोही प्रमाणभूत एव न भ्रमः यथा पुरुषस्य चैतन्यमिति । अत एव " आनन्दं

**ब्रह्मणो विद्वान् बिभेति कुतश्चन** " इति श्रुतौ आनन्दब्रह्मसम्बन्धज्ञानस्य मोक्षहेतुत्वमुक्तमुपपद्यते । तज्ज्ञानस्य प्रमाभिन्नत्वे मोक्षहेतुत्वानुपपत्तेरिति मन्यन्ते।' न केनाऽपि योगसूत्रकृता तद्भाष्यकृता टीकाकृता टिप्पणीकृता वा विकल्पस्य शशविषाणमित्याकारकता प्रदर्शिता । अतः योगसूत्रतद्भाष्यकाराद्यसम्मतस्य अद्वैतसिद्धि–अद्वैततत्त्वसुधादिप्रदर्शितयोगसूत्रव्याख्यानस्य हेयत्वमेवेति तत्त्वम् ।

अपि च अद्वैतसिद्धौ " येन पुसा शशे शृङ्गाभावोना वगतः तस्य गोशृङ्गमस्तीति वाक्यादिव शशशृङ्गमस्तीति वाक्यादपि भ्रान्तिदर्शनात् । न हि घढधपादिशव्दवदत्र पदार्थानुपस्थापकत्वम् न वा कुण्डमजाजिनमित्यादिवदन्वयाबोधकत्वम् अयोग्यताज्ञानाभावस्य योग्यताभ्रमस्य वा आकाङ्क्षादिसामग्रीसध्रीचीनस्य सत्त्वात् अन्यथाप्रतीत्यभावप्रसङ्गः " इत्याशङ्क्य " इदं रजतमिति प्रात्यक्षिकभ्रमवत् अस्याप्यनिर्वाच्यविषयकत्वात् " इत्यादिना शशशृङ्गम् अनिर्वाच्यमेकम् असच्चापरमिति शशशृङ्गे द्वैविध्य परिकल्प्य तत्र शशविषाणमस्तीति वाक्यबोध्यमनिर्वाच्यम् । असन्नृशृङ्गम् असच्छशविपाणमित्यादि वाक्याद्विकल्प्यमानमसादिति कथितम् । तदपि वञ्चनामात्रम् । तथा साति अनिर्वाच्यस्य शशविषाणस्य निवृत्तिरे व न स्यात् । असच्छशविषाणमित्यस्य शशविषाण नास्तीत्यस्य च विकल्पत्वेन वाधज्ञानत्वाभावात् । ज्ञानत्वे वा भ्रमविषयीभूते शशविषाणे अस्तित्वनिषेधकत्वाभावेन अनिर्वाच्यशशविषाणाऽबाधकत्वात् । कथञ्चित् ब्रह्मज्ञानबाध्यत्वे तु तस्य शशविषाणस्य व्यावहारिकत्वापातः । तत एवार्थक्रियाकारित्वापातश्च । अनुभवविरुद्धत्वान्नात्रेष्टापत्तिरिति वक्तु युक्तम् । एवं सत्यपि मुखमस्तीति न्यायमवलम्ब्य इष्टापत्तिरिति यदि कथयेत् तदा सत्कथागोष्ठीद्वारतो बहिरुत्सारणीयेति दिक् ।

**इति अज्ञानस्य तत्प्रयुक्तस्य बन्धस्योभयस्यापि सदसद्विलक्षणत्वेनानिर्वचनीयत्वनिरासः ॥**

**॥ अनादेरज्ञानस्यानिर्वचनीयस्य ज्ञानमात्रबाध्यत्वमित्युक्तिनिरासः ॥**

यदुक्तम् " अज्ञानस्यानिर्वचनीयस्य " इति तदयुक्तम् अनिर्वचनीयत्वस्य निरस्तत्वात् । ज्ञानमात्रबाध्यत्वमित्यप्ययुक्तम् । तत्र बाध्यत्वं यदि निवर्त्यत्वं नाशप्रतियोगित्वरूपं तदा ज्ञानेतराजन्यनाशप्रतियोगित्वम् इति अर्थः स्यात् ततश्च त्वन्मते जन्यमात्रस्य ज्ञानेतराज्ञानकार्यत्वेन ज्ञानेतराजन्यनाशा प्रसिद्धिः । यदि

ज्ञानेतरेश्वराजन्यनाशप्रतियोगित्वं तत्, तदाऽपि "**पयोम्बुवच्चेत्तत्रापि**" इति ब्रह्मसूत्रेण "शास्त्रदृष्ट्या तु सर्वत्रैवेश्वरापेक्षत्वमापद्यमानं न पराणुद्यते" इति शाङ्करभाष्येण च विरोधः पूर्वत्र प्रदर्शित एव। यदि बाध्यत्वं त्रैकालिकनिषेध-प्रतियोगित्वम्, तदा अज्ञानस्यानादित्वविशेषणमयुक्तम्। न हि सार्वकालिक-निषेधप्रतियोगिनः पूर्वकालिकनिषेधाप्रतियोगित्वरूपमनादित्वं सम्भवति। एवं त्रैकालिकनिषेधस्य अनादिनित्यस्य ज्ञानजन्यत्वमत्यन्तासम्भावितम्। अतः ज्ञान-जन्यत्रैकालिकनिषेधप्रतियोगित्व ज्ञानबाध्यत्वमित्यप्ययुक्तम्।

**इति अज्ञानस्य ज्ञानमात्रबाध्यत्वनिरासः।**

**॥ ज्ञाननिवर्त्यस्य सत्यत्वाविरोधित्वसमर्थनम् ॥**

अज्ञानस्य बन्धस्य च ज्ञाननिवर्त्यत्वकथनात् सत्यत्वासिद्धिः। तथा च अज्ञान बन्धो वा सत्यः—सद्वैलक्षण्याभाववान्—रुत्वाभावाभाववान्—निवर्त्यत्वात् यत्र सत्यत्वाभावः—सद्वैलक्षण्यं—तत्र निवर्त्यत्वाभावः यथा शशविषाणे। न चासिद्धिः "**तरति शोकमात्मवित्**" इत्यादिश्रुत्या पक्षे हेतुसिद्धेः सर्वसम्प्रतिपन्नत्वात्। अत एव गौडपादप्रभृतिभिः जगतः उत्पत्तिनाशाङ्गीकारे सत्यत्वापत्तिभिया जगतः असत्त्वं सिद्धवत्कृत्वा असत्त्वेन उत्पत्तिनाशराहित्यं जगतोऽभिहितं शशविषाण-दृष्टान्तेन। ततश्च यथा शशविषाणस्य असत्त्वरूपमेव सद्विलक्षणत्वं न तु अस-द्विलक्षणत्वविशिष्ट सद्विलक्षणत्व तथा जगतोऽपीत्यपि समर्थितम्। एतच्च गौड-पादकारिकातद्भाष्यप्रदर्शनेन स्फुटीक्रियते। तथा हि—

"न निरोधो नचोत्पत्तिः न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता" ॥ इति। (गौडपादकारिका)

कथमुत्पत्तिप्रलयोरभाव इत्युच्यते द्वैतस्यासत्त्वात्। 'यत्र हि द्वैतमिव भवति' 'य इह नानेव पश्यति' 'आत्मैवेदं सर्वम्' 'ब्रह्मैवेदं सर्वम्' 'एकमेवा-द्वितीयम्' 'इदं सर्वं यदयमात्मा' इत्यादिनानाश्रुतिभ्यो द्वैतस्यासत्त्वं सिद्धम्। सतो ह्युत्पत्तिः प्रलयो वा स्यान्नासतः शशविषाणादेः" इति। (शाङ्करभाष्यम्) ततश्च यत्र असत्त्वम्-सद्विलक्षणत्वम्-शशविषाणादौ तत्र प्रलयाभावः-निवर्त्यत्वा-भावः इति व्याप्तिः सिध्यति अधिकंतुचन्द्रिकामण्डनकारप्रणीताद्वैतखण्डने द्रष्टव्यम्।

**इति ज्ञाननिवर्त्यत्वस्य सत्यत्वविरोधित्वनिरासः।**

**॥ अद्वैतमते अनिर्वचनीयख्यात्यसम्भवेन असत्यातेरेव साधुत्वम् ॥**

यच्चोक्तम्—" अनिर्वचनीयख्यातेरेव साधुत्वम् " इति तद् गौडपादादि-प्राचीनाद्वैतमतविरुद्धत्वादयुक्तम् । यतः गौडपादाचार्यैः

" स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा ।

तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः ॥

न निरोधो न चोत्पत्तिः " इत्यादिवाक्यैः तथा शङ्कराचार्यैः

" स्वप्नश्च माया च स्वप्नमाये असद्वस्त्वात्मिके असत्यौ सत्यौ सद्वस्त्वात्मिके इव लक्ष्येते अविवेकिभिः " " यथा च स्वप्नमाये दृष्टे असद्रूपे तथा विश्वमिदं द्वैत समस्तमसत् दृष्टम् " ...." द्वैतस्यासत्त्वं सिद्धम् सतो ह्युत्पत्तिः प्रलयो वा स्यान्नासतः शशविषाणादेः " "....रज्वां सर्पादिवदात्मनि द्वैतस्याविद्याध्यस्त-त्वात् " इत्यादिना जगतः शशविषाणवदेव असत्त्व न तु सदसद्विलक्षणत्वम् । एवम् असत एव जगतः अध्यस्तत्वं चाभिहितम् । तेन अनिर्वचनीयख्यात्य-सम्भवः । असत्ख्यातेरेव साधुत्वमद्वैतमते इति सिद्धम् ।

द्वैतमते तु असत एव ख्यातिः असत्ख्यातिरित्यर्थाङ्गीकारेण भ्रमे अधि-ष्ठानस्य सत्त्वेन सन्मात्रविषयकत्वाभावेन तार्किकाभिमतान्यथाख्यातिविलक्षणा-न्यथाख्यातिरेव नानिर्वचनीयख्यातिः असत्ख्यातिर्वेति तत्त्वम् ।

**इति अनिर्वचनीयख्यातिनिरासः ।**

## ॥ ब्रह्मणः जगदुपादानकारणत्वनिरासः ॥

यदप्युक्तम् " ब्रह्मोपादानकारणमपि निमित्तकारणमपि " इति तदयुक्तम् । अद्वैतमते जगतः " न निरोधः " इत्यादिनोक्तदिशा असत्त्वेन उत्पत्तेरेवाभावेना-कार्यत्वान्न ब्रह्मणः जगदुपादानकारणत्वं जगन्निमित्तकारणत्वं वा सम्भवति । असत्ख्यातिमनङ्गीकुर्वता त्वया जगत्प्रकारकभ्रमविशेष्यत्वरूपपारिभाषिकोपादा-नत्वस्य निर्विकारस्य ब्रह्मणः परिणामिकारणत्वस्य चानङ्गीकारेणोपादानत्वकथ-नायोगात् । किञ्च अनुपदमेव " तुर्यं तत्सर्वदृक्सदा " इति श्रुत्या शुद्धस्य सर्व-विषयकज्ञानाश्रयत्वकथनेनन तत्र किञ्चिद्विषयकाज्ञानाश्रयत्वासम्भवस्य अद्वैतसिद्धि-ब्रह्मानन्द्यादिप्रदर्शितप्रक्रियानिरासपूर्वकं समर्थितत्वेन अज्ञानस्य ब्रह्माश्रितत्वास-म्भवात् । जीवाश्रितत्वपक्षस्य च अ. सुधाकृतैव

" जीवेश्वरयोरविद्यातत्प्रयुक्तोपाधिकयोरविद्यानाश्रयत्व — तदविषयत्वे अविप्रतिपन्ने शुद्धचिन्मात्रस्याविद्याश्रयाविषयत्वाङ्गीकारात्, इति जीवस्य, विशिष्ट-

स्येश्वरस्य, जडस्य, अन्यस्य वाऽज्ञानाश्रयत्व—विषयत्वविकल्पानामनङ्गीकारपराहतत्वात् तेषां कल्पाना विस्तरेणानूद्य दूषणं ग्रन्थविस्तरमात्रम् ” ( अ. प. २४० ) इत्यादिना जीवेश्वरजडाश्रितत्वस्य तदन्याश्रितत्वस्य च निषेधेन आश्रयविषययोरभावे अविद्याया अप्यभावे तदनिर्वाच्यत्वकथाया वृथात्वात् अनुपदमेवानिर्वाच्यस्य लक्षणप्रमाणनिराकरणेन निराकृतत्वात् अविद्याया एवाभावे तदुपाधिकजीवस्यैवाभावेन एकजीववादस्य बहुजीववादस्य चानुपपन्नत्वात् । भेदानङ्गीकारे ब्रह्मणि असद्व्यावृत्तेः जडव्यावृत्तेः अन्तवद्व्यावृत्तेः निर्विशेषत्वोपलक्षितत्वस्य द्वितीयाभावोपलक्षितत्वस्य व्यावृत्तत्वस्वरूपस्य अनुपपत्त्या भेदनिरूपणस्य त्वयाऽपि कर्तव्यत्वात् भेदाभेदयोर्भेदाभावे भेदस्येवाभेदस्यापि दुर्निरूपत्वेन तदङ्गीकारायोगात् भेदे च भेदनिरूपणस्य भेदाभेदभेदवादिनाऽपि कर्तव्यत्वात् । वस्तुतस्तु यथा त्वया अभेदस्य धर्मिस्वरूपत्वं स्वानिर्वाहकत्वं चाङ्गीकृतं तथैव भेदस्यापि धर्मिस्वरूपत्वेन स्वनिर्वाहकत्वेन चाङ्गीकारे बाधकाभावात्, अभेदपक्षे बाधकपरिहारयुक्तिभिरेव भेदबाधकानां परिहृतत्वात्, भेदस्य दुर्निरूपत्वे तद्विरोधिनोऽभेदस्यापि दुर्निरूपत्वापातेन भेदनिरूपणस्य त्वयाऽपि कर्तव्यत्वात्, अस्मदुपदर्शितानुपपत्तीनामपरिहार्यत्वस्य समर्थितत्वात्, विवर्तवादे साधकाभावस्योनकबाधकसद्भावस्य चोपदर्शितत्वाद्विवर्तवादोऽनुपपन्न एवेति ।

तथा चैतेन, “ ब्रह्मविवर्तवाद एव श्रुतीनां तात्पर्यम् ” इति शिरोलेखस्याधस्तात्—“ न च विवर्तवादानिराकरणमविद्याया ब्रह्मश्रयत्वानुपपत्त्या, जीवाश्रयत्वानुपपत्त्या, तदनिर्वचनीयत्वानुपपत्त्या, एकजीववादानुपपत्त्या, अनेक जीववादानुपपत्त्या, प्रपञ्चमिथ्यात्वानुपपत्त्या, अनिर्वचनीयख्यात्यनुपपत्त्या, भेदर्निरूपत्वानुपपत्त्या, ज्ञानमात्रस्य मोक्षसाधनत्वानुपपत्त्या, अनुपपत्यन्तरेण केनापि वा न सम्भवति; सर्वासामनुपपत्तीनां परिहारात्, किन्तु विवर्तवादसाधुतैव वास्तवी ” ( ४९० ) इति यद् अ-सुधया उदीरितं तन्निरस्तम् ।

भामतीकारैरपि परमार्थस्तु न भ्रमो नाम कश्चित् । सर्वमेतत् सर्वानुपपत्तिभाजनत्वेन अनिर्वचनीयमिति युक्तमुत्पश्यामः ” इति वचनेन भ्रमस्यैवानुपपन्नत्वेन विवर्तवादादिप्रक्रियाया अप्यनुपपन्नतरत्वमुपदर्शितम् । एवमत्यन्तानुपपन्नेऽर्थे श्रुतीनां तात्पर्यकथनं वैदिकानां न युक्तम् । नवा ब्रह्मसूत्रसमन्वयाध्यायस्योपदर्शितानुपपन्नतरार्थे स्वरसता वक्तुं युक्तेति सुधियो विभावयन्तु । अधिकं गुरुपादकृताद्वैतखण्डने द्रष्टव्यम् ।

**इति ब्रह्मण उपादानकारणत्वनिरासः ।**

**" आगमनां प्रत्यक्षविरुद्धबन्ध–**
**मिथ्यात्वबोधकत्वायोगः ॥ "**

यच्चोक्तम् " अनन्यपरागमविरोधे प्रत्यक्षाप्रामाण्यम्, अन्यपरत्वे तु प्रत्यक्षाप्रागाण्यम् " इति । तेन हि " विश्वंसत्यम् " इत्याद्यनन्यपरानेकागमसहकृतत्वेन अनेकयुक्तिसहकृतत्वेन च प्रबलत्वात् प्रत्यक्षस्य तद्विरुद्धत्वेन च नेहनानेत्यादिवाक्याना न प्रत्यक्षविरुद्धे विश्वमिथ्यात्वे प्रामाण्यम् । किन्तु प्रत्यक्षाविरुद्धार्थान्तरपरत्वमेवेति सिद्धम् ।

किञ्चानन्यपरस्यापि " **सोमेन यजेत** " इत्यादिविधिवाक्यस्यापि " न विधौ परः शब्दार्थ " इति नियममुल्लङ्घ्यापि सोमयागभेदग्राहिप्रत्यक्षविरोधेन सोमपदस्य सोमवति लक्षणामङ्गीकृत्य सोमवता यागेनेष्टं भावयेदिति आपातत प्रतीयमानार्थभिन्नार्थपरत्वरूपमप्रामाण्यम् सम्प्रतिपन्नम् । " **प्रत्यक्षादेर्विरोधेन वाच्ययोर्नैव युज्यते । तत्वपदार्थयोरैक्यं लक्ष्ययोरे व सिध्यति** " इति शङ्कराचार्यैः अनन्यपरस्य तत्त्वमस्या दिमहावाक्यस्यापि प्रत्यक्षविरोधेन अर्थान्तरपरत्वमङ्गीकृतम् । अतः आगमाना प्रत्यक्षविरुद्धमिथ्यात्वबोधकत्वायोगः ।

**इति प्रत्यक्षविरुद्धेऽर्थे आगमस्याप्रामाण्य ।**

**" सविन्मामस्य अधिष्ठानत्वाभावसमर्थनम् ॥**

यच्चोक्तम्–" शरीरेन्द्रियादीनां तद्धर्मस्यचोभयस्यापि संविन्मात्रे अधिष्ठाने आरोप " इति तदप्ययुक्तम् । मात्रशब्देन कार्त्स्न्यविवक्षायां संविन्नानात्वापात । अवधारणविवक्षायां संविदितरत्र नाधिष्ठानत्वमिति वक्तव्यम् । तच्च न सम्भवति शुक्त्यादेरधिष्ठानत्वाभावप्रसङ्गात् । संविन्मात्रस्य निर्धर्मकत्वेन तत्राधिष्ठानत्वधर्मस्यायोगात्, अधिष्ठानत्वव्यापकाना सामान्यधर्मप्रकारकज्ञानविषयत्वस्य विशेषधर्मप्रकारकाज्ञानविषयत्वस्य आरोप्यमाणप्रतियोगिकसादृश्यादीनाञ्चाभावेन व्याप्यस्य अधिष्ठानत्वस्याप्यसम्भवात् ।

किञ्चाधिष्ठानत्वं भ्रमविशेष्यत्वं भ्रमकारणाविद्याविषयत्वं वा वक्तव्यम् । त्वन्मते तद्विषयत्वस्य तदध्यस्तत्वातिरिक्तस्य निराकृतत्वेन ब्रह्मणः संविन्मात्रस्य भ्रमाध्यस्तत्वं अविद्याध्यस्तत्वं च भ्रमाधिष्ठानकारोपप्रकतत्वं एवमेवाविआध्यस्तत्वम्। तथा च भ्रमाविद्ययोरधिष्ठानत्वेन अवधारणानुपपत्तिः । संविदः अध्यस्तत्वेन

मिथ्यात्वापत्तिः अविआयाः भ्रमस्य चाधिष्ठानत्वेन सत्यत्वापत्तिश्च स्यात् । किञ्च शरीरं संविन्न मम शरीरम् इत्यादिभेदप्रत्यक्षस्य जागरूकतया शरीरादीनां सविदि अध्यासाऽसम्भवात् ।

किन्तु अन्तर्यामिब्राह्मणरूपशास्त्रेण शरीरेन्द्रियादीनामीश्वराधीनत्वसमर्थनात् । सत्यभूतशरीरविशेष्यकेश्वरानधीनत्वप्रकारक एवारोपः मम देह इत्यादिरूपः । ममेति षष्ठ्याः मदितरानाधीनत्वविशिष्टमदधीनत्वतात्पर्यकतया मम देह इत्यादिव्यवहारप्रयोजकत्वस्य उक्तारोप एव सम्भवात् । तत्र यः तत्त्वज्ञानिनां षष्ठ्याः ईश्वराधीनत्वविशिष्टमदधीनत्वतात्पर्येण मम देह इत्यादिव्यवहारः स तु प्रमामूलक एवेति व्यवस्था बोध्या ।

**इति संविन्मात्रस्य देहेन्द्रियाद्यारोपाधिष्ठानत्वनिरासः ।**

**॥ अहमर्थस्यात्मत्वसमर्थनम् ॥**

यच्चोक्तम् "तुरीयावस्थायां प्रतिभासायोग्यत्वात् सुषुप्तावप्यहंरूपेणाभानाच्च नाह्यहमर्थस्यात्मर्थत्वम् (त्मत्वं?) चिदचित्संवलित स्वरूपत्वादहमर्थस्य" इति । तदयुक्तम् ।

"न जाग्रन्न मे स्वप्नको वा सुषुप्ति-
र्न विश्वो न वा तैजसः प्राज्ञको वा ।
**अविद्यात्मकत्वात्त्रयाणां तुरीय ।**
**स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥"**

इति शङ्कराचार्यकृतदशश्लोकी—वाक्येन अविद्यासम्बन्धशून्यस्य तुरीयस्यैवआत्मनः अहंशब्देनोल्लेखात् ।

**इति अहमर्थस्यानात्मत्वनिरास ।**

**॥ आगमस्य मिथ्यात्वे अप्रामाण्यप्रसङ्ग ॥**

यच्चोक्तम्—"स्वरूपतो मिथ्यात्वेऽपि महावाक्यमात्रे विषयतोऽबाध्यत्वान्नागमस्याप्रामाण्यम्, अन्यत्र तु यावद् ब्रह्मसाक्षात्कार व्यावहारिकं प्रामाण्यम्" इति तत्तुच्छम्, आगमस्वरूपस्येव तत्प्रामाण्यस्यापि मिथ्यात्वेन—त्रैकालिकनिषेधप्रतियोगित्वेन--अप्रामाण्यस्य स्थैर्यात् । "ज्ञान तस्मिन् परात्मभावनिवृत्तिरेव" इत्यादिना (बृ. भा.) महावाक्यानां ज्ञानजनकत्वस्यैवाभावेन प्रमाजनकत्वरूपप्रामाण्यासम्भवात् त्वन्मते वेदान्तवाक्यजनितवृत्तेरुपहितविषयत्वाङ्गीकारेण

उपहितस्य बाध्यत्वनियमेन विषयतोऽबाध्यत्वाभावेनाप्रामाण्यस्य दृढनिरूढत्वाच्च। एवम् उपलक्षितशब्दस्य अविद्यमानधर्मज्ञाप्यभेदविशिष्टार्थकताया लघुचन्द्रिकाकारैरुक्तत्वात् भेदविशिष्टस्वरूपाभेदस्यात्यन्तबाध्यत्वेन तद्विषयकमहावाक्यानां विषयतोऽबाध्यत्वस्य सर्वथा वक्तुमशक्यत्वात् ।

अपि च यावद्बाधं प्रामाण्यस्य सर्वभ्रमसाधारण्येन सकलविप्रलम्भकवाक्यसाधारण्येन चार्वाकादिसकलग्रन्थसाधारण्येन च प्रामाण्याप्रामाण्यव्यवस्थाऽयोगः। अतः सर्वेषा वेदाना सत्यत्वं तत्प्रामाण्यसत्यत्वं तद्विषयाणा सर्वथाऽबाध्यत्वं च सर्वैर्वैदिकैरङ्गीकार्यम् ।

**इति आगमतत्प्रामाण्यमिथ्यात्वनिरासः ॥**

## ॥ मिथ्याभूतस्यार्थक्रियाकारित्वानुपपत्तिः ॥

मिथ्याभूतस्य सद्विलक्षणस्य असतः शशविषणादिवदर्थक्रियाकारित्वायोगः । रज्जुसर्पादिज्ञानस्य सत एव भयकम्पादिजनकत्वं न तु रज्जुसर्पस्यासतः इति तत्वम् ।

एतेन " असतोऽर्थक्रियाकारित्वाभावात् पञ्चीकरणप्रक्रियया सत्ख्यातिपक्ष इव न्यायसुधोक्तरीत्या मातृ–मातङ्ग–मदिरादिभ्रमेण तदुपयोगे न प्रत्यवायः स्यात् " ( २३२ ) इति अ. सुधा परास्ता । भार्यायां मातृभ्रमस्य सत्त्वेन तत्पूर्वकभार्योपयोगस्य च सत्यत्त्वेन प्रत्यवायजनकत्वमस्त्येव । त्वन्मते भार्यायां मातृभ्रमेण क्रियमाणस्य प्रणामादेः पुण्यहेतुत्वं स्यात्, आरोपितमातृप्रणामस्यापि अर्थक्रियाकारित्वस्य त्वयाऽङ्गीकारात् । पितृभ्रमेण क्रियमाणस्य मातङ्गप्रणामस्यापि त्वन्मते पुण्यहेतुत्वं स्यात् । तदुपयोगपदे तत्पदेन मातुर्ग्रहणे आरोपितमातुरसत्त्वेन तदुपयोगस्यैवाप्रसक्तेः प्रत्यवायाभावापादनमयुक्तमेवेति ।

**इति मिथ्याभूतस्यासतःअर्थक्रियाकारित्वनिरासः ।**

## "नेह नानेत्यादिश्रुतीनां सजातीयविजातीयस्वगतसर्वनिषेधकत्वायोगः"

**क्षुद्राक्षेपनिरासाय येषां वाक्यार्थचन्द्रिकाम् ।**
**दृष्ट्वैव मे शक्तिरभूत् विद्याधीशान्नमामि तान् ।**

यच्चोक्तम् " नेह नानास्ति किञ्चन इत्यादिभेदनिषेधपराणा श्रुतीनां स्वरूपतः सजातीय–विजातीयस्वगतसर्वनिषेधपरत्वम् " इति तदप्याकिञ्चित्करम् । नेह नानेति श्रुतेः कथं सर्वनिषेधपरत्वमित्यत्र हेतोरनुपन्यासेन प्रतिज्ञामात्रस्या-

साधकत्वात् । प्रतिज्ञामात्रस्यैवार्थसाधकत्वे प्रतिवादिनोऽपि नेह नानेति श्रुतेर्न सर्वं निषेधपरत्वमिति प्रतिज्ञयैव कृतार्थाः स्युः । यथा चात्र हेतूपन्यासविषये श्रुतेः स्वाभिमतसर्वनिषेधप्रतिपादकत्वप्रकारप्रदर्शने च मौनमवलम्बितम् असुधया । तथा अद्वैतासिद्ध्याऽपि मौनमवलम्ब्य केवलं " एवमन्या अपि श्रुतयःस्मृतयश्च ग्रन्थ-विस्तरभयान्नोदाहृताः । स्वयमेव सूरिभिराकरे द्रष्टव्याः " इत्यभिहितम् । किमेवमेव प्रतिवादिभिर्न वक्तव्यमिति राजाज्ञाऽस्ति । तेऽपि एतावदेवोक्त्वा कृत-कृत्या विजयिनः परीक्षकश्रेष्ठाश्च भवेयुः । न केवलमत्र, किन्तु अ. शास्त्रिप्रणीतेषु सर्वेष्वपि ग्रन्थेषु स्वपक्षस्थापनाय नञ्घटितानि प्रतिज्ञावाक्यानि परपक्षप्रतिक्षेपाय च नञ्घटितानि प्रतिवाक्यान्येव प्रवेशितानि । अ. सुधायां तु शब्दतोऽर्थतश्च परग्रन्थानां सर्वत्रान्यथानुवादश्चाधिकः । स चानभिज्ञानाद्वा विप्रलम्भेच्छया वेत्यन्य-देतत् । लघुचन्द्रिका तु " सूरिभिराकरे द्रष्टव्याः " इति गुरुवन्मौनमनवलम्ब्य आकरग्रन्थानवलोक्य तदनुसारेण श्रुतिव्याख्यानाय प्रवृत्ताऽपि आकरग्रन्थविरुद्ध-मेव बहुतरं लिखति ।

इयांस्तु विशेषः । यदवेहेत्यत्रेदम्पदस्य " द्वैतविशिष्टब्रह्मरूपोद्देश्यार्थकेहपद-युक्तत्वाच्च " इत्यनेन द्वैतविशिष्टब्रह्मार्थकत्वमुक्तम् । यद्यप्याकरग्रन्थे शाङ्करभाष्ये केवलब्रह्मपरत्वमुक्तं शङ्कराचार्यैः । तथापि तद्विरोधमप्यविगणय्य श्रुतेर्व्याहतार्थ-प्रतिपादकत्वेनाप्रामाण्यं पर्यायेण समर्थयितुं द्वैतविशिष्टे ब्रह्मणि द्वैतं नास्तीत्यर्थं इति निश्शङ्कं लघुचन्द्रिका वर्णयति । तेन च तया " सत्यं ज्ञानमनन्तं ब्रह्म " इत्यत्र ब्रह्मपदस्य असत्यं ब्रह्म अर्थः । तथा च "असत्यं ब्रह्म सत्यम् " इति श्रुत्यर्थः सम्पद्यते । तेन च, इदमपि वाक्यं व्याहतार्थमिति, अत एवाप्रमाणमिति च प्रतिपादनेन सर्ववेदाप्रामाण्यसमर्थनाय अवैदिकेभ्यः वेदाप्रामाण्यवादिभ्यः मार्ग-प्रदर्शनमेव कृतमिति । अद्वैततत्त्वसुधाऽपि तन्मार्गमेवावलम्बते । वैदिकैः क्वचित् श्रुतावापाततः प्रतीयमानेऽर्थे व्याहतिशङ्काप्राप्तौ तत्परिहाराय श्रुतेः व्याहतिशङ्का-सम्पर्कशून्यमर्थान्तरं प्रतिपाद्यते न पुनः श्रुत्यक्षरलभ्येऽर्थे प्रमाणान्तरविरोधश्रुत्य-न्तरविरोधस्वविरोधादिशङ्काकलङ्कशून्ये सम्भवति तं परित्यज्य लक्षणादिकमङ्गी-कृत्य स्वव्याघातापादकार्थपरिकल्पनेनाप्रामाण्यं सम्पाद्यते । अतः लघुचन्द्रिका-द्वैतसुधादिप्रदर्शितोऽर्थः वैदिकैरत्यन्तं हेय इति ज्ञेयम् । आकरग्रन्थविरुद्धत्वाच्चा-द्वैतिभिरपि परित्याज्य इत्यपि मन्तव्यम् ।

अथेदानीमाकरोक्तमर्थं परीक्षामहे । तथा हि—

**“ यदेवेह तदमुत्र यदमुत्र तदन्विह ।**

**॥ मृत्यो समृत्युमाप्नोति य इह नानेव पश्यति ॥**

इति । ( कठो. ४।१० )

( शाङ्करभाष्यम् ) “ यत् ब्रह्मादिस्थावरान्तेषु वर्तमानं.....तदेव स्वात्मस्थममुत्र...सर्वससारधर्मवर्जितं ब्रह्म यच्चामुत्रामुष्मिन्नात्मनि स्थितं तदन्विह तदेवेह....नान्यत् । तत्रैवं सति उपाधिस्वभावभेददृष्टिल्क्षणया अविद्यया मोहितः सन् य इह ब्रह्मणि अनानाभूते परस्मादन्योऽहं मत्तोऽन्यत्परं ब्रह्मेति नानेव भिन्नमिव पश्यत्युपलभते, स मृत्योर्मरणान्मृत्युं मरणं पुनः पुनः जननमरणभावमाप्नोति प्रतिपद्यते तस्मात्तथा न पश्येत् ।....... परिपूर्णं ब्रह्मैवाहमस्मीति पश्येदिति वाक्यार्थः ” इति ।

**“ मनसैवेदमाप्तव्यं नेह नानस्ति किंचन ॥**

**मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति ॥ ”**

इति । ( क. ४।११ )

( शा. भा. ) “ इह ब्रह्मणि नाना नास्ति । किंचनाणुमात्रमपि । यस्तु इह ब्रह्मणि नानेव पश्यति, स मृत्योर्मृत्युं गच्छत्येव स्वल्पमपि भेदमध्यारोपयन्नित्यर्थः ” इति ।

तदेव प्रकृतं ब्रह्म आह —

**“ अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।**

**ईशानं भूतभव्यस्य न ततो विजिगुप्सते । एतद्वै तत् ” ॥**

इति । ( क. ४।१२ )

( शां. भा. ) “ अङ्गुष्ठमात्रोऽङ्गुष्ठपरिणामः पुरुषः पूर्णमनेन सर्वमिति मध्ये आत्मनि शरीरे तिष्ठति .... तमात्मानमीशानं भूतभव्यस्य विदित्वा न तत इत्यादि पूर्ववत् ” इति ।

**“ अङ्गुष्ठमात्रः पुरुषोज्योतिरिवाधूमकः ।**

**ईशानो भूतभव्यस्य स एवाद्य स उ श्वः ।**

**एतद्वैतत् ” ॥** ( क. ४।१३ )

(शां. भा.) किं च “अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ... । यस्त्वेवं लक्षितो योगिभिर्हृदय ईशानो भूतभव्यस्य स एव नित्यः कूटस्थोऽद्येदानीं प्राणिषु वर्तमानः स उ श्वोऽपि वर्तिष्यते, नान्यस्तत्समोऽन्यश्च जनिष्यते इत्यर्थः ” इति ।

तथा चोपदर्शितोपनिषत्तद्भाष्यावलोकनेन नानाशब्दस्य भेदार्थकत्वं ज्ञायते। इहेत्यत्र इदम्पदस्य ब्रह्मार्थकत्वं च। तेन ब्रह्मणि भेदो नास्तीति श्रुत्यर्थः सम्पद्यते। अत्र प्रतियोगिवाचकपदान्तरस्याभावात्—

'यदेवेह तदमुत्र' इति पूर्ववाक्यानुसारात् इहेत्यत्रेदम्पदमेव प्रतियोगिवाचकमिति ज्ञायते। एवं च अनयोर्भेदः, अनयोः संयोगः, अनयोरभेदः, अनयोर्विरोधः, इत्यादाविव सप्तम्याः प्रतियोगित्वमनुयोगित्वं चार्थः। तथा च ब्रह्मप्रतियोगिकः ब्रह्मानुयोगिकश्च भेदः अनया श्रुत्या निषिध्यते न विजातीयप्रातियोगिकभेदो वा विजातीयं वा।

तथा चाकरग्रन्थभूतशाङ्करभाष्यविरुद्धत्वाल्लघुचन्द्रिका अद्वैततत्त्वसुधा-चातिहेयाऽद्वैतिभिरपि।

श्रुत्यर्थनिष्कर्षस्त्वित्थम्—

यत् ब्रह्मादिस्थावरान्तेषु संसारिषु—अमुक्तेषु—जीवेषु नियामकतया—अन्तर्यामितया—स्थित ब्रह्म तदेव ब्रह्मादिस्थावरान्तेषु मुक्तेषु जीवेषु अन्तर्यामितया-वर्तते न तु मुक्तनियामकब्रह्मणः अमुक्तनियामकब्रह्मणः सकाशाद्भेदः शङ्कनीयः इति। नियम्यभेदप्रयुक्तभेदशङ्कां स्थानभेदप्रयुक्तभेदशङ्कां चापाकर्तुमेव नेहनानास्ति किञ्चनेति वाक्यं प्रयुक्तम्। अयमेवास्य वाक्यस्यार्थ इति "यद् ब्रह्मादिस्थावरान्तेषु वर्तमानं ससारधर्मवदवभासमानमाविवेकिना तदेव स्वात्मस्थम्, अमुत्र यच्चामुत्रामुष्मिन्नात्मनि स्थितं तदेव इह नान्यत्" इति शाङ्करभाष्यादप्यधिगम्यते। द्वैतभाष्यानुसारेण तु यमदेववाक्ये यमलोकस्थितनचिकेतसं प्रत्युपदिष्टे इहेत्यत्रेदम्पदेन भूलोकादिसत्यलोकान्ताः सप्तसंख्याकाः अमुक्तस्थानरूपाः लोकाः गृह्यन्ते। तथा तत्रस्थाः स्थावरादिब्रह्मदेवान्ताः चेतनाश्च गृह्यन्ते। इह यद् अस्तीत्युक्त्या सप्तलोकस्थितान्यवताररूपाणि सर्वजीवान्तर्यामिरूपाणि चोच्यन्ते। अमुत्रेत्यत्रादः शब्देन श्वेतद्वीपानन्तासनवैकुण्ठरूपास्त्रयो लोकाः प्रतिपाद्यन्ते। त्रत्र च तल्लोकस्थानन्तासनवैकुण्ठपद्मनाभाख्यानि भगवद्रूपाणि, तल्लोकस्थितसकलमुक्तान्तर्यामिभगवद्रूपाणि चोच्यन्ते। तेनावताररूपाणा मूलरूपाणाम् अमुक्तान्तर्यामिरूपाणा मुक्तान्तर्यामिरूपाणां चाभेदः, विशिष्टवाक्यार्थः सम्पद्यते।

तथा च "नेह नानास्ति किञ्चन" इत्यत्रेहेत्यस्य इहलोकपरलोकस्थितयोः— अमुक्तलोक—मुक्तलोकास्थितयोः—अवताररूपमूलरूपयोः अमुक्तान्तर्या-

मिमुक्तान्तर्यामिरूपयोश्चेत्यर्थः। सप्तम्या च प्रतियोगित्वमनुयोगित्वं च बोध्यते। प्रकृत्यर्थस्य यथायथमाधेयतया प्रतियोगित्वे अनुयोगित्वे चान्वयः। तयोश्च निरूपकत्वेन नानाशब्दार्थभेदे अन्वये स भेदोनास्तीतिबोधोजायते रामकृष्णयोर्भेदो नास्तीत्यत्र यथा रामप्रतियोगिकः कृष्णानुयोगिकः भेदः कृष्णप्रतियोगिकः रामानुयोगिकश्च भेदः अत्यन्ताभावप्रतियोगी–सत्ताभाववान् इति वा बोधोजायते तद्वत् तथा "स एवाद्य स उश्वः" इत्यनेनापि अद्य इदानीं सर्वप्राणिषु वर्तमानः स एव श्वोऽपि वर्तिष्यते इत्युक्त्या मोक्षकालेऽपि मुक्तेष्वन्तर्यामितया वर्तिष्यते। अत एव भूतभव्यस्येशान इति कथनान्मुक्तनियामकस्य अमुक्तनियामकस्य चेश्वरस्य भेदनिषेधात्। नेह नानास्ति किञ्चनेत्यत्राप्युत्तरवाक्ये "मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति" इत्यत्रापि मुक्तामुक्तान्तर्यामिरूपाणा मूलरूपावताररूपाणा च भेदज्ञानिनः अनर्थप्राप्तिकथनरूपार्थवादद्वारा श्रुतीनामुपदर्शिताभेद एव तात्पर्यमवसीयते।

यदपि शाङ्करभाष्ये "य इह ब्रह्मण्यनानाभूते परस्मादन्योऽहं मत्तोऽन्यत्परं ब्रह्मेति नानेव भिन्नमिव पश्यत्युपलभते, स मृत्योर्मरणान्मृत्युं मरणं पुनः पुनर्जननमरणभावमाप्नोति प्रतिपद्यते।...ब्रह्मैवाहमस्मीति पश्येदिति वाक्यार्थः" इत्यादिना अहमर्थपरब्रह्मणोर्भेदज्ञानिनः अनर्थावाप्तिकथनेन अहमर्थपरब्रह्मणोर्भेदनिषेध एव श्रुतितात्पर्यमिति सूचितम्। तत्तु असुधोक्तरीत्या व्याघातापादकत्वादयुक्तम्। यतः अद्वैततत्त्वसुधाकारैः "तत्र दकारान्तास्मच्छब्दवाच्योऽहमर्थो वस्तुगत्या नात्मा" (१७५) इत्यादिना अहमर्थस्य आत्माभेद एव निषिद्धः परब्रह्माभेदस्तु दूरत एवापास्तः। सति चैवम् आत्मानात्मविवेकादिग्रन्थेषु आत्मानात्मभेदज्ञानस्य मुक्तिहेतुत्वमुक्तम्। अत्र तु अहमर्थानात्मब्रह्मणोर्भेदज्ञानस्य आत्मानात्मविवेकरूपस्य मृत्युहेतुत्वमुक्तमिति व्याघातः स्यात्।

यदि च नैष्कर्म्यसिद्धिमते अहं ब्रह्मास्मीत्यादौ बाधाया सामानाधिकरण्याङ्गीकारेऽपि "अहं ब्रह्मास्मीत्यादावहंशब्दो वाच्यविधयोपहितम्, लक्ष्यविधया संविन्मात्रं च बोधयति। अत एवाभेदे सामानाधिकरण्यम्" (१७४) इत्यद्वैतसुधोक्तरीत्या संविन्मात्रमस्मच्छब्दार्थः इत्युच्यते तदा अस्मीत्युत्तमपुरुषानुपपत्तिः। तत्रापि तत्त्वमसीत्यत्र त्वंपदस्य चिन्मात्रपरत्वे मध्यमपुरुषप्रयोगानुपपत्तिपरिहारः प्रयोगसाधुत्वार्थत्वाङ्गीकारेण यथा क्रियते तथैवात्रापीति यद्युच्यते तदाऽपि यदेवेहेत्यव्यवहितपूर्ववाक्यव्याख्यानावसरे अमुत्रेत्यस्य अमुष्मिन्नात्मनि स्थितमिति

वाक्येन वैकुण्ठादिपरलोकस्थितमुक्तात्मान्तर्यामितया मुक्तजीवभिन्नत्वेन वर्णितस्य ब्रह्मणः जीवाभेदकथनस्य व्याहतत्वात् । त्वन्मते मुक्तजीवानां संविन्मात्रस्वरूपत्वात् मुक्तजीवस्वरूपस्य तत्स्थब्रह्मस्वरूपस्य च भेदः पारमार्थिक एव । अतः भेदः व्यावहारिकः विधेयः, निषेध्यश्च पारमार्थिकः इत्यादिकथनमपि न युक्तम् ।

किञ्च श्रुतौ–

" य इदं मध्वदं वेदात्मानं जीवमन्तिकात् । ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥ अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः ।

दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥ "

" तं देवास्सर्वे अर्पिताः तदुनात्येति कश्चन । "

इत्यादिपूर्ववाक्येषु सर्वान्तस्थत्वं सर्वेशानत्वं सर्वैरनतिक्रमणीयत्वं सर्वेषां तदधीनत्वं च स्फुटमभिहितम् । उत्तरत्रापि

**" अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सते ॥ "**

इति वाक्ये " शब्दादेव प्रमितः " ( १–३–२४ ) इति सूत्रानुसारेण, तथा " एवं प्राप्ते ब्रूमः– परमात्मैवायमङ्गुष्ठमात्रपरिमितः पुरुषो भवितुमर्हति । कस्मात् ? शब्दात्– " ईशानो भूतभव्यस्ये " ति । न ह्यन्यः परमेश्वराद् भूतभव्यस्य निरङ्कुशमीशिता । " एतद्वैतद् " इति च प्रकृतं पृष्टमिहानुसन्दधाति । एतद्वैतत् यत्पृष्टं ब्रह्मेत्यर्थः । पृष्टं चेह ब्रह्म " अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद " ( का० १।२।१४ ) इति " । इति शाङ्करभाष्यानुसारेणापि भूतेभ्यः वर्तमानेभ्यः भव्येभ्यश्च जीवजडात्मकपदार्थेभ्यः भिन्नस्यैव वस्तुनः पृष्टत्वेन '**एतद्वैतत्**' इत्यनेन भूतभव्यजीवजडेशानस्य जीवजडभिन्नस्य सर्वोत्तमस्यैव वक्तव्यत्वेन तदनुसारेण "**सर्वे वेदा यत्पदमामनन्ति**" इत्यादिना विष्णोः सर्ववेदवेद्यत्वं मुक्तप्राप्यत्वं भूतभवद्भाविसकलजीवजडात्मकपदार्थेशानत्वं तत एव भूतभवद्भाविपदार्थभिन्नत्वं वर्णितम् । तत एव स्थानभेदकालभेदनियम्यभेदादिप्रयुक्तनियामकभेदशङ्कामपाकर्तुं '**नेह नानास्ति किञ्चन**' इति वाक्यं प्रयुक्तम् । तेन च " **सर्वदेशेषु कालेषु स एकः परमेश्वरः** " इति समर्थितम् । तदेवोत्तरवाक्ये अनूदितम् । शिष्यो नचिकेता

जडं शरीरं परित्यज्य यमलोकं गतः जडातिरिक्तं जीवं जानात्येव किन्तु सकलजीवाभिन्नं सर्वेश्वरं जिज्ञासुः पप्रच्छ। गुरुर्यमस्तु नेह नानेति वाक्येन तस्मै यदि जीवाभिन्नं ब्रह्मेति उपदिशतीत्युच्यते तदा "**एतद्वैतत्**" इत्यत्र यद् जीवभिन्नं पृष्टं तद् एतद् जीवाभिन्नमिति तदीयमुत्तरं व्याहतम् असङ्गतं च स्यात्। अतः नेहनानेत्यस्य जीवेश्वरभेदनिषेधपरत्वकथनमयुक्ततरम्।

यदि च "**अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति**" "**य आत्मनि तिष्ठन्**" "**तमात्मस्थं येऽनुपश्यन्ति**" इत्यादिवचनानुसारेण जीवस्वरूपान्तर्यामी जीवस्वरूपाद्भिन्नः शाङ्करवाक्यगताहंशब्दार्थः। तथा च मदन्तर्यामिणि ब्रह्मभेदस्य ब्रह्मणि वा मदन्तर्यामिभेदस्यात्र निषेधः क्रियते इति शङ्कराचार्याशयः। अत एव तैः "**अथातः सम्प्रत्तिर्यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म, त्वं यज्ञः त्व लोक इति। स पुत्रः प्रत्याहाहं ब्रह्म अहं यज्ञोऽहं लोक इति। यद्वै किञ्चानूक्तं तस्य सर्वस्य ब्रह्मेत्येकता**" (बृ. १।५।१७) इत्यत्र त्वमित्यस्य त्वत्कर्तृक इति, अहमित्यस्य च मत्कर्तृक इत्यर्थो वर्णितः। तेन प्रकृतेऽपि अहमित्यस्य मदन्तर्यामि मन्नियम्यकं=पर ब्रह्मणोऽन्यदिति भेदज्ञानी मृत्युमाप्नोतीत्यर्थ इति सूचितम्।

तथा च नेह नानेति श्रुत्या जीवान्तर्यामिणः परब्रह्मणश्च भेदनिषेधेन '**अहं ब्रह्म**' '**तत्त्वमसि**' इत्यादीनामपि जीवान्तर्यामिब्रह्मणोरभेदबोधकत्वमेव, न तु जीवस्वरूपब्रह्मस्वरूपयोरित्यपि समर्थितम्। एवमेव "**युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः**" "**अस्मद्युत्तमः**" इति सूत्रप्राप्तमध्यमोत्तमपुरुषयोः त्वं ब्रह्म, त्वं यज्ञः त्वं लोकः; अहं ब्रह्माहं यज्ञोऽहं लोक इत्यादाविव प्रयोगसाधुत्वार्थत्व वा "**असनादसि नामासौ**" इत्यादिस्मृत्यनुसारेणान्तर्यामिपरत्वं वा वर्णनीयम्।

एतावता ग्रन्थेन नानाशब्दस्य भेदार्थकत्वं गृहीत्वा पूर्वोत्तरवाक्यानुसारेणार्थोऽभिहितः।

"**यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति।**
**एवं धर्मान् पृथक्पश्यन् तानेवानुविधावति॥**"

इति उत्तरवाक्यानुसारेण "एवं धर्मानात्मनोऽभिन्नान् पृथक् पश्यन्" इति तद्भाष्यानुसारेण च नानाशब्दस्य भेदविशिष्टमर्थः। तथा च इह ब्रह्मणि किञ्चन

नाना—स्वभिन्नं गुणक्रियादिधर्मजातं नास्तीत्यर्थः । अत्र नेहास्ति किञ्चनेत्येतावता पूर्तौ नानापदप्रयोगो व्यर्थः स्यात् । अतः अत्र न विशेष्यमात्रनिषेधतात्पर्यं किन्तु विशिष्टनिषेध एवेति वक्तव्यम् । विशेष्यवति विशिष्टनिषेधस्य विशेषणनिषेध पर्यवसानस्य सकलतान्त्रिकसम्मततया **"स्वाभाविकी ज्ञानबलक्रिया च"** **"सत्यःसोऽस्य महिमा"** **"अदृश्यत्वादिगुणको धर्मोक्तेः"** इत्यादिभिरनेकप्रमाणैः सिद्धस्य विशेष्यस्य निषेधायोगेन धर्मधर्मिभेदनिषेधकत्वमेवास्याः श्रुतेरिति सिध्यति । भेदाभावे धर्मधर्मिभावो वा कथमित्याशङ्कापरिहारपरत्व किञ्चनेति पदस्येति श्रीमद्वादिराजतीर्थपूज्यचरणैरभिहितम् । तथा च इह ब्रह्मणि भिन्नं गुणक्रियादिकं नेति निषधे अभिन्नं गुणादिकं ब्रह्मणि वर्तते इति लभ्यते । ततश्चाभेदे कथमाधाराधेयभाव इत्याशङ्कायां तत्परिहाराय अस्ति किञ्चनेत्युक्तम् । तेन च भेदाभावेऽपि भेदकार्यभूताधाराधेयभावव्यवहारादिकतिपयभेदकार्यकारी अत एव तत्प्रातिनिधिभूतः कश्चन स्वभावविशेषः अस्ति । तेनाधाराधेयभावव्यवहार इति । अङ्गीकृतं चैतदद्वैतसिद्धौ "स्वभावविशेषादेव सर्वस्योपपत्तेः" इत्यादिना । एवं सत्यपि अद्वैततत्त्वसुधा न केवलं शङ्कराचार्योक्तदिशा जीवभेदनिषेधिका किन्नाम जडभेदस्य जडस्य च निषेधिका, तथा न केवलं शङ्कराचार्योक्तदिशा भिन्नधर्मनिषेधिका किन्नाम भिन्नसर्वजडजीवादिनिषेधिकेति श्रुत्यर्थमभिदधाना शङ्कराचार्यानप्यतिक्रामति लघुचन्द्रिकावत् । मन्ये च अद्वैतासिद्धिकारः यथा विस्तराद्बिभेति तथानैते विस्तराद्बिभ्यति न वा स्वाचार्यद्रोहात् नापि श्रौतपूर्वोत्तरवचनविरोधात् इति महदाश्चर्यम् ।

इहलोकपरलोकयोरभावे यदेवेहेति वाक्यं कथमुपपद्यताम्, द्रष्टुरभावे मृत्योरभावे कः पश्यति कस्मात्को वा मृत्युमाप्नोति । सर्वथा नेह नानेति वाक्यमप्रमाणं स्यात् सर्वनिषेधपरत्वे । किञ्च सर्वान्तर्गतस्य **"नेह नानास्ति किञ्चने'** ति वाक्यस्य च निषेधापत्त्या निषेधवाक्यस्य तत्प्रामाण्यस्य प्रामाण्याभावे च निषिध्यमानसत्यत्वसिद्धेरप्रत्यूहत्वेन च सर्वनिषेधपरत्वकथनमुन्मत्तप्रलपितमेवेति बोध्यम् ।

सर्वोऽपि धर्मराजसिद्धान्तः ।

नित्यो नित्याना चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ।
तमात्मस्थं ये नु पश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥

(का. ५।१३)

इति मन्त्रे संगृहीतः ।

अत्रैवं योजना—ये धीराः, यः एकः नित्यः चेतनः बहूना नित्यानां चेतनानां कामान् विद्धाति, आत्मस्थं तम् अनुपश्यन्ति तेषा शाश्वती शान्तिर्भवति, इतरेषा शाश्वती शान्तिर्न भवति इति । तत्र नित्यानाम् = स्वरूपतो देहतश्च नाशरहितत्वेन नित्यानाम्—चेतनानाम् इति वाक्येन मुक्ता एवोच्यन्ते । किञ्च कामान् विदधातीत्युक्त्या इष्टमात्रं परमात्मा सम्पादयतीत्युक्त्या " सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चता " इति श्रुत्युक्तदिशाऽपि मुक्ता एवात्राभिप्रेता इति सिध्यति । बहूनामिति तेषां बहुत्वकथनेन तेषां परस्परभेदसिद्धिः । कामानिति बहुवचनेन जडाना भेदसिद्धिः । चेतनाना कामानित्युक्त्या जीवजडभेदसिद्धिः । कामान् विदधाति इत्यनेन तमात्मस्थम् इत्यनेन च जीवपरमात्मनोः जडपरमात्मनोश्च भेदासिद्धिरिति पञ्चभेदज्ञानस्यैव शान्तिहेतुत्वमुपदर्शितम् । एकश्चेतन इत्युक्त्या आत्मस्थमित्युक्तान्तर्यामित्वेन नियम्यभेदप्रयुक्तभेदशङ्कापरिहारः कृतः । अयमेव भेदः नेह नानेति श्रुत्या निषिद्धः । न तु पूर्वोपदर्शितभेदपञ्चकान्तर्गतः कश्चिदपि । मुक्तजीवाभीष्टप्रदातुरीश्वरस्य मायानाशाधीननाशप्रतियोगित्वशङ्का निराकर्तुमेव तस्य नित्यत्वमुक्तम् । एतेन

**" पञ्चभेदांश्च विज्ञाय विष्णोः स्वाभेदमेव च " ।**
**निर्दोषत्वं गुणोद्रेकं ज्ञात्वामुक्तिर्नचान्यथा " ॥**

इत्यादिस्मृतिवाक्यान्यपि तद्विवरणपराण्युपपद्यन्ते इति ज्ञेयम् ।

यत्त्वत्र अनित्यानामित्यकारप्रश्लेषणेन पाठं परिकल्प्य अनित्यानामित्यस्य विनाशिनामित्यर्थं चाभिधाय विनाशिनां चेतनाना ब्रह्मादीनामित्यर्थकथनं तत्तु जीवचेतनब्रह्मचेतनयोरैक्यवादिनां स्वव्याहतमेवेति हेयमेव । अतः " नेह नानास्ति किञ्चन " इत्यादिश्रुतीना न विजातीयभेदानिषेधपरत्वं न वा सर्वनिषेधपरत्वं किन्तु सर्वान्तर्यामिभगवद्रूपभेदनिषेधपरत्वमेवेति ।

**इति नेहनानेत्यादिश्रुतीनां सर्व निषेधपरत्वनिरासः ।**

## ॥ मिथ्याभूतस्य कथाङ्गत्वाभावसमर्थनम् ॥

यच्चोक्तम् अ. सुधायाम् — " मिथ्याभूतस्यापि सत्त्वासत्त्वौदासीन्येनार्थक्रियाकारित्वम्, कथाङ्गत्वं च " इति तत्र पृच्छामः सत्त्वासत्त्वौदासीन्येनेति कोऽर्थः ? यदि सत्त्वासत्त्वाभावेनेति तदा श्लाघनीयप्रज्ञोऽसि । मिथ्याभूतस्य सत्त्वा-

भावेन असत्त्वप्राप्त्या असतः तस्य कथमर्थक्रियाकारित्वमिति प्रश्नं प्रत्यस्यानुत्तरत्वात् । असत्त्वाभावादर्थक्रियाकारित्वमुपपद्यते इत्यपि न युक्तम् मिथ्याभूतस्य द्वैतस्य शङ्कराचार्यैः शशविषाणवदसत्त्वोपवर्णनात्, " न हि भवति वन्ध्यापुत्रो गगनकुसुमच्छन्न " इत्यादिना असतः अर्थक्रियाकारित्वनिषेधाच्च ।

यच्चोक्तं " सत्त्वासत्त्वौदासीन्येन कथाङ्गत्वम् " इति । तत्राप्येवमेव द्रष्टव्यम् । यदि तत्र सत्त्वासत्त्वौदासीन्येनेत्यस्य सत्त्वेन ज्ञातत्वं विना असत्त्वेन ज्ञातत्त्वं विना कथाङ्गत्वमित्याशयः, तत्रापि पृच्छामः स्थापनानुमाने व्याप्तिपक्षधर्मतादीना सत्त्वेन ज्ञातत्त्वमस्ति चेत्तदौदासीन्यहानिः, नास्ति चेत् असिद्धिव्यभिचारोद्भावनेन परैर्निगृहीतः स्याः । एवमेव प्रतिपक्षानुमाने असिद्धिव्यभिचारयोः सत्त्वेनानिश्चये तव तत्र असिद्धिव्यभिचारोद्भावनायोगश्च स्यात् । व्याप्तिपक्षधर्मत्वयोरसत्त्वानिश्चये प्रतिपक्षानुमाने व्याप्त्याद्यभावप्रतिपादनायोगश्च ।

**इति मिथ्याभूतस्य सत्त्वासत्त्वौदासीन्येनार्थक्रिया—कारित्व – कथाङ्गत्वनिरासः ।**

## ॥ असतः साधकत्वानुपपत्तिः ॥

यच्चोक्तं " तत्रासत्पदेन शशशृङ्गादिग्रहणे इष्टापत्तिः, मिथ्यार्थस्य ग्रहणे नाद्वैतमतेऽसदसाधकत्वम् " इति । तदयुक्तम् । असत्पदस्य न सत् असादिति व्युत्पत्त्या सद्भिन्नार्थकत्वेन तदतिरिक्तार्थाबोधकत्वात् सद्भिन्नस्य शशशृङ्गादिवत् साधकत्वानुपपत्तिरेव । उक्तं हि शङ्कराचार्यैः जगतः सद्विलक्षणत्वादेवासद्रूपत्वं शशविषाणवत् निराकृतं च असतः साधकत्वं " न हि भवति गगनकुसुमच्छन्नो वन्ध्यापुत्र " इत्यादिना । किञ्चासत्पदेन मिथ्यार्थग्रहणे इति कोऽर्थः ? यदि असत्पदेन असद्विलक्षणग्रहणे इति मन्यसे तर्हि श्लाघनीयप्रज्ञोऽसि ।

किञ्च असद्विलक्षणं नाम सद्विलक्षणाविलक्षणं तच्च सदेवेति सत एव साधकत्वं प्राप्तम् ।

**इति सद्विलक्षणस्य साधकत्वानुपपत्तिसमर्थनम् ।**

## ॥ अनिर्वचनीयत्वं भावाभावविलक्षणत्वादिरूपत्वेन दुर्वचम्, अप्रामाणिकं च ॥

यच्चात्रोक्तम्—"त्रैकालिकनिषेधप्रतियोगित्वादिना अनिर्वचनीयत्वं सुवचम्" इति तदयुक्तम् । तृतीयायाः प्रकारत्वार्थकत्वे त्रैकालिकनिषेधप्रतियोगित्वस्य त्वया-

जगत्यङ्गीकारात्, जगत् त्रैकालिकनिषेधप्रतियोगीति निर्वचनविषयत्वात् तदभावकथनायोगः । तदभावे च जगतः प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वायोगः । मतान्तरे तस्य असत्त्वेनासद्वैलक्षण्यायोगश्च । तृतीयार्थोऽभेद इत्यपि न युक्तम् । किञ्च अनिर्वचनीयत्वस्य निर्वचनीयत्वाभावरूपस्य अभावविलक्षणत्वेन सुवचत्वकथन व्याहतमेव । अनिर्वचनीयत्वस्य निर्वचनीयत्वाभावरूपस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपत्वायोगात् तृतीयायाः अभेदपरत्वाङ्गीकारोऽपि न युक्तः । वस्तुतस्तु प्रतिपन्न इत्यस्य प्रतिपत्तिविषय इत्यर्थः । तद्विषयत्वं च तदध्यस्तत्वमिति त्वन्मतम् । तथा च प्रतिपत्त्यध्यस्तस्य अत एव मिथ्याभूतस्याधिष्ठानत्वायोगात् प्रतिपन्नोपाधावित्ययुक्तम् । यदि च विषयत्वमध्यस्तत्वातिरिक्तम् तदा दृश्यत्वेन मिथ्यात्वासिद्धिरित्यन्यत्र विशदीकृतमित्यलम्।

**इति अनिर्वचनीयत्वं दुर्वचमप्रामाणिकं च ।**

## ॥ सत्त्वासत्त्वयोः परस्परविरहरूपत्वेन कुत्रापि सदसद्विलक्षणत्वासंभवः

यदुक्तम् " सत्त्वासत्त्वयोः परस्परविरहरूपत्वासम्भवेन सदसद्विलक्षणत्वरूपमिथ्यात्वाविरोधः " इति तदयुक्तम् । असत्त्वस्य क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वरूपतायाः सत्त्वस्य तदभावरूपतायाः असुधाया स्पष्टं निरूपितत्वेन परस्परविरहरूपत्वाभावकथनस्य व्याहत्वात् । भवदीयन्यायचन्द्रिकया सत्त्वासत्त्वयोः परस्पर विरहरूपत्वस्याङ्गीकृतत्वेन तद्विरोधाच्च केवलसत्त्वस्य असत्त्वघटकसत्त्वस्य च भिन्नरूपत्वकथनस्य अद्वैतासिद्धिलघुचान्द्रिकागतस्य असुधाकारैः लघुचन्द्रिकोपदर्शित–शङ्कराचार्योक्तानुभवविरुद्धत्वेन अस्वारसिकत्वस्य असौष्ठवापरपर्यायायुक्तत्वस्य च वर्णितत्वात्स्वविरोधश्चेति । अधिकं पूर्वमेव विवेचितम् ।

**इति सदसद्विलक्षणत्वासम्भवप्रदर्शनम् ।**

## ॥ सदसद्वैलक्षण्ये सत्प्रतीत्यनुपपत्तिः ॥

घटादेः सद्विलक्षणत्वाङ्गीकारे सत्प्रतीत्यनुपपत्तिः । शुक्तौ भ्रमात्मकरजतप्रतीतिवत् घटेऽपि भ्रमात्मिका सत्प्रतीतिरूपपद्यत एवे ति चेत् । शुक्तौ रजतप्रतीतेः नेदं रजतमिति बाधवत्, घटः सन्निति प्रतीतेः बाधादर्शनात् तस्याः भ्रमत्वकथनायोगात् ।

किञ्च सद्विलक्षणत्वमित्यनेन यावत्सत्प्रतियोगिकभेदवत्वम् विवक्षितमुत यत्किञ्चित्सत्प्रतियोगिकभेदवत्वम् । आद्ये प्रातिभासिकसतः शुक्तिरूप्यस्य व्यावहारिकसतः प्रपञ्चस्य सद्वैलक्षण्यायोगः । शुक्तिरजतादेः प्रातिभासिकसत्त्वानङ्गीकारे प्रपञ्चस्य व्यावहारिकसत्त्वानङ्गीकारे च तयोः सत्प्रतीत्यनुपपत्तिस्तदवस्थैव । द्वितीये व्यावहारिकसत्प्रतियोगिकभेदवत्वस्य ब्रह्मण्यपि सत्त्वेन तस्यापि सद्विलक्षणत्वापत्तिः । अत एव सत्प्रतीत्यनुपपत्तिश्च ।

तथा च सत्त्वैविध्यवादे जगतः सत्प्रतीत्यनुपपत्तिर्वज्रलेपायिता । यच्चोक्तम् " सदसद्वैलक्षण्यघटकासत्त्वस्य क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वरूपत्वात् सत्त्वस्य चाबाध्यत्वरूपत्वात् सत्त्वेन प्रतीत्यर्हत्वं, सदसद्विसक्षणत्वं च न व्याहतम् " इति तदयुक्तम् । अद्वैततत्त्वसुधायाम् " अतः सत्त्वासत्त्वयोरेकतरस्य रूपान्तरं वक्तव्यम्" (प. ४८ ) इति प्रतिज्ञायापि " तत्र चासत्त्व क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वम्, ( त्यम् ? ) तदभावश्च सत्त्वमिति " इति वाक्येन क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वाभावस्य क्वचिदुपाधौ सत्त्वेन प्रतीत्यर्हत्वरूपस्य सत्त्वस्य विवक्षणे सद्विलक्षणमित्यस्य सत्त्वेन प्रतीत्यर्हविलक्षणमित्यर्थः स्यात् । तथा च सत्त्वेन प्रतीत्यर्हविलक्षणस्य सत्प्रतीत्यनुपपत्तिस्तदवस्थैव ।

अपि च सदसद्वैलक्षण्यघटकसत्पदार्थो यद्यबाध्यम्, यदि चाबाध्यत्वमसत्साधारणं तदा तत एवासद्व्यावृत्तिसम्भवादसद्वैलक्षण्यकथनं व्यर्थमेव स्यात् इष्टापत्तौ सत्त्वेन प्रतीत्यर्हत्वं सदसद्विलक्षणत्वं च न व्याहतमिति व्याहतमेव । यच्चोच्यते— " एकसत्तावादे सत्तादात्म्यमात्रेण अन्येषा तद्विवर्तानां सत्पदव्यवहार " इति । तत्र ब्रूमः किमिदं सत्तादात्म्यम्, यदि सदभेदः तर्हि सद्वैलक्षण्यानुपपत्तिः । यदि सत्त्व तत् तदा जगतः सत्त्वाभावकथनानुपपत्तिरेव ।

यच्चोक्तमद्वैतदीपिकायाम् अ. शास्त्रिभिरेव ( ७ पत्रे ). न हि भेदाघटित तादात्म्यं कुत्राप्यद्वैतिना सम्मतम् । अद्वैतिनो हि नञ्भेदादिपदाभिलप्यभेदस्य तादात्म्यघटकभेदातिरिक्तत्वं वर्णयन्तस्तादात्म्यानापन्नत्वमेवासति बाधके भेदशब्दार्थं मन्यन्ते " इति । तदप्यनुपपन्नम्, यदि तादात्म्यं भेदसहिष्णुरभेदः प्राचामद्वैतिनां सम्मत इत्युच्यते तदाभेदाभेदयोः सत्त्वासत्त्वयोरिव व्याघातो दुष्परिहर एव । ततश्च सत्त्वासत्त्वयोर्व्याघातपरिहाराय प्रवृत्तेन व्याघातान्तरमेव सम्पादितं स्यात् ।

एवं सच्चेन्न प्रतीयेतेत्यर्थापत्तिसिद्धं सद्विलक्षणत्वं हि सत्तादात्म्यानधिकरणत्वमेव । तथा च सद्विलक्षणमित्यनेन सत्तादात्म्यानाधिकरणत्वमुच्यते । असद्विलक्षणमित्यनेन सत्तादात्म्याधिकरणत्वमुच्यते । अतः सुदृढो व्याघातः ।

यदि च "विषयत्वस्य चित्सुख्युक्तरीत्या दुर्वचत्वेऽपि दृगध्यस्तत्वरूपस्य चैतन्याधिष्ठानकत्वरूपस्य कुत्राप्यव्यभिचारात्, दोषान्तराभावात् "सदेव सौम्येदम्" इत्यादिसामानाधिकरण्यस्वारस्यात्, अन्यथा विषयत्वस्य घटादौ दुर्वचत्वाच्च । चित्तादात्म्यरूपं दृश्यत्वं दुरपह्नवम् । न हि चैतन्यं चैतन्येऽध्यस्तम् इति न तत्र व्यभिचारः । शुक्तिरूप्यान्तःकरणसुखादिकमपि चैतन्येऽध्यस्तत्वात् चित्तादात्म्यवत्वाच्च न नोक्तलक्षणं दृश्यम्," (अ. सु. ७५) इत्यभिहितरीत्या सदध्यस्तत्वमेव सत्तादात्म्यं सदेव सौम्येदमिति सामानाधिकरण्यस्वारस्यादित्युच्यते; तदा तु "इदं रजत" मित्यादौ इदं पदार्थस्याधिष्ठानत्वनियमदर्शनेन "इद सर्व पुरा सृष्टेरेकमेवाद्वितीयकम् । सदेवासीत्" इत्यादित्वदीययोजनानुसारेग सत एवेदम्यध्यस्तत्वापातेन जगतः सत्तादात्म्यासम्भवात् परस्परतादात्म्याध्यासाङ्गीकारस्त्वयुक्तः । परस्परतादात्म्यस्यैव परस्पराध्यस्तत्वरूपत्वात्, तादात्म्याध्यास इत्युक्तौ तु अध्यासस्याप्यध्यासप्राप्त्या वस्तुतोऽध्यासाभावापातः ।

किञ्च ब्रह्मणः भ्रमाधिष्ठानत्वं भ्रमविशेष्यत्वरूपं विषयत्वमेव । तच्च अध्यस्तत्वरूपमेवेति त्वन्मतम् । तथा च ब्रह्मणः भ्रमाधिष्ठानत्वं भ्रमेऽध्यस्तत्वमेवेति तस्य मिथ्यात्वापत्तिः । यदि च भ्रमोपादानाविद्याविषयत्वं भ्रमाधिष्ठानत्वं तदा तु अविद्याऽध्यस्तत्वं ब्रह्मणः स्यात् । अतः सत्तादात्म्यं दुर्निरूपमेव ।

**इति सदसत्सद्वैलक्षण्ये सत्प्रतीत्यनुपपत्तिरिति ।**

## ॥ अद्वैतमते निर्दुष्टदृश्यत्व–निर्वचनासम्भवः ॥

यच्चोक्तम्–" यत्र दृक्तादात्म्यस्य निर्दुष्टस्य दृश्यत्वम् " इति तदसङ्गतमेव । दृक्तादात्म्यस्य दृश्यत्वकथनेन दृश्यत्व कि रूपमिति शङ्काया अनिवारणात् । कथञ्चिद् दृक्तादात्म्यस्य दृश्यत्वरूपत्वमिति तात्पर्यकल्पनेऽपि तस्य निर्दुष्टत्वासम्भवात् दृक्तादात्म्यं हि दृगध्यस्तत्वमेव । तच्च दृगाधिष्ठानकभ्रमविषयत्वं; त्वन्मते पुनः भ्रमविषयत्वं, भ्रमाध्यस्तत्वम् । तच्च भ्रमाधिष्ठानकभ्रमविषयत्वमित्यनवस्थादुष्टत्वात् एवंविधदृश्यत्वस्य । किञ्च "आत्मा वा रे द्रष्टव्यः" इत्यत्र दर्शनविषयत्वं

ब्रह्मणो बोध्यते । तच्च दर्शनाध्यस्तत्वमेव वक्तव्यम् । अन्यस्य विषयत्वस्य त्वयाऽनङ्गीकारात्; तथा च ब्रह्मणोऽपि मिथ्यात्वापत्तिः । ब्रह्मणि दृश्यत्वस्य व्यभिचारो वा स्यात् । यदि च ब्रह्मणः दृग्विषयत्वं नाध्यस्तत्वरूप किन्तु विषयत्वमखण्डधर्म इति स्वीक्रियते तदा जगतोऽपि अध्यस्तत्वातिरिक्तेन विषयत्वेनैव दृश्यत्वव्यवहारोपपत्तौ कुतो दृगध्यस्तत्वं कुतस्तरा तेन मिथ्यात्वमिति सुधियो विभावयन्तु । किञ्च तत्र तत्र मिथ्यात्वस्य सत्तादात्म्ये पर्यवसानाभिधानात् सत्तादात्म्ये दृक्तादात्म्ये च सदेव सौम्येति श्रुतेरेव प्रमाणतयोपन्यासाच्च तयोरविशिष्टत्वेन हेतुसाध्यावैशिष्ट्यमेवेति दिक् ।

**इति अद्वैतमते दृश्यत्वनिरुक्त्यसम्भवः ।**

## ॥ अन्यथा विज्ञातस्य सम्यग्विज्ञानं बाधः ॥

यच्चोक्तम् असुधायाम् "अधिष्ठानतत्त्वसाक्षात्कारो बाधः" इति । तत्र प्रष्टव्यम् अधिष्ठानतत्त्वसाक्षात्कार इत्यत्र अधिष्ठानरूपं यत्तत्त्वं तत्साक्षात्कारः इत्यर्थः। अथवा अधिष्ठानस्य यत्तत्त्वम् असाधारणधर्मः तत्साक्षात्कार इति । आद्ये इदं रजतम् इति। साक्षात्कारस्यापि अधिष्ठानतत्त्वसाक्षात्कारत्वं स्यात् । अधिष्ठानरूप यत्तत्त्वं तन्मात्रविषयकः साक्षात्कारः स चाधिष्ठानेतराविषयकः इत्यपि न सम्यक्, इदमित्यस्य बाधत्वापातात् । इय शुक्तिरेव न रजतमित्यादेः शुक्तित्वरजतभेदादिविषयकस्य बाधत्वानुपपत्तिः अतः तत्त्वं तद्वृत्त्यसाधारणधर्मः तत्त्वस्यैव साक्षात्कार इत्युक्त्या अधिष्ठानावृत्तिधर्माप्रकारकः अधिष्ठानवृत्तिधर्मप्रकारकः साक्षात्कारः बाधः इति वक्तव्यम् । एवं सति इदं द्रव्यम् इति ज्ञानस्यापि इदं रजतमिति ज्ञानं प्रति बाधत्वं स्यात् । एवं भ्रमानुत्तरस्य भ्रमपूर्वभाविनः इयं शुक्तिः नेदं रजतामिति ज्ञानस्य बाधत्वं स्यात् । तथा अनुमानागमजन्यस्य धर्मादिज्ञानस्य धर्मो नास्तीत्यादिभ्रमबाधकत्व न स्यात् तस्य साक्षात्कारत्वाभावात् । अतः अधिष्ठानविशेष्यकस्वावृत्तिधर्मप्रकारकज्ञानोत्तरकालीनस्वावृत्तिधर्माप्रकारकस्ववृत्तिधर्मप्रकारकज्ञानं बाध इत्येव वक्तव्यम् । इदमेव चान्यथाविज्ञातस्य सम्यग्विज्ञानं नाम । तथा च भ्रमरूपख्यातेः अधिष्ठानरूपसाद्विषयकत्वेऽपि प्रकारतत्संसर्गरूपासाद्विषयकत्वेन सन्मात्रविषयकत्वाभावान्न सत्ख्यातित्वम् । अध्यस्तरूपासद्विषकत्वेऽपि अधिष्ठानरूपसद्विषयकत्वादसन्मात्रविषयकत्वाभावान्नासत्ख्यातित्वम् । अधिष्ठानस्य सत्त्वान्न सदसद्विलक्षणत्वम् । अध्यस्तस्यासत्त्वान्न सदसद्विलक्षणत्वम् । अतो

नानिर्वचनीयख्यातिरपि। नापि तार्किकाभिमतान्यथाख्यातिः। किन्तु तद्विलक्षणान्यथाख्यातिरेव। सत्त्वेन विज्ञातस्य रजतस्यासत्त्वेन विज्ञातत्वं बाध्यत्वम्। तेन च शुक्तिरजतस्यासत्त्वमेव नानिर्वचनीयत्वं—सदसद्विलक्षणत्वं—जगतश्च सत्त्वेन विज्ञातस्य असत्त्वेन विज्ञानाभावान्न बन्धमिथ्यात्वप्रसक्तिरिति सर्वमनवद्यम्।

॥ इति बाधविचारः ॥

## यथा ब्रह्मतथैव जगदपिसत्यम्।

"**सत्त्वाच्चावरस्य**" (२।१।१६) इति सूत्रे तदीय शाङ्करभाष्ये च "**यथा च कारणं ब्रह्म त्रिषु कालेषु सत्त्वं नव्यभिचरति, एवं कार्यमपि-जगत् त्रिषु कालेष सत्त्वं नव्यभिचरति**" इत्यादिना ब्रह्मवत् जगतोऽपि त्रैकालिकनिषेधाऽप्रतियोगित्वरूपस्य मिथ्यात्वविरुध्दस्य सत्यत्वस्याभिधानात्,

तथा "**नाभाव उपलब्धेः**" (२।२।२८) इति ब्रह्मसूत्रे तदीयशाङ्करभाष्ये च "न खल्वभावो बाह्यार्थस्याध्यवसातुं शक्यते कस्मात् उपलब्धेः उपलभ्यते हि प्रतिप्रत्ययं बाह्योऽर्थः स्तम्भः कुडयं घटः पटः--इति। न चोलपभ्यमानस्यैवाभावोभवितुमर्हति" इत्यादिना। वार्तिके च "नाभावो बहिरर्थानां भवितुमर्हति "द्वौ नत्रौ प्रकृतमर्थं सातिशयं गमयत" इति न्यायात् विज्ञानव्यतिरेकेण-बहिरर्थोऽस्तीति प्रतिजानीते" इत्यादिना बाह्यार्थस्य त्रैकालिकनिषेधप्रातियोगित्वाभावसमर्थनात् मिथ्यात्वनिषेधपूर्वक सत्यत्वमेव सुसाधितम्। एवं ज्ञानरूपब्रह्मव्यतिरेकेण जगतोऽभावः इति पक्षोऽपि "यतः उपलब्धिव्यातिरेकोऽपि बलादर्थस्याभ्युपगन्तव्यः; उपलब्धेरेव। नहि कश्चिदुपलब्धिमेव स्तम्भः कुड्यं चेत्युप लभते, उपलब्धिविषयत्वेनैव तु स्तम्भकुड्यादीन् सर्वे लौकिका उपलभन्ते" इत्यादिना शङ्कराचार्यैरेवनिराकृतः। एतैनैव सद्रूपब्रह्मतादात्म्येनैव जगतः सत्प्रतीतिविषयत्व" "चित्तादाम्यरूपं दृश्यत्वं दुरपह्नवं" इत्यादीनि—असुधा वचनान्यपि निराकृता निवेदितव्यानि।

किञ्च "**वैधर्म्याच्च न स्वप्नादिवत्**" (२।२।२९) इति। सूत्रे तद्भाष्ये च "वैधर्म्यं हि भवतिस्वप्नजागरितयोः किं पुनर्वैधर्म्यं बाधाबाधावितिब्रूमः। बाध्यते हि स्वप्नोपलब्धं वस्तु प्रतिबुद्धस्य मिथ्यामयोपलब्धो महाजन समागम—इति...नैवं जागरितोपलब्धं वस्तुस्तम्भादिकं कस्याञ्चिदप्यवस्थायां

बाध्यते" इत्यादिना शंकराचार्यैरेव ब्रह्मवत् जगतः अत्यन्ताबाध्यत्वमुपवर्णितम् "सत्यं ज्ञानमनन्त ब्रह्म" इत्यादि श्रुतिवत् "विश्वं सत्यमित्यादिश्रुतिरपि जगतः अनारोपितत्वकथनेनाबाध्यत्वमेव समर्थयति भगवद्गीतायाम्- "**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्**" इति वाक्येन वेदाः वेदोक्ताधर्माः तत्फलभूता लोकाश्च सर्व मिथ्यैवेतिवदन्ति" इति शकरानन्दीयव्याख्यानानुसारेण मिथ्यात्वरूपासत्यत्ववादिनामासुरत्वकथनपूर्वकमधमगतिकथनेन विश्वमिथ्यात्ववादस्य निन्दितत्वात् अवश्यं प्रस्थानत्रयानुसारिभिः ब्रह्मवज्जगतोऽपिसत्यत्वमभ्युपगन्तव्यम् ।

एवमेव शङ्कराचार्यानुयायिभिरप्यद्वैतसिद्धिकारैः "नाभाव उपलब्धे" रितिसूत्रं ब्रह्मणःत्रिकालाबाध्यत्व समर्थति—इति वर्णितम् । शङ्कराचार्यैस्तु जगतःत्रिकालाबाध्यतां समर्थयतीत्युक्तम् । अतः सर्वैरद्वैतिभिरपि ब्रह्मजगतोः उभयोरपि मिथ्यात्वाभावरूपं सत्यत्वमङ्गीकर्तव्यम् ।

**इति ब्रह्मजगतो सत्यत्वसमर्थनम्**
**मिथ्यात्वनिरासश्च ॥**

## ज्ञाननिवर्त्यत्वस्य सत्यत्वाविरोधसमर्थनम्

"सतो ह्युत्पत्ति प्रलयो वास्यान्नासत शशविषाणादेः" इत्यादि शाङ्करवचनानुसारेण निवर्त्यत्वस्य सत्यत्वाभावव्यापकाभावप्रतियोगित्वस्य अनुपदमेव समर्थितत्वात् तेन च निवर्त्यत्वस्य सत्त्यत्वव्याप्यत्वसिद्धे सत्त्यत्वव्याप्यस्य सत्त्यत्वविरोधिताकथनस्यानुचितत्वात्

यच्च ज्ञाननित्यत्व सत्यत्वविरोधि (२९) इति प्रक्रियालिखनं तत्तुप्रमादातिरेकस्यैवफलमित्यन्यदेतत् । यदि च १२ तम प्रक्रियात २९ तम प्रक्रियाया वैलक्षण्यप्रदर्शनेन स्वीयपौनरुक्त्याच्छादनाय ग्रंथविस्तराय च बुद्धिपूर्वकमेव ज्ञाननित्यत्वं सत्यत्वविरोधीत्युक्तम् नतत्प्रमादायातमित्युच्यते तदा काममुच्यताम्

नित्यत्वसत्त्यत्वयोर्विरोधं तु भ्रान्तमुन्मत्तं वा विना न कोऽपि मानयेदित्यवगच्छ ।

**इति ज्ञाननिवर्त्यत्वज्ञाननित्यत्वसत्यत्वानां विरोधनिरास ।**

# अद्वैतमते अज्ञानस्य भावरूपत्वसमर्थनं व्याहतम् ।

द्वैतमते यद्यपि ज्ञानविरोधित्वेन अज्ञानपदबोध्यं भावरूपमज्ञानमेकं भावविलक्षण ज्ञानाभावरूप चापरमिति द्विविधमज्ञानमङ्गीकृतम् । अद्वैतिभिस्तु भावविलक्षणत्व भावत्वं चैकस्याज्ञानस्याङ्गीक्रियते तथा प्रत्यक्षादिप्रमाणानामपि भावविलक्षणस्याज्ञानस्य भावत्वसाधकतासमर्थनेन प्रमाणाभासत्वं सम्पाद्यते। नहि मातृभिन्नायाः वन्ध्यायाः मातृत्वसाधक न भवति प्रमाणाभासरूपम् । भावत्वकथनस्य अभावविलक्षणत्वकथन एवतात्पर्य न भावत्वविधाने अतो न व्याघात इति तु न युक्तम् । भावविलक्षणत्वकथनेन अभावत्वस्यैव प्राप्त्या पुनरभावविलक्षणत्वकथने व्याघातस्य वज्रलेपायितत्वात् । वस्तुतस्तु अद्वैतमते अज्ञानस्य भावत्वं अभावविलक्षणत्वमेव नातिरिक्तम् । एवं अभावत्वमपि भावविलक्षणत्वमेव नातिरिक्तम् । सति चैवं किन्निमित्तोऽयं अज्ञानस्याभावत्वनिरासे भावत्वसाधने चाभिनिवेशः भावत्वाभावत्वयोरुभयोरप्यज्ञानेऽभावात् अभावत्ववद् भावत्वं निराक्रियताम् भावत्ववदभावत्व वा प्रसाध्यताम् व्याहतभाषणमेव भूषणमिति मन्यमानाना व्याघातस्त्वकिञ्चित्कर एवेति सूचयितुमेव न्यायसुधायाम् अद्वैतमतानुसारेण अज्ञानस्य भावरूपत्वनिरासः कृत इति तत्त्वम् ।

**।। इत्यद्वैतमते भावरूपाज्ञाननिरासः ।।**

## "तत्त्वमसि" इत्यादिवाक्यानां जीवब्रह्मैक्यपरत्वनिरासः ।

यच्चोक्तम् "तत्त्वमसीत्यादिवाक्यानां जीवत्वेश्वरत्वविशिष्टैक्याभावेऽपि तदुपलक्षितस्वरूपैक्यपरता" इति तत्तु अनुपदमेव अद्वैतसिध्याद्युक्तादिशा जीवत्वोपलक्षितस्वरूपे जीवत्वशून्यादीश्वरस्वरूपाद्व्यावर्तितत्वस्य ईश्वरत्वोपलक्षितस्वरूपे च ईश्वरत्वशून्याज्जीवस्वरूपाद्व्यावर्तितत्वस्य तदुपलक्षितशब्देन प्रतिपादनसमर्थनात् व्यावृत्तयोः = भिन्नयोरैक्यकथनस्य व्याहतत्वादयुक्ततरम् ।।

**इति तत्त्वमस्यादिवाक्यानां जीवब्रह्मैक्यपरत्वनिरासः ।**

**अद्वैतमतेऽपि प्रत्यक्षस्यागमबाधकत्वम् ।**

"यजमानःप्रस्तरः" "आदित्यो यूपः" इत्यादिवेदवाक्यानां प्रत्यक्षविरोधेन अर्थान्तरपरत्वरूपबाधः जैमिनितन्त्रप्रदर्शितः सर्वतन्त्रसम्मतश्च ।

ननु "यजमानः प्रस्तर" इत्यादिवाक्यानामन्यशेषत्वादमुख्यार्थत्वेऽपि तत्त्वमस्यादिवाक्यानामनन्यशेषत्वान्नामुख्यार्थत्वमितिचेन्न। यतः अन्यशेषत्वं नामुख्यार्थत्वे प्रयोजकम् न वा अनन्यशेषत्वं मुख्यार्थत्वे प्रयोजकम्, "सोमेन यजेते" त्यस्य अनन्यशेषत्वेऽपि सोमविशिष्टयागरूपामुख्यार्थबोधकत्वस्य पूर्वमीमांसाया साधितत्वात्। किन्तु मानान्तराविरुद्धत्वमेव मुख्यार्थताया प्रधानं प्रयोजकम्। तथा च प्रकृते अन्यशेषत्वाऽनन्यशेषत्वविचारोऽनवसरग्रस्त एव।

तत्र तात्पर्यविषयीभूतार्थबोधकत्वं मुख्यार्थत्वं न शक्यार्थबोधकत्वमित्यादिकथनं तु भावाऽनवबोधविलसितम्। प्रमाणान्तराविरुद्धार्थ एव हि प्रमाणानां तात्पर्यमुपक्रमादयः निश्चाययन्ति न तु प्रमाणान्तरविरुद्धे। अत एव "यजमानः प्रस्तर" इत्यत्र किं प्रस्तरयजमानाभेदे तात्पर्यं उत प्रस्तरयजमानकार्यकार्यभेदे इति विचारे प्रत्यक्षप्रमाणविरुद्धत्वादेव न प्रस्तरयजमानाभेदे तात्पर्यं किन्नाम प्रत्यक्षाविरुद्धे अर्थान्तर एव अतएव तात्पर्यानुपपत्त्या यजमानपदस्य यजमानकार्यकारिणि लक्षणाङ्गीकार इति तत्त्वम्। अत एव शङ्कराचार्यैः "**प्रत्यक्षादिविरोधः स्यादित्यैक्ये तयोः परित्यक्ते**" इत्यादिना प्रत्यक्षविरोधादेवसर्वज्ञत्वविशिष्टाल्पज्ञत्वविशि.ष्टैक्ये तत्त्वमस्यादिवाक्याना तात्पर्यपरित्याग उक्तः। यच्चोक्तम् अ० सुधायाम् "देहात्मप्रत्यक्षस्याप्यागमबाधकत्वापत्त्या न प्रत्यक्षस्यागमबाधकत्व" मिति तदयुक्तम् देहात्मप्रत्यक्षस्य मम देह इति प्रबलप्रत्यक्षबाधितत्वेनाप्रामाण्यज्ञानास्कन्दिततया आगमबाधकत्वाऽसम्भवेऽपि परीक्षितप्रत्यक्षस्यागमबाधकत्वाऽवश्यम्भावात्। एतदभिप्रायेणैव नाहं सर्वज्ञ इत्यादिपरीक्षितप्रबलप्रत्यक्षविरोधात्तत्त्वमसीत्यादिवाक्यानां सर्वज्ञत्वविशिष्टाल्पज्ञत्वविशिष्टैक्यतात्पर्यकत्वपरित्यागः शङ्कराचार्यैः कृतः इत्यलम्।

**इति अद्वैतमतेऽपि प्रत्यक्षस्यागमबाधकत्वसमर्थनम्।**

**स्वरूपाभेदवादे परैक्ये सर्वं एकीभवन्तीति च्विप्रत्ययायोगः।**

यच्चोक्तम् "**स्वरूपैक्यं हि अद्वैताभिमतमौपाधिकभेदानिवृत्त्युपलाक्षितसंविन्मात्रत्वम् न तु द्वयोरैक्यम्, तत्र संविन्मात्रस्य नित्यसिद्धत्वेऽपि तदुपलक्षणौपाधिकभेदानिवृत्तेरखण्डाकारसाक्षात्कारात्पूर्वमसिद्धत्वात् तदनन्तरमेव सिद्धत्वाच्च नाभूततद्भावार्थेच्विप्रत्ययायोगः**" इति तदयुक्तम्, **स्वरूपैक्य**मित्यस्य जीवस्वरूपेश्वरस्वरूपयोरैक्य-

मित्येवाक्षरलभ्योऽर्थः प्रतियोग्यनुयोगिसापेक्षत्वनियमादैक्यस्य, तथा च सविन्मात्रत्वमित्यादेरयमेवार्थो वाच्यः; सति चैवं ननु द्वयोरैक्यमितिकथनमसङ्गतम्। किञ्च भेदनिवृत्त्युपलक्षितत्वं हि पूर्वोपदर्शितरीत्या त्वन्मते साक्षात्परम्परया वा भेदानिवृत्तिज्ञाप्यभेदवत्त्वमेव। तथा च भिन्नसंविन्मात्रत्वमित्यर्थः स्यात्; स च सर्वाद्वैतवादेऽनिष्ट एव। अपि च अत्र भेदनिवृत्तिः न भेदध्वंसः त्वन्मते भेदस्य मिथ्यात्वात्, किन्तु त्रैकालिकनिषेधरूपोऽत्यन्ताभाव एव तस्य चाखण्डसाक्षात्कारात्पूर्वमपि सिद्धत्वेन अभूततद्भावार्थकच्विप्रत्ययायोगस्तदवस्थ एव, महाकाशादयो महाकाशीभवन्तीत्यादिदृष्टान्तप्रदर्शनमत्यन्तायुक्तम्; केनाऽप्यभ्रान्तेन महाकाशो महाकाशीभवतीत्यप्रयोगात्। बद्धो मुक्तीभवतीति प्रयोगस्तु ये बन्धस्य सत्यत्व मन्यन्ते अत एव बन्धध्वंसं च स्वीकुर्वन्ति तन्मते ईश्वरसाक्षात्कारात्पूर्वं बन्धध्वंसाभावात् युज्यते।

अद्वैतमते बन्धस्य मिथ्यात्वेन बन्धात्यन्ताभावस्य नित्यसिद्धत्वात् एकीभवन्तीति दार्ष्टान्तिक इव च्विप्रत्ययायोगः स्फुट एव। वस्तुतस्तु "कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति" इत्यत्र कर्मादीना जडानां विज्ञानमयात्मना च ब्रह्मणा मुख्यैक्यस्याद्वैतमते कथमप्यसम्भवेन गौणैक्यपरत्वमेव वर्णनीयमिति ध्येयम्।

**इति अद्वैतमते सर्व एकीभवन्तीति च्विप्रत्ययायोगसमर्थनम्।**

**उपास्यब्रह्मण एव श्रुतिमुख्यतात्पर्यविषयत्वम् त्रिकालाबाध्यत्व च।**

"ईक्षति कर्मव्यपदेशात्सः" (१।३।१३) इति सूत्रे तथा तत्रत्यशाङ्करभाष्ये "परमेव ब्रह्म इह (य. पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत (प्रश्नोप. ५।२।५) इतिवाक्ये) अभिध्यातव्यमुपदिश्यते। कस्मात्?

"ईक्षातिकर्मव्यपदेशात्" ईक्षातिकर्मत्वेनास्याभिध्यातव्यस्य पुरुषस्य वाक्यशेषे व्यपदेशो भवति ... अतः परमात्मैवाऽयं सम्यग्दर्शनविषयीभूतः ईक्षतिकर्मत्वेन व्यपदिष्ट इति गम्यते। स एव चेह परपुरुषशब्दाभ्यामभिध्यातव्यः प्रत्यभिज्ञायते" इत्यादिना तथा अ. सुधाकारप्रणीते प्रदीपे "ध्यायतीक्षति कर्मणोर्भेदमाशङ्क्य निराकरोति" नन्वित्यदिना — जीवघनशब्दस्यैव हिरण्य गर्भपरत्वात् परात्परो न स एव भवतीत्यगत्या परात्पर परमात्मैव" इत्यादिना कार्यब्रह्मभिन्नस्य परब्रह्मण एव अभिध्यातव्यत्वरूपोपास्यत्वस्य दर्शनविषयत्वस्य-

प्राप्यत्वस्य च समर्थनेन तस्यैवोपास्यस्य श्रुतिमुख्यतात्पर्यविषयत्व त्रिकालाबाध्यत्वं च स्वत एव सिद्धम्। सत्यप्येव यदुक्तमद्वैत. सुधायाम् "सत्यम्, उपास्यमप्यवान्तरतात्पर्यविषयतया सत्यं परंतु तस्य केवलं लौकिकपारमार्थिकत्वं न तु त्रिकालाबाध्यत्वम्" इति तदपि श्रुतिसूत्रशांकरभाष्यस्ववचनविरुद्धत्वादतिहेयमिति बोध्यम् ॥

## इत्युपास्यब्रह्मणः त्रिकालाबाध्यत्वसमर्थनम् ।

## सर्ववेदानां निर्विशेषमात्रपरत्वेन परविद्यात्वायोगः ।

यच्चोक्तम् "सर्वेषा वेदानां ... परविद्यात्वम् अन्येषां तु अपरविद्यात्वमेव न परविद्यात्वमिति तत्तु "निर्विशेषवाक्यमात्रस्य परविद्यात्वम्" "सर्वेषा वेदाना वेदत्वेनापराविद्यात्वम् ...... .. उपनिषदा त्वक्षरपरमात्मस्वरूपपरतया परविद्यात्वमित्यद्वैतासिद्धान्तः" इत्यादिस्ववचनविरोधादयुक्तम् "ब्रह्मविष्णुशिवात्मकतत्तदुपाध्यधिष्ठानतुरीयातीतनिर्विशेषमात्रपरत्वेन" त्यप्ययुक्तम्। अद्वैतमते ब्रह्मविष्णुशिवानामीश्वराणा मायोपहितत्वेऽपि उपाधिरूपत्वाभावात् "अज्ञानतदुपहितचैतन्ययोराधारभूत यदनुपहितचैतन्यं तत्तुरीयमुच्यते" "शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः" इत्यादिश्रुतेः" "तुरीयस्तदेकोऽवशिष्टः शिवः केवलोऽहम्" इत्यादिना तुरीयस्यैव निर्विशेषत्वरूपशुद्धत्वकेवलत्वाद्युक्तेः तुरीयातीतनिर्विशेषस्याद्वैतमते असत्त्वेन वेदानां तत्परत्वकथनस्योपदर्शिताद्वैतग्रन्थविरुद्धत्वात्।

किं च तुरीयातीतपदेन तुरीयातीतत्वरूपविशेषबोधनात् निर्विशेषत्वकथनमयुक्तम्। एवं निर्विशेषत्वमपि विशेषाभावरूपविशेषवत्त्वमेव। तथा च भावाभावाभ्या व्याघात इत्युक्तमेव। निर्विशेषे शब्दसम्बन्धस्य वृत्तिरूपस्य तात्पर्यरूपस्य च वार्तिककारैः अद्वैतसिद्धिकारैः अद्वैतसुधाकारैश्च निषिद्धत्वस्योपदर्शितत्वेन निर्विशेषपरत्वोक्त्ययोगाच्च ।

## इति वेदानां निर्विशेषपरत्वतत्प्रयुक्तपरविद्यात्वनिरासः ।

## प्रपंचमिथ्यात्वानुमानस्य साक्षिप्रत्यक्ष—बाधसमर्थनम् ।

यच्चोक्तम् "साक्षिचैतन्यं वर्तमानमात्रग्राहित्वात् तात्कालिकमेव सत्त्वं गृह्णाति न तु त्रिकालाबाध्यत्वम्। अतः साक्षिणो भाविबाधाभावाग्राहकत्वात् न साक्षिणा मिथ्यात्वानुमानस्य बाधः अप्रामाण्यं वा" इति तत्तुच्छम् ।

यतः त्रिकालाबाध्यत्वं नाम त्रैकालिकनिषेधप्रतियोगित्वाभावः। स च कालत्रयसत्त्वेनेव कालद्वयसत्त्वेन एककालसत्त्वेनाप्युपपद्यत एव। नीलरूपवति घटे रूपसामान्याभावाभाववत् यत्किंचिदेककालसम्बन्धवति कालसम्बन्धरूपसत्तासामान्याभावासम्भवात्। तावतैव प्रपञ्चे सत्तासामान्याभावग्राहकस्य—तत्समनियतत्रैकालिकनिषेधप्रतियोगित्वग्राहकस्य विश्वमिथ्यात्वानुमानस्य बाधः अप्रामाण्यं च दुर्निवारमेव। यश्च "प्रामाण्यवदप्रामाण्यस्याऽपि साक्षिभास्यत्वं तेन च मिथ्यात्वाभावोऽपि साक्षिभास्यः" इत्यन्यथापरमतानुवादः स परमताऽनभिज्ञानमूलक इति ज्ञेयम्।

**इति विश्वमिथ्यात्वानुमानस्य प्रत्यक्षबाधः अप्रामाण्य च।**

**वेदान्तवाक्यानामखण्डार्थत्वनिरासः।**

यदुक्तम् अ. सुधायाम् "अन्विताभिधानवादे अभिहितान्वयवादे वा नाद्वैतिना निर्भरः उभयस्याप्यविरोधात्" इति तत्तुच्छम् अद्वैततत्त्वसुधाकारैर्बहुशः प्रशंसिताया न्यायचान्द्रिकायाम्—"**तदेवमन्विताभिधानमेवयुक्त**"मित्याचार्याः। तथाचाहुः—

**पदैरेवान्वितस्वार्थप्रतिपादनशक्तिभिः।**

**गुणप्रधानभावात्मासंसर्गः प्रतिपाद्यते॥**" इति। भगवता भाष्यकारेणाप्यभाषि—"न च तद्गतानां पदानां ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽवगम्यमानेऽर्थान्तरकल्पना युक्ता" इति। पदार्थविवक्षाया तु 'तद्गताना' मिति सदेवेत्यादिवाक्यगतत्वमभिधीयमान विरुध्येत पदानामेव वाक्यगतत्वात्...**तस्मादन्यान्वितस्वार्थमात्रप्रत्यायनक्षमाः। शब्दा इत्यवसातव्य विना कार्यार्थसङ्गतिम्**" इति ग्रन्थेन अन्विताभिधानवादे शंकराचार्याणामपि निर्भरसूचनात्। तथा शब्दानां अन्यान्वितस्वार्थमात्रप्रत्यायकत्वकथनेन अन्याऽनन्विताखण्डार्थप्रत्यायकत्वस्य स्पष्टं निषेधाच्च। शङ्कराचार्यैरपि—"तत्तुसमन्वयात्" इतिसूत्रभाष्ये- "तत् सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं ब्रह्म वेदान्तशास्त्रादेवावगम्यते समन्वयात् सर्वेषु वेदान्तेषु वाक्यानि तात्पर्यैणैतस्यार्थस्य प्रतिपादकत्वेन समनुगतानि" इतिवाक्येन सर्वज्ञत्वादिविशिष्टस्यैव सविशेषब्रह्मणः सर्ववेदान्ततात्पर्यविषयत्वकथनात् सूत्रघटकेन अवधारणार्थकेन "तु" इतिशब्देन अखण्डस्य निर्विशेषस्य वेदान्ततात्पर्यविषत्वनिरासाच्च। तथा च न वेदान्तानामखण्डार्थत्वकथनं कथमपि युक्तम् इति।

**इति वेदान्तानामखण्डार्थत्वनिरासः।**

## व्यासप्रणीतस्य ब्रह्मतर्कस्यापि वेदाङ्गत्वम् ।

यदुक्त "वेदाङ्गेषु शिक्षादीना षण्णामेवान्तर्भावः न ब्रह्मतर्कस्य (न्तापि)। इति तदपि हेयम् ।

" पुराणन्यायमीमासा धर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्याना धर्मस्य च चतुर्दश ।। "

इति चतुर्दशविद्यास्थानान्युक्तानि तत्र विद्याशब्दस्य ज्ञानबोधकत्वेन स्थानशब्दस्य निग्रहस्थानमित्यत्रेव हेतुबोधकत्वेन विद्यास्थानानीत्यस्य ज्ञानसाधनार्थकत्वात् ज्ञानसाधनानि चतुर्दशसख्याकानीति लभ्यते तेषामेव ज्ञानसाधनानां धर्मस्थानत्वमप्यनेनैव वाक्येनोच्यते तदा तु स्थानपदस्य शास्त्रयोनित्वादित्यत्र योनिपदस्येव प्रमासाधनबोधकत्व मन्तव्यम् । एवंविधव्यवस्थास्वीकार एव " वेदप्रणिहितो धर्मः " " वेदोऽखिलो धर्ममूल " " चोदनालक्षणोऽर्थो धर्म " इत्यादिवाक्यान्युपपद्यन्ते । तत्र केनोपनिषदि चतुदर्शविद्यास्थानाना " वेदाः सर्वाङ्गानि सत्यमायतनम् " इति त्रिष्वन्तर्भाव उक्तः । तत्र वेदपदेन चतुर्णाम् सत्यपदेन मीमासायाः अङ्गपदेन शिक्षादिषडङ्गाना ग्रहणे आहत्य एकादशविद्यायतनानामेव ग्रहणं स्यात् । सर्वागानीत्यत्र सर्वपदवैय्यर्थ्य च स्यात् । अतः अङ्गपदेन उपाङ्गान्यऽपि ग्राह्याणि इत्यभिप्रायेण शंकराचार्यैः सर्वसिद्धान्तसग्रहे

" मीमासान्यायशास्त्र च पुराण स्मृतिरित्यपि ।
चत्वार्येतान्युपाङ्गानि बहिरङ्गानि तानि वै ।।
चतुर्दशसु विद्यासु मीमासैव गरीयसी "

इत्यादि वाक्यैः पुराणादीनामुपाङ्गत्वमुपदर्शितम् । चरणव्यूहे च न्यायशास्त्रादीनामुपाङ्गत्वमुक्तम् । एवंचाङ्गशब्देन पुराणन्याययोर्ग्रहणसिद्धौ वाकोवाक्यमिति छान्दोग्योपनिषत्प्रदर्शितं तर्कशास्त्रं व्यासप्रणीतंपुराणपदसमाभिव्याहारात् व्यासप्रणीतमेवग्राह्यं न तु व्याससूत्रप्रतिषिद्धमक्षपादादिप्रणीतं न्यायशास्त्रम् । तच्च इतरस्यानुपलम्भात् सर्वज्ञाचार्यप्रदर्शितं ब्रह्मतर्कशास्त्रमेव ब्रह्ममीमांसानुकूल नान्यत् बाधकाभावात् साधकसद्भावात् अबाधितार्थकत्वेन प्रामाण्याऽवश्यम्भावाच्चेति ।

**इति ब्रह्मतर्कस्यवेदाङ्गत्वसमर्थनम् ।**

## सर्वशब्दावाच्यस्य लक्ष्यत्वायोगः ।

यच्चोक्तम् ' इक्षुक्षीरमाधुर्यादीनामिव, आकृत्यधिकरणन्यायेनावाच्यानां व्यक्तीना लक्षणया बोधनवत् अन्विताभिधानवादेऽप्यवाच्यस्यान्वयविशेषस्य

बोधवच्च वेदान्तैर्लक्षणयैव निर्विशेषब्रह्मबोधाविरोधः" इति तदप्ययुक्तम्। अद्वैतिभिर्निर्विशेषब्रह्मणः सर्वथा सर्वशब्दावाच्यत्वाङ्गीकारात् इक्षुक्षीरमाधुर्यादीनां रसशब्दवाच्यत्वस्य मधुरादिशब्दवाच्यत्वस्य "विशदं क्षीरमाधुर्यं" इत्यादिपाकशास्त्रीयानुशासनेन विशदादिशब्दवाच्यत्वस्य च सत्त्वेन अवाच्यत्वाभावेन दृष्टान्तत्वायोगात् आकृत्यधिकरणन्यायेन व्यक्तीनां गोपदेन लक्षणया बोधनाङ्गीकारेऽपि व्यक्तिपदवाच्यतायाः अवश्याभ्युपेयत्वात् व्यक्तेर्व्यक्तिपदेनाऽपि लक्ष्यत्वाभ्युपगमे व्यक्तिपदेन किं लक्ष्यमितिप्रश्नस्य निरुत्तरत्वापातात् घटवान् यः त पश्येत्यादौ घटस्यैवाकृत्यधिकरणन्यायेनाऽपि तत्पदवाच्यत्वावश्यम्भावात्। वस्तुतस्तु ब्रह्ममीमांसाया समन्वयाध्याये "आकाशस्तल्लिंगा" दित्यादौ आकाशादिशब्दाभिधेयत्वं व्यक्तिरूपब्रह्मण एव प्रसाध्यते न त्वाकृतेरिति आकृत्यधिकरणन्यायस्य वेदान्तिभिरनुदाहरणीयत्वात् अन्विताऽभिधानवादे अन्वयविशेषस्याऽपि वाच्यत्वाङ्गीकारादवाच्यत्वकथनमयुक्तमेव। तथा च वेदान्तैर्लक्षणया निर्विशेषब्रह्मबोधाविरोध इति कथनमत्यन्तासङ्गतम्। निर्विशेषस्य स्वयं शङ्कराचार्यैरेव ज्ञानाविषयत्वनिरासात् वार्तिककारादिभिः अभिधालक्षणागौणीरूपवृत्तित्रयस्याऽपि निराकरणात् स्वयमसुधाकृताऽपि अनेकशः निर्विशेषस्य शब्दबोध्यताया निराकरणात्तत्तद्वचनविरोधाना सुदृढनिरूढत्वात्।

## इति निर्विशेषब्रह्मणः लक्ष्यत्वाभावसमर्थनम्।

## जीवेश्वरभेदस्यैवौपनिषदत्वम्।

यच्चोक्तम्--अ सुधायाम्—

"ईश्वरभेदस्य शास्त्रैकगम्यस्याप्युपासनोपयोगितामात्रेण चारितार्थ्यात्" इति तदयुक्तम्। तत्र मात्रशब्दस्य मोक्षोपयोगित्वनिषेधकत्वमेव वक्तव्यम्। तच्च "पृथगात्मानं प्रेरितार च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" "जुष्टं यदापश्यत्यन्यमीशमस्यमहिमानमिति वीतशोकः" इत्यादिश्रुतिषु जीवेश्वरभेदस्यैव मोक्षोपयोगित्वस्य मोक्षहेतुज्ञानविषयत्वरूपस्य स्फुटमभिधानात्। यदप्युक्तम् "परत्वेन निर्विशेषवाक्यस्य प्रबलप्रामाण्येन निषेधापेक्षितनिषेध्यसमर्पकतया अवान्तरतात्पर्याऽविरोधा" दिति तदपि हेयम्। उपनिषत्सु निर्विशेषवाक्यस्यैवाभावात् तस्य परत्वप्रबलप्रामाण्यविचारस्य दूरपराहतत्वात्। इतरानुद्देशेन विधियमाने मुख्यं तात्पर्यम् इतरोद्देशेन विधीयमाने त्ववान्तरं तात्पर्यमिति निषिध्यमाने तु न

महातात्पर्य न वा अवान्तरतात्पर्यमिति वस्तुगतिः। अतः निषेध्यसमर्पकतया अवान्तरतात्पर्यमिति कथनमसङ्गतमेव। अपि च भेदस्यैव तादात्म्यनिषेधरूपत्वात् "तादात्म्यमसिशब्दार्थो ज्ञेयस्तत्त्वपदार्थयोः। सोऽय पुरुष इत्यादिवाक्ये तादात्म्य-बन्मतः"॥ इत्यद्वैतिग्रन्थोपदर्शिताभेदवाक्यानामेव निषेध्यसमर्पकत्व युक्तम्, न निषेधकाना भेदवाक्यानाम्। यच्चोक्तम् "सर्वविशेषनिषेधपरतया निर्विशेषवाक्यस्यैव प्राबल्यम्" इति तत्तु मूकोऽहमिति वाक्यस्याऽपि सर्ववचननिषेधपरत्वेन प्राबल्यापत्त्या अतिहेयम्। यदप्युक्तम् "भेदवाक्यानामभेदवाक्यानां चाधिकारिभेदेन व्यवस्था" इति तदतितुच्छम्। कर्मणि आधिकारिभेदेन व्यवस्थासम्भवेऽपि वस्तुनि विकल्पासम्भवेन अधिकारिभेदेन व्यवस्थाकथनस्यायुक्तत्वात्। यदि च अधिकारिभेदेन व्यवस्थेत्यस्य "दैवीसम्पद्विमोक्षाय निबन्धायासुरीमता" इत्युपक्रम्य असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्। ईश्वरोऽहमहं भोगी....ततो यान्त्यधमा गतिम्" इति गीताप्रदर्शितरीत्या असुराणामधिकारिणां जगदसत्यत्वज्ञानजीवेश्वराभेदज्ञानादिरूपसाधनसम्पत्त्या अधमगतिरूपफलप्राप्तिः देवानामधिकारिणां "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः... योमामेवमसम्मूढो जानाति पुरुषोत्तमम्...एतद्बुध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत" इति गीतोक्तदिशा च विष्णोरीश्वरस्य जीवजडभेदज्ञानसर्वोत्तमत्वज्ञानसत्यजगद्रक्षकत्वज्ञानरूपसाधनसम्पत्त्या विमोक्षरूपफलप्राप्तिर्भवति इति व्यवस्थाया भवतः परिभाषा। तदा तु स्वागतार्ह एव भवान्। "उदिते जुहोति" "अनुदिते जुहोति" इत्यादाविवाधिकारिभेदेन व्यवस्थां तु नानुमन्यामहे। अधिकमन्यत्र।

**इति जीवेश्वरभेदस्यैवौपनिषदत्वसमर्थनम्।**

**प्रमाणत्रैविध्यसमर्थनम्।**

प्रत्यक्षमनुमानं च शास्त्रंच विविधागमम्।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता॥

इति मनुना प्रमाणानां त्रित्वस्य समर्थितत्वात् "प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धयः षद प्रमाणानी" ति अ. सुधावाक्यमनादेयम्। अनुपदमेव यथा चोपमानार्थापत्त्यनुपलब्धीनां प्रत्यक्षानुमानागमान्यतमाबहिर्भावः तथा अनुपदमेव विवेचयिष्यामः॥

**इति प्रमाणत्रित्वसमर्थनम्।**

## स्वाप्नानां सत्यत्वसिद्धिः ।

यद् प्रश्नोपनिषदि तत्रत्यशाङ्करभाष्ये च स्वाप्नानामुदकादीनां परमार्थसत्यत्वस्य स्फुटमभिधानात् स्वाप्नानामाविद्यकत्वकथनमसुधाकाराणामयुक्तमेव ।

अधिकमुत्तरत्र विवेचयिष्यते ।

इति स्वाप्नानां सत्यत्वसिद्धिः ।

## जीवस्वरूपविचारः ।

जीवः " वालाग्रशतभागस्य " इत्यादिश्रुत्यनुसारेण अणुपरिमाणः तस्य ईश्वरप्रतिबिम्बत्वम् ईश्वरांशत्व च ईश्वराधीनत्वे सति तत्सदृशत्वरूपमेव नान्यत् । अंगीकृत चाद्वैतिभिरपि " जीवो ब्रह्मांश इव तत्तन्त्रतया न त्वशः " इत्यादिना जीवानामीश्वराधीनत्वरूपमेवेश्वरांशत्वमिति । नाशाप्रतियोगित्वरूपनित्यत्वेन चेतनत्वेन चेश्वरसरूपः स्वस्वरूपातिरिक्तोपाधिशून्यः असर्वगतश्च जीवः । तत्र ईश्वरसदृशत्वोपपादनाय परमात्मसरूपत्व द्वैतग्रन्थेषूपदर्शितं तदज्ञानाच्चाद्वैतसुधाकारेण " नित्यपरमात्मस्वरूपोपाधिकः " इत्यन्यथानुवादविधानेन " अबद्धं पठित्वा कुचोद्यंकरोती"ति न्यायोऽवलम्बितः। बिम्बप्रतिबिम्बयोर्भेदनियमेन बिम्बस्य ईश्वरस्य सर्वगतत्वेऽपि प्रतिबिबस्याणोर्जीवस्य सर्वगतत्वायोगात् तस्य सर्वगतत्वं तु बिम्बरूपेणेत्यप्यन्यथानुवाद एव । अद्वैततत्त्वसुधायाम् प्रायः द्वैतमतग्रन्थाना शब्दतोऽर्थतश्च अन्यथानुवाद एव कृतः । ततश्चान्यथानुवादपूर्विका परीक्षा अपरीक्षैव । यच्चोक्तम् "अहमर्थो जीवोल्पपरिमाणान्तःकरणोपाधिकत्वात् तत्परिमाणः । व्यापकत्वं तु सर्वोपाधिविरहितसंविन्मात्रत्वेन " इति तदप्ययुक्तमेव । अहमर्थस्यानात्मत्ववादिना जीवात्मनः अहमर्थत्वकथनस्यायुक्तत्वात् । जीवब्रह्मैक्यवादिना जीवोप्यनात्मैवेति कथनमप्यशक्यम् । किंच जीवस्यान्तःकरणोपाधिकत्वे अन्तःकरणनाशाधीननाशप्रतियोगितया अन्तःकरणवन्मिथ्यात्वेन ब्रह्मस्वरूपत्वासम्भवेन जीवो ब्रह्मैव नापर इत्युक्तिविरोधः ।

**श्रोत्रं चक्षुःस्पर्शनं च रसनं घ्राणमेव च ।**
**अधिष्ठाय मनश्चाऽयं विषयानुपसेवते ॥**

इति गीतायां जीवस्य मनोरूपान्तःकरणेन सह शरीरस्थितिकथनेन श्रोत्रादीनामिव अन्तःकरणस्याऽपि जीवोपाधित्वायोगात् कर्तृकरणयोर्भिन्नत्व-

नियमेन कर्तुर्जीवस्य अन्तःकरणादत्यन्तभिन्नस्य अन्तःकरणोपाधिकत्वासम्भवाच्च न हि कुठारेण करणेन दारु छिन्दन् पुरुषः कुठारोपाधिक इत्युच्यते । परीक्षकेण लौकिकेनान्येन वा "व्यापकत्वं तु सर्वोपाधिविरहितसंविन्मात्रत्वेनेत्यप्ययुक्तम् निरुपाधिकसंविद्रूपाणामानन्त्येन तत्र जीवसविदामणुत्वेन सर्वोपाधिविरहितसंविन्मात्रत्वेनाऽपि जीवस्य सर्वगतत्वायोगात् ।

## इति जीवस्वरूपविचार ।

## पञ्चरात्रप्रामाण्यसमर्थनम्

भगवद्गीतायाः मनुस्मृतेश्च पचरात्रानुसारितायाः श्रीमहाभारते अनेकशः उक्तत्वेन गीतामनुस्मृत्यो प्रामाण्यसरक्षणाय पचरात्रस्यापि प्रामाण्यस्यावश्यंवाच्यत्वात् चतुर्भिस्सम्मितं वेदैरित्यादिना वेदपंचरात्रयोर्विरोधाभावस्य स्पष्टमभिधानात् । " वेदविरोधे पंचरात्रस्याप्रामाण्यम् " इति स्वमतसकीर्तनम् " पंचरात्राविरोधेन वेदप्रामाण्यं न तु तद्विरोधेपि " इति वाक्येन परमतस्याऽन्यथाऽनुवादकरण च सर्वथाऽयुक्तम् । यच्च "उत्पत्त्यसम्भवात्" इतिसूत्रभाष्ये "उत्पत्तिमत्वे हि जीवस्य अनित्यत्वादयो दोषाः प्रसज्येरन् । तथाच नैवास्य भगवत्प्राप्तिर्मोक्षः स्यात्" इत्यादि शंकराचार्यवचन तत्तु " नित्यो नित्याना चेतनश्चेतनानाम् " इति श्रुतौ नित्योऽनित्यानामिति अकारप्रश्लेषं विधाय अनित्यानामित्यस्य विनाशिनामित्यर्थमाभिधाय विनाशिना चेतनानामिति योजनया जीवानित्यत्वप्रतिपादककाठकीयशाङ्करभाष्यस्यैवाप्रामाण्यं सम्पादयेत् न तु "जीवः सकर्षण प्रभुः" इति भारतोक्तस्य भगवद्व्यूहान्तर्गतस्य जीवपदाभिधेयस्य संकर्षणस्य " जनीप्रादुर्भावे " इतिधातुपाठानुसारेण प्रादुर्भावबोधकपंचरात्रस्याप्राण्यम् । उक्तं हि शंकराचार्यैः " योऽसौ अव्यक्तात्परो नारायणः स अनेकधा व्यूह्यावस्थित इति तन्न निराक्रियते " स एकधा भवति त्रिधा भवति " इत्यादिश्रुतिभ्यः " इत्यादिवचनैः भगवतः अनेकधाप्रादुर्भाववत्वम् । तथाचोपदर्शितरीत्या वेदपचरात्रयोः विरोधप्रसक्तेरेवाभावेन " वेदविरोधे पंचरात्रस्याप्रामाण्यमिति प्रक्रिया दुष्प्रक्रियैव ।

नन्वेवंसति महाभारते " **सांख्यं योगः पांचरात्रं वेदाःपाशुपतं तथा । ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै** " ॥ इति वाक्येन पाञ्चरात्रस्य वेदविलक्षणमततप्रतिपादनासङ्गत्यापत्तिरितिचेन्न साख्यं योगः पाशुपतं वेदारण्यकमेव च । ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥ इत्येवं प्राचीनकोशेषु

पाठदर्शनात् । साख्य योगः पाञ्चरात्रमितिपाठस्यापपाठत्वेनासाधुत्वात् । साधुत्वाग्रहे तु—

"नानामतत्व हि साङ्ख्यादिदर्शनानाम्" "नानामतत्वनिरासो हि नानापदार्थाना मिथ्यात्वव्यवस्थापनाधीनः" "अद्वैतमत तु नानानिषेधेनैवात्मानं लभते, इति नानामतत्वं तत्र नापतति" "तत्र साङ्ख्ययोगौ नानासत्यत्वं ख्यातिवादावलम्बनेन मन्येते पाशुपतं तु मन्यतेऽन्यथाख्यातिवादावलम्बेन पाञ्चरात्रमतमपि.... नानासत्यत्वं मन्यते इति तु वस्तुस्थितिः.. नानामिथ्यात्वेन प्राप्तात्मलाभं केवलाद्वैतदर्शनमेवेत्यवचनसिद्धमिदम्" इत्याद्यद्वैततत्त्वसुधाकारप्रणीतनिबन्धान्तरगतवचनैः नानामतत्व नाम नानासत्यत्वप्रतिपादकत्वरूपमेवेति वक्तव्यम् । तथा "सांख्यं योगः पांचरात्र वेदाः पाशुपतं तथा" इति वाक्येन सांख्ययोगयोरिव पाशुपतपाचरात्रयोरिव वेदानामपि नानासत्यत्वबोधकत्वरूप नानामतत्वं विधीयते इत्यप्यवश्यं वक्तव्यमेव । तथा च वेदपंचरात्रयोरुभयोः द्वैतसत्यत्वप्रतिपादकत्वरूपनानामतत्वमेवानेन वाक्येन प्रतिपाद्यते । नतु विलक्षणमतत्वमिति सिध्दम् । तेन च द्वैतदर्शनाना वेदानुसारित्वेन वैदिकदर्शनत्व अद्वैतदर्शनस्य नानामतत्वाभावेन नानासत्यत्वप्रतिपादकत्वेन भारतोपवर्णितवेदविरुध्दत्वेनावैदिकदर्शनत्वेन वैदिकैः अत्यन्तहेयत्वमेव साधितमद्वैत. सुधाकारैरिति विभावनीयम् ।

**इति वेदवत्तदनुसारिपंचरात्रस्यापि प्रामाण्यसिद्धिः ।**

## तत्त्वमसीतिश्रुत्यर्थविचारः ।

"यथा आदित्यो यूपः" इत्यत्र सारूप्यादिति जैमिनिसूत्रानुसारेण आदित्यशब्दस्य आदित्यसदृशार्थकत्वेन आदित्यसदृशस्य यूपस्य चाभेदे मुख्यं सामानाधिकरण्यम् । यथा वा इष्टादिकारिणामवरोहणकथनप्रसङ्गे प्रयुक्तस्य वायुर्भूत्वा धूमो भवति धूमो भूत्वा अभ्र भवतीति वाक्यस्य "अन्यस्यान्यभावासम्भवात् इष्टादिकारिणः आकाशवायुधूमाभ्रसाम्य प्रतिपद्यन्ते इत्येवार्थः" इति "साभाव्यापत्तिरुपपत्तेः" इति सूत्रतत्रत्यशाङ्करभाष्याभ्या यत्र भिन्नत्वेन प्रमितयोः अभेदप्रतिपादनं प्रमाणवाक्येन क्रियते तत्र तद्वाक्यस्थविधेयवाचकपदस्य विधेयसदृशार्थबोधकत्वनियमसूचनात् । तत्त्वमसीत्यत्राऽपि "साभाव्यापत्ति" रिति सूत्रानुसारेण त्वंतत्सदृशः असि इति तत्सदृशस्य तत्पदार्थस्य त्वंपदार्थस्य च अभेद एव मुख्यं सामानाधिकरण्यम् । अस्तु वा सदृशाभेदे सामानाधिकरण्यम-

मुख्यम् । तथाऽपि श्रुतितात्पर्यनिर्णायकसूत्रोपदर्शितत्वेन तदेवाभ्युपगन्तव्यम् । यथा वा अद्वैतिभिः " तद्गुणसारत्वात्तु तद्व्यपदेशः " इति सूत्रे अणुभूतबुद्धिगत-गुणप्रधानकत्वाज्जीवस्य बुद्धिवदणुरिति व्यपदेशः इयुच्यते । तथा द्वैतिभिः ब्रह्म-गतगुणसदृशचेतनत्वनित्यत्वादिगुणयोगात् ब्रह्मव्यपदेश इति सूत्रार्थकथनस-म्भवेन सूत्रनिश्चितस्य गौणस्याऽपि सामानाधिकरण्यस्यावश्याभ्युपगन्तव्यत्वात् । " यन्त्रारूढानि मायया " इत्यत्र यथा इव शब्दोऽत्राध्याहार्य इत्युक्तं शंकराचार्यैः तथा. तत्त्वमसीत्यत्राऽपि इव शब्दाध्याहारेण प्रमाणान्तराविरुद्धार्थपरत्वसम्भवे तद्विरुद्धार्थकथनस्यायुक्तत्वात् ।

यच्चोक्तम् " तत्त्वमसीत्यत्राभेदे मुख्यमेव सामानाधिकरण्यमुपाधीनाम-विवक्षया " इति तत्र प्रष्टव्यम् उपधीनामविवक्षा कुत इति अभेदविरोधित्त्वाद-विवक्षेतिचेद्ब्रूयात् तदा वक्तव्यम् शीतत्वोष्णत्वयोरिव स्वाभाविकयोर्नित्ययोः जीवत्वेश्वरत्वयोः सर्वज्ञत्वतदभावयोर्वा त्वदाविवक्षामात्रेण अभेदविरोधित्वाऽनपायेन तदविवक्षाया अकिंचित्करत्वमेवेति ।

" एवं ग्राहयन्ति च आत्मत्वेनैवेश्वर वेदान्तवाक्यानि " सआत्मातत्त्वमसि " " इत्येवमादीनि " इति शाङ्करवाक्ये "सआत्मा" इत्येवमादीनि इत्येव प्रकृतोपयुक्त-त्वाद्वक्तव्यम् । अधिकांशोदाहरणप्रयोजनं तु अतत् इति पदच्छेदप्रदर्शनमेव यथा " अन्तरउपपत्तेः " इतिसूत्रशांकरभाष्ये अक्षिस्थः किं प्रतिबिम्बात्मा अथवा विज्ञानात्मा उत देवतात्मा अथवा ईश्वर इति संशये " परमेश्वर एवाक्षण्यभ्यन्तरः पुरुष इहोपदिष्ट इति । कस्मात् उपपत्तेः=आत्मत्व तावन्मुख्यया वृत्या परमेश्वरे उप-पद्यते "सआत्मातत्त्वमसीति श्रुतेः" इति, "तत्रात्मत्वं तावद् मुख्यया वृत्या परमात्म-न्येवोपपद्यते सआत्मा तत्वमसीतिश्रुतेः " इति वार्तिके " उपपत्तेः आत्मत्वामृतत्वा-भयत्वादीनामिहोक्तानां परमात्मन्येवोपपत्तेः " इति सदाशिवेन्द्रकृतब्रह्मसूत्रवृत्तौ । एवं " द्युभ्वाद्यायतनं स्वशब्दात् " इत्यत्रापि भाष्ये तद्व्याख्याने च जीवे आत्मशब्दप्रवृत्तिनिमित्तस्य व्याप्तत्वस्याभावान्न मुख्यमात्मत्वमित्युपदर्शितम् । तथा च अन्तर उपपत्तेरित्यस्य अक्ष्यन्तस्थः परमेश्वर एव न जीवः अन्ये वा आत्मत्वादीना-मेतत्प्रकरणपठितानां परमेश्वर एवोपपत्तेः । जीवे आत्मत्वाद्यनुपपत्तेः जीवेआत्मत्वा-नुपपत्तिः कुत इत्याशङ्कायामुक्तम् " स आत्मातत्त्वमसीति श्रुतेः " इति । तथाच यदीयं श्रुतिः ब्रह्मणः आत्मत्वं जीवस्य च तद्भिन्नत्वं प्रतिपादयेत् तदैव उक्तहेतु-साधकत्वेन सूत्रोपदर्शितानुमाने हेत्वसिद्धिपरिहारप्रयोजकत्वेन प्रकृते तदुपन्यासो

युक्तः स्यात्। प्रकृतहेतुसाधकत्वस्य चास्याः स आत्मा अतत् त्वमसि इति पदच्छेदमन्तरेणासम्भवात्। अत एवात्र " सआत्मा " इत्येतावदशोदाहरणं विहाय " सआत्माऽतत्वमसीति " अधिकांशोदाहरणस्य अतत् इति पदच्छेदसूचनं प्रयोजनं तथैवेति विज्ञेयम्। "

श्वेतकेतोर्गर्वपरिहाराय तस्य ईश्वराधीनत्वतद्भिन्नत्वबोधनस्यैवैतत्प्रकरणार्थत्वेन प्रकरणाविरोधात् आद्यखण्डे, " सता सौम्य तदासम्पन्नो भवती "ति भेददृष्टान्तस्यैवोपक्रमात्। तदनुसारेणात्रातादितिपदच्छेदकरणान्नोपक्रमोपसंहारविरोधः। समर्थितं च त्वदाचार्यैः " अधिकं तु भेदनिर्देशादित्यत्र सता सौम्य तदा सम्पन्नोभवती " त्यस्य भेदपरत्वम्। प्रतिज्ञादृष्टान्तयोरपि सादृश्यप्राधान्यविषयत्वेन श्रुतीनामविरुद्धानेकार्थप्रतिपादकत्वेन भाष्योपदर्शितार्थाविरुद्धार्थतया चानुव्याख्यानस्य नानुपपत्तिगन्धोऽपि। वस्तुतस्तु अद्वैतमते तत्त्वमसीत्यादीना बोधकत्वमेव नास्ति बोधकत्वे वा चिन्मात्रबोधकत्वमेव नाभेदबोधकत्व तत्त्वेऽपि चित् चिदभिन्नेत्येवरूपेणैवाभेदबोधकत्वम्। सर्वथा जीवेश्वरभेदाविरोधित्वमेव। " नहि भेदाभावोऽभेदः येनोभयोरपि विरोधः स्यात् " इत्यादिना अभेदस्य भेदविरोधित्वाभावः समर्थितश्चासुधायाम्। अधिकं गुरुपादकृताद्वैतखण्डने द्रष्टव्यम्।

## ॥ इति तत्त्वमसिश्रुत्यर्थः ॥

## वेदेषु बाधायां सामानाधिकरण्यनिरासः विशेषसमर्थनं च।

यच्चोक्तम् " ब्रह्मतदितरयोः सामानाधिकरण्यं बाधायाम्, अभेदे वा सर्वत्राविद्याप्रयुक्ताध्यारोपनिबन्धनम् " इति तदयुक्तम्। स्वतःप्रमाणभूते अत एवाबाधितार्थबोधके वेदे बाधकत्वेन अभिमतानां वाक्यानामखण्डार्थत्वेन चिन्मात्रबोधकत्वागीकारात् वस्तुतोऽबोधकत्वागीकाराच्च न बाधकत्व वक्तु युक्तम्। अतो बाधाया सामानाधिकरण्यमितिकथनमयुक्तमेव। वस्तुतस्तु वेदेषु बाधायां सामानाधिकरण्यं बौद्धैः प्रच्छन्नबौद्धैर्वा अवैदिकैरेव वक्तव्यम् न वैदिकमन्यैः। अतएव शंकराचार्यैः " धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ " इत्यत्र कामेश्वरयोः ब्रह्मतदितरयोः सामानाधिकरण्य न बाधाया किन्तु कामशब्दस्य कामस्वामिबोधकत्वेन विशेष्यविशेषणभाव एवेति समर्थितम्। एवमेव " सर्वकाम " इत्यादिश्रुतिवाक्येष्वपि बोध्यम्। एतेनैव अविद्याप्रयुक्तारोपनिबन्धनत्वकथनमपि परास्तम्।

यदप्युक्तम् " भेदाभावे भेदकार्यकारित्वस्य बाधात् विशेषे अविद्यातिरिक्ते न किमपि प्रमाणम् " इति तदपि न युक्तम्। वस्तुमात्रे स्वभावविशेषोस्तीत्यापामरमविवादम्। स एव हि विशेषो नाम नच किंचिदपूर्वं कल्प्यते येन तत्र प्रमाणापेक्षा स्यात्। स्वभावविशेषस्य अविद्यातिरिक्तत्वमपि निर्विवादमेव। यच्चाभिहितं भेदाभावे भेदकार्यकारित्वस्य बाधादिति तत्तु अद्वैतसिद्धिविरुद्धत्वादयुक्तम्। यतः अद्वैतसिद्धौ " अस्तित्वेऽप्यस्तित्वान्तरमित्यनवस्थापत्तेस्तत्रापि सोऽङ्गीकार्यइति-चेन्न। स्वभावविशेषादेव सर्वस्योपपत्तेः " इत्यादिना अविद्यातिरिक्तः भेदकार्यभूताधाराधेयभावव्यवहारनिर्वाहक स्वभावविशेषः स्वीकृत एव।

**इति बाधायां सामानाधिकरण्यनिरासः विशेषसमर्थनं च।**

**स्वाप्नपदार्थानां सत्यत्वमीश्वरसृष्टत्वं च।**

षट्प्रश्नतद्भाष्याभ्यां स्वाप्नपदार्थानां पारमार्थिकसत्यत्वप्रतिपादनस्यानुपदमेव समर्थनात् स्वाप्नपदार्थाना सत्यत्वम् " अथ रथान् रथयोगान् पथःसृजते " इति ईश्वरसृष्टत्वस्य श्रुत्यैवप्रतिपादनात् ईश्वरसृष्टत्वम्। यच्चोक्तं वासनायाः अर्थाकारेण परिणामो बाधितः ईश्वरसृष्टत्वे तत्तत्पुरुषमात्रानुभाव्यत्वविरोधश्च इति तदयुक्तम्। वासनायाः द्रव्यरूपायाः सावयवायाः परिणामित्वाङ्गीकारे बाधकाभावात्। एवं स्वाप्नानाम् ईश्वरसृष्टत्वेऽपि तत्तत्पुरुषीयवासनापरिणामत्वेन तत्तत्पुरुषमात्रानुभाव्यत्वस्याऽपि सम्भवेनाविरोधात्। वेशान्तादीन् सृजते वासनामात्ररूपान् इति बृ. शा. भाष्ये वासनापरिणामरूपत्वम् अङ्गीकृतं शङ्कराचार्यैः।

**इति स्वाप्नपदार्थानां सत्यत्वेश्वरसृष्टत्वसमर्थनम्।**

**अद्वैतमते जीवन्मुक्त्यनुपपत्तिः।**

अद्वैतमते अज्ञानस्यानादित्वेन अज्ञानस्य तत्वज्ञानेन नाशेऽपि तल्लेशोऽनुवर्तते इति कथनमयुक्तम्। ननु लेशो नाम नाऽवयवः किन्तु आकारमात्रम्। आकारिनिवृत्तावप्याकारस्यानुवृत्तिः व्यक्तिनिवृत्तावपि जातेरिव युक्तेति चेन्न व्यक्त्यतिरिक्तजातिवादे व्यक्तिनिवृत्तावपि जात्यनुवृत्तिसम्भवेऽपि आकाराकारिणोरभेदवादे आकारिनिवृत्तावाकारस्याऽनुवृत्त्ययोगात्।

अपि च " तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः। अविद्यासहकार्येण नासीदस्ति भविष्यति" इति त्वदाचार्यवचनेन तत्त्वज्ञानोत्पत्तिमात्रेणैव सविलासाया अविद्याया अभावकथनात् तत्त्वज्ञानानन्तरमपि अविद्यायास्तदाकारस्य तच्छक्ते-

स्तल्लेशस्य तत्कार्यस्य कस्याप्यनुवृत्त्ययोगेन जीवन्मुक्त्यनुपपत्तिरपरिहार्यैव। एतेन "बाधितानुवृत्त्या विक्षेपशक्तिमात्रेणाज्ञानस्यैवानुवृत्त्या जीवन्मुक्त्युपपत्ति" रिति निरस्तम्। बाधितस्यानुवृत्तिवार्तायाः व्याहतत्वात्। तथात्वे अनिर्मोक्षप्रसङ्गात् तत्त्वसाक्षात्कारेण अज्ञानस्येव तच्छक्तीनामपि नाशेन विक्षेपशक्तिमात्रेणाज्ञानानुवृत्तिकथनस्यानौचित्यात्।

## इति अद्वैतमते जीवन्मुक्त्यनुपपत्तिसमर्थनम्।

एतावता प्रबन्धेन द्वैतमतप्रक्रियाविरुद्धत्वेन अ. सुधोत्प्रेक्षिता अद्वैतमतप्रक्रियाः निराकृताः। द्वैतमतप्रक्रियाश्च अ. सुधया यथावदनूदिताः समर्थिताः। याश्चासुधयाऽन्यथानूदितास्ताअपि अन्यथाऽनुवाददूषणपूर्वकं यथावदुपदर्शनपूर्वकं समर्थिताः। मन्यामहे चैतावतैवाद्वैततत्त्वसुधा परितुष्टा स्यादिति। अथेतः परं जिज्ञासुजनमनस्तोषणार्थं श्रीमत्सत्यध्यानतीर्थगुरुपादोपदर्शितदिशा श्रुतिगीतासूत्राणां जीवेश्वरभेदपरत्वमेव नाभेदपरत्वमिति समर्थयामः। तत्र तत्र अ. सुधायाः तदुपदर्शितदूषणैरेव दूषितत्वं च प्रदर्शयामः।

## वैदिकमततत्त्वविचारः।

**'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति'** इत्येषा जीवब्रह्मभेदबोधिका श्रुतिः। तदर्थस्तु आत्मानं = परमात्मानं पृथक् = जीवजडात्मकप्रपञ्चभिन्नं च = तथा प्रेरितारं = जगतः प्रेरकं (नियामकं) मत्वा जुष्टः = परमात्मकर्तृकप्रीतिविषयः (तत्प्रसादयुक्तः) सन् ततः—अनन्तरं तेन = प्रसन्नेन परमात्मना अथवा परमात्मप्रसादेन अमृतत्वं = मोक्षं एति = प्राप्नोति इति। तथा च अनया श्रुत्या जीवजडात्मकप्रपञ्चभिन्नत्वेन प्रपञ्चप्रेरकत्वेन च परमात्मज्ञानस्य मोक्षहेतुत्वोक्त्या जीवब्रह्मणोर्भेदः ब्रह्मणः प्रेरकत्वाद्युक्त्या गुणवत्त्वं च सिध्यतीति ब्रह्मणो जीवैक्यं निर्गुणत्वं च निराकृतं भवति।

यत्तु (ब्रह्मानन्दीकृतः) प्रेरकत्वेन पृथक्त्वेन च मत्वा मुच्यत इति नोक्तश्रुत्यर्थः, किन्तु तत्त्वमतेः पूर्वं प्रेरकत्वेन पृथक्त्वेन च उपलभ्यमानमखण्डात्मरूपं मत्वा मुच्यत इत्यर्थ इति भावेनाह—मतेरित्यादि। (अद्वैतसिद्धिः) 'मतेः पूर्वं ममाऽपि प्रेरकपृथक्त्वदृष्टेः'। (ब्रह्मानन्दी) प्रेरकत्वादिरूपेण मत्वेत्यर्थकत्वेऽपि न क्षतिरित्याशयेनाह सगुणेति।

अद्वैतासिद्धिः—सगुणब्रह्मज्ञानवत्-प्रेरकत्वेन ब्रह्मज्ञानस्यापि परम्परयोपकारकत्वात् ।

ब्रह्मा:—गुणान्तरयुक्तेरर्थः ।

इत्यद्वैतसिद्धिब्रह्मानन्दीग्रन्थयोः 'पृथगात्मानं प्रेरितारं च मत्वा' इति श्रुतेः ब्रह्मणो जीवभिन्नत्वेन जीवप्रेरकत्वेन च ज्ञान मोक्षसाधनमित्यर्थ इति स्पष्टं ज्ञात्वाऽपि अद्वैतदुराग्रहगृहीतत्वेन तं पृथक्, प्रेरितारम् इति पदयोः पूर्वं तत्त्वमतेः पूर्वमिति उत्तर च उपलभ्यमानमिति च पदसयोजनेन पृथक् इत्यस्य तत्त्वमतेः पूर्वं पृथक्त्वेन उपलभ्यमानमिति प्रेरितारमिति पदस्य तत्वमतेः पूर्वं प्रेरकत्वेन उपलभ्यमानमिति चार्थकरण 'न सुरा पिबेत्' 'न परदारान् गच्छेत्' इत्यादिश्रुतीना बाल्येऽसामर्थ्ये चेति पदसयोजनेन बाल्ये सुरापानं निषिद्ध बाल्येऽसामर्थ्ये च परदारगमन प्रतिषिद्धमित्यर्थकरणमिव तिरस्करणीयमेव ।

**यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।**
**यच्चास्य सन्ततो भावस्तस्मादात्मेति भण्यते ॥**

इति शङ्कराचार्योदाहृतमहाभारतवचनानुसारेण आप्त्यादिगुणविशिष्टार्थकात्मशब्दस्य अखण्डार्थरूपमिति चार्थकरणं प्रज्ञाप्रकर्षशालिनि निरूढवृत्तेः प्राज्ञशब्दस्य अज्ञ इत्यर्थकरणवन्नितान्तमपहसनीयमेव ।

'एकधैवानु द्रष्टव्यम्' इत्यादिवाक्यस्वारस्यादभेदज्ञानस्यैव साक्षान्मोक्षहेतुत्वात् । अत एव प्रेरकत्वज्ञानस्य जोपहेतुत्वमुक्तामि' ति यदुक्तमद्वैतसिद्धौ तथा केवलार्थकेनैकपदेन शुद्धब्रह्मण उक्तत्वात् तत्स्वरूपविषयप्रकारो धाप्रत्ययेनोच्यते । तथा च शुद्धब्रह्मविषयकज्ञानमेव मोक्षहेतुः न प्रेरकत्वादिविशिष्टस्य ज्ञानमित्यर्थ इति । अत एव प्रेरकत्वज्ञानस्य साक्षान्मोक्षाहेतुत्वादेव । जोपेति । ब्रह्मलोकावच्छिन्नप्रीतिविशेषेत्यर्थः । तथा च प्रीतः सन् ततः तादृशप्रीतिसमाप्तौ तेन मननेन तत्त्वसाक्षात्कारद्वारा मुच्यत' इत्यर्थः इति च तद्व्याख्यानभूतब्रह्मानन्द्यां यदभिहितं तद्दुराग्रहग्रहावेशविलसितम् । तथाहि—

**एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम् ।**
**विरजः पर आकाशादज आत्मा महान् ध्रुवः ॥ बृ. ४।५।२०**

इति श्रुतावभेदबोधकपदाभावेन, अभेदज्ञानेन मोक्षो भवतीत्यर्थकपदानामभावेन कथं ज्ञातं लोकोत्तरप्रज्ञाशालिनाऽद्वैतसिद्धिकृता अभेदज्ञानस्य मोक्षहेतुत्वबोधने स्वारस्यमस्य वाक्यस्येति प्रज्ञावन्त एव जानन्तु ।

किंच "ज्ञानं च तस्मिन् परात्मभावनिवृत्तिरेव . . . . . . . . .
अन्यात्मभावनिवृत्तावात्मभावः स्वात्मनि स्वाभाविकः यः स केवलो भवतीत्यात्मा ज्ञायत इत्युच्यते" (बृ. शा. भा. ४।४।२०) इति शाङ्करभाष्येणे शुद्धब्रह्मणोऽज्ञेयत्वस्य कथितत्वेन तद्धाप्यविरुद्धा हि 'केवलार्थकेनैकपदेन शुद्धब्रह्मण उक्तत्वादि'ति ब्रह्मणः ब्रह्मानंदीयज्ञेयत्वोक्तिः।

अपि च शुद्धब्रह्मविषयकज्ञानस्यैवाद्वैतमतरीत्याऽसम्भवेन मोक्षहेतुत्वबोधकपदाभावेन च शुद्धब्रह्मविषकज्ञानं मोक्षहेतुः न प्रेरकत्वादिविशिष्टस्य ज्ञानमित्यर्थ इति ब्रह्मानन्दीयश्रुत्यर्थवर्णनं स्वमतापरिज्ञानासम्भवनीयपरमतनिरासदुराग्रहोभयमूलकमेवेत्युपेक्षणीयम्।

'जुष् प्रीतिसेवनयोः—' इति धातुपाठात् जुष् धातोः प्रीतिमात्रार्थकत्वेऽपि 'जोषेति ब्रह्मलोकावच्छिन्नप्रीतिविशेषेत्यर्थ' इति ब्रह्मलोकावच्छिन्नेति प्रीतौ विशेषणदाने किं ज्ञापकं दृष्टवन्तो ब्रह्मानन्दीकारास्तदेवो वा देवानां प्रियो वा जानातु। 'तथा च मत्वा प्रीतः सन् ततः प्रीतिसमाप्तौ तेन मननेन तत्त्वसाक्षात्कारद्वारा मुच्यत इत्यर्थ' इति यदुक्तं ब्रह्मनन्दीकृता तदयुक्तम्। एतदर्थबोधकानां पदानां श्रुतावभावात्।

'जुष्टस्ततस्तेनामृतत्वमेति' इति तेन प्रसादेन प्रसन्नपरमात्मना वा अमृतत्वं = मोक्षं प्राप्नोति इति प्रसादस्य साक्षान्मोक्षहेतुत्वे श्रुतेऽपि 'तेन = मननेन तत्त्वसाक्षात्कारद्वारा' इत्यर्थकथनं स्वमताग्रहमात्रनिबन्धनम्। किं च मननेन तत्त्वसाक्षात्कारद्वारा मुच्यत इत्यर्थकत्वे प्रसादस्य मोक्षं प्रति कारणत्वाभावाभिप्राये च मत्वा मुच्यत इत्येतावन्मात्रेण निर्वाहे 'जुष्टस्ततस्तेन' इत्येतेषां पदानां वैयर्थ्यम्। प्रीतेः तद्वाक्यार्थेऽनुपयोगात्, तत इति पदेन अनुपयुक्तप्रीतिसमाप्तिकथनस्यात्यन्तानुपयुक्तत्वाच्च।

तथा च अद्वैतिनः कामं जल्पन्तु। परं 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' (श्वेता १।६) इति श्रुतौ परमात्मा जीवजडात्मकात्प्रपञ्चाद्भिन्नः सर्वप्रेरकश्चेति ज्ञानस्य तत्प्रसादद्वारा मोक्षहेतुत्वं श्रुतिघटकशब्दसामर्थ्येन प्रतिपाद्यत इत्यस्मिन्विषये न सन्देहलेशोऽपि। अत इयं श्रुतिः प्रेरकत्वादिगुणविशिष्टस्य परमात्मनः प्रसादद्वारा मोक्षहेतुत्वोक्त्या ब्रह्मणः सगुणत्वं

( प्रेरकत्वादिगुणयुक्तत्व ) प्रपञ्चभिन्नत्व, प्रसादद्वारा मोक्षहेतुत्वेनास्या बन्धस्य सत्यत्वं ( अज्ञानकल्पितत्वाभाव ) च प्रतिपादयन्ती ब्रह्मणो निर्गुणत्व जीवब्रह्मणोरभेदं जगतो मिथ्यात्व ( अज्ञानकल्पितत्व ) च निराकुर्वती दूषयत्यद्वैतमतमिति सिद्धम् ।

## श्रुत्यर्थविचारः

" स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति " ( मुण्ड ३–२–९ ) इति वाक्येन ब्रह्मज्ञानिनो ब्रह्मभावप्राप्तिकथनात् जीवब्रह्मणोरैक्यसिद्धिरिति न च वाच्यम् । अस्या श्रुतौ ब्रह्मभावप्राप्तेरकथनात् 'ब्रह्म भवति ' इति ब्रह्मप्राप्तेरेव श्रवणात् ब्रह्म भवति इत्यस्य ब्रह्म प्राप्नोतीत्येवार्थः न तु ब्रह्मभाव (ब्रह्मत्वं ) प्राप्नोतीत्यर्थः । ब्रह्मपदोत्तर भावार्थकप्रत्ययाभावात् प्राप्यप्राप्तृभावस्य ( गन्तृगन्तव्यत्वस्य ) च भेदव्याप्तत्वादनया श्रुत्या भेदस्यैव सिद्धेः ।

न च परब्रह्मप्राप्तेः ' परात्परं पुरुषमुपैति दिव्यम्. ( मु. ३।२।८ ) इति पूर्ववाक्येनैवोक्तत्वात् उत्तरेण ब्रह्म वेद ब्रह्मैव भवति ' इति वाक्येनाप्युक्तौ पुनरुक्ततापत्त्या न ब्रह्मप्राप्तिरस्य वाक्यस्यार्थः । किन्तु ब्रह्मपदस्य ब्रह्मत्वरूपार्थे लक्षणया ब्रह्मत्वप्राप्त्याश्रय इत्यर्थ एवोचित इति वाच्यम् । दार्ढ्यार्थत्वेन पुनरुक्तिदोषाभावात्, तथाहि ब्रह्मज्ञानिनो ब्रह्मप्राप्तिर्भवत्येव । न तु क्लेशानामन्यतमेन देवादिना च विघ्नितो ब्रह्मविदपि अन्यां गतिं गच्छति न ब्रह्मैवेति शङ्कानिवारणार्थ ब्रह्मविदः ब्रह्मप्राप्तिर्भवत्येवेति ' परात्पर पुरुषमुपैति दिव्यम् ' इति पूर्ववाक्योक्तफलं नियमेन भवत्येवेति दार्ढ्यार्थत्वात् न पौनरुक्त्यदोषः ।

शङ्कराचार्यैरप्येवमेव व्याख्यातम् ।

किंच ब्रह्मज्ञानिनो ब्रह्मभावो भवति ( ज्ञानी ब्रह्मैव भवति ) इत्यद्वैतिनां मते ' नास्याब्रह्मवित्कुले भवति तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ' इत्युत्तरवाक्ये अस्य ज्ञानिनः कुले अब्रह्मवित् न भवतीति ज्ञानिकुलादीना कथनमयुक्तमेवेति नेदं वाक्यं जीवस्य ब्रह्मत्वप्राप्तिकथनद्वारा ब्रह्माभेदबोधकं किंतु शंकराचार्योक्तदिशा ब्रह्मप्राप्तिद्वारा प्राप्यप्राप्तृभावेन भेदबोधकमेवेति । अथवा परमं ब्रह्म वेद ब्रह्मैव भवति इति वाक्ये ज्ञेयस्य ब्रह्मणः परमत्वविशेषणेन परब्रह्मज्ञानी ब्रह्मैव भवति पूर्ण एव भवति न तु परब्रह्म भवति इति परब्रह्मज्ञानिनः परब्रह्माभेदनिषेधकं वाक्यमिदमिति दिक् ।

## भगवद्गीताऽपि न जीवब्रह्मणोरैक्यबोधिका।

श्रीभगवद्गीताया न तादृश एकोऽपि श्लोक उपलभ्यते यः किल जीवब्रह्मणोरभेद प्रतिपादयेत्। परमनेके श्लोकाः किं बहुना सर्वेऽपि भेदमेवाघोषयन्ति स्पष्टमिति सामान्यतो गीतार्थं परिशीलयताऽपि ज्ञायते। न केवलं द्वैतिन एवैवमभिप्रयन्ति किन्त्वद्वैतमतस्थापकत्वेनाभिमताः शङ्कराचार्या अपि 'स्मृतेश्च इति सूत्रव्याख्यावसरे 'स्मृतिश्च शारीर (जीव) परमात्मनोर्भेदं दर्शयति— "ईश्वरः सर्वभूताना हृद्देशेऽर्जुन तिष्ठति। भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया" इत्याद्या' इति वाक्येन ईश्वरः सर्वभूतानामित्याद्यनेकश्लोकाना भेदपरत्व निर्विवादमङ्गीकुर्वन्ति।

ननु 'क्षेत्रज्ञ चापि मां विद्धि सर्वक्षेत्रेषु भारत' (गी. १३। २) इति श्लोके क्षेत्रज्ञ = जीवं मा = कृष्णं विद्धि इति परब्रह्मभूतस्य कृष्णस्य जीवाभेदोक्तेर्जीवब्रह्मणोरैक्यस्य गीताऽसम्मतत्ववचनमयुक्तमिति चेन्न। क्षेत्रज्ञं चाऽपि मा विद्धि इति श्लोके जीवाभेदानुक्तेः। तथाहि — गीताया

**'इद शरीर कौन्तेय क्षेत्रमित्यभिधीयते।**
**एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः'**

इत्येतच्छ्लोकेन इद प्रमाणासिद्ध शरीरं क्षेत्रशब्दवाच्य शरीररूपक्षेत्रवेदिन च क्षेत्रज्ञ प्राहुर्विद्वांसः, इति क्षेत्रज्ञपदं व्याख्याय 'क्षेत्रज्ञ च मा विद्धि इति श्लोकेन तं क्षेत्रज्ञ मां (कृष्णं) विद्धि इत्युक्तत्वेन पूर्वश्लोकोक्तः क्षेत्रज्ञो यदि जीवः स्यात् तर्हि तेन क्षेत्रज्ञशब्दवाच्येन जीवेन कृष्णाभेदः प्रतीयेत। नहि पूर्वश्लोकोक्तः क्षेत्रज्ञो जीवो भवितुमर्हति।

**'तत्क्षेत्र यच्च यादृक्च यद्विकारि यतश्च यत्।**
**स च यो यत्प्रभावश्च तत्समासेन मे शृणु॥ ३॥**
**महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च।**
**इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः॥ ५॥**
**इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः।**
**एतत्क्षेत्र समासेन सविकारमुदाहृतम्'॥ ६॥**

इत्यादिश्लोकैः तत्-क्षेत्रं इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते इति श्लोकोक्तं क्षेत्रं क्षेत्रज्ञं च सङ्क्षेपेण वक्ष्यामि शृणु इति प्रतिज्ञाय महाभूतान्यहङ्कार-

इत्यादिश्लोकद्वयेन पृथिव्यप्तेजोवाय्वाकाशरूपाणि पञ्च महाभूतानि, अहङ्कारः बुद्धिः, अव्यक्त, घ्राणचक्षुश्श्रोत्रत्वग्जिह्वारूपाणि पञ्च ज्ञानजनकानि इन्द्रियाणि, वाक्पाणिपादपायूपस्थरूपाणि पञ्च कर्मेन्द्रियाणि, आहत्य दशेन्द्रियाणि मनः, रूपरसगन्धस्पर्शशब्दरूपाः पञ्चेन्द्रियविषया इच्छाद्वेषसुखदुःखादिविकाराश्च शरीररूपक्षेत्रपदेन बोध्यन्ते इत्युक्तत्वेन महाभूतादिसकलजगद्रूपक्षेत्रस्य ज्ञानं अल्पज्ञस्य अत एव स्वदेहगतेन्द्रियाद्यज्ञानेन वैद्यगृहं धावतो जीवस्य अत्यन्तासम्भवीति जीवो न क्षेत्रज्ञो भवितुमर्हति । किन्तु सर्वज्ञो भगवान् परं ब्रह्मैव महाभूतादिसकलजगद्रूपक्षेत्रज्ञो भवतीति क्षेत्रज्ञ पर ब्रह्म मा श्रीकृष्णं विद्धीति परब्रह्मकृष्णयोरेवाभेदः क्षेत्रज्ञ चापि मा विद्धि इत्यनेन कथ्यते नतु जीवात् कृष्णस्याभेदः ।

' पर ब्रह्म परं धाम पवित्र परमं भवान् ।
पुरुष शाश्वत दिव्यमादिदेवमज विभुम् ॥ १२ ॥
आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वय चैव ब्रवीषि मे ' ॥ १० । १३

इत्यादिश्लोकेषु श्रीकृष्णस्य परब्रह्मत्वं नारदाद्यर्षिभिः स्वयं कृष्णेन चोक्तमिति क्षेत्रज्ञं चापि मा विद्धीति श्लोके क्षेत्रज्ञभूतपरब्रह्मण एव कृष्णाभेद उच्यते न तु जीवस्य । क्षेत्रज्ञशब्दस्य जीवपरत्वाभावात् ।

किंच केवलं पूर्वश्लोकोक्तरीत्या शरीररूपक्षेत्रस्य सर्वजगद्रूपत्वेन जीवः क्षेत्रज्ञो न भवतीत्येव न किंतु गीतोक्तक्षेत्रज्ञशब्दार्थपर्यालोचनयाऽपि न क्षेत्रज्ञो जीवो भवितुमर्हति । तथाहि

'क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ' (गी. १३।२) इति श्लोके क्षेत्रक्षेत्रज्ञविषयकं ज्ञानं यत् तत् ज्ञानं सम्यग्ज्ञानमिति ममेश्वरस्य विष्णोर्मतमित्यभिधाय ' महाभूतान्यहङ्कार ' इत्यादिश्लोकद्वयेन क्षेत्रपदार्थं निरूप्य

' ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादिमत्पर ब्रह्म... .. ... ' ॥ इति

श्लोकेन क्षेत्रज्ञस्य परब्रह्मत्व वर्णित साक्षाच्छ्रीकृष्णेनेति क्षेत्रज्ञो न परब्रह्मणोऽन्यो जीवो भवितुमर्हति । उक्तं च शङ्कराचार्यैरपि स्वकृतगीताभाष्ये

'क्षेत्रज्ञो वक्ष्यमाणविशेषणः यस्य सप्रभावस्य क्षेत्रज्ञस्य परिज्ञानादमृतत्वं भवति तं "ज्ञेय यत्तत्प्रवक्ष्यामी' त्यादिना सविशेषणं स्वयमेव वक्ष्यति भगवान्' (श्रीकृष्णः) इत्यतः क्षेत्रज्ञः परब्रह्मैवेति श्रीकृष्णेन कथ्यत इति क्षेत्रज्ञ-शब्दार्थः परं ब्रह्मैवेति। एव श्रीकृष्णशङ्करयोः सम्मतत्वेन वस्तुतो जीवस्य श्रीकृष्णोक्तशरीररूपक्षेत्रशब्दार्थजगद्विषयकज्ञानासम्भवेन श्रीकृष्णशङ्कराभ्या क्षेत्रज्ञः परं ब्रह्मैवेत्युक्तत्वेन 'क्षेत्रज्ञ चापि मां विद्धि' इति गीताश्लोको न जीवब्रह्मणो-रभेदबोधकः प्रत्युत मा विद्धि इति ज्ञातृज्ञेयभावबोधनद्वारा भेदबोधक एव।

**'ईश्वरः सर्वभूतानां' उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' 'अतोऽस्मि लोके वेदे च प्रथित पुरुषोत्तमः'** इत्याद्यनेकैर्गीतावाक्यैर्जीव-ब्रह्मणोर्भेदस्यैव कथितत्वेन 'ईश्वरोऽह' मिति ईश्वराभेददर्शिन आसुरत्वमुक्त्वां **'आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।**

**मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्"** इति ईश्वराभेद-दर्शिनाम् असुरत्वतमः प्राप्तिमत्त्वेन निन्दितत्वाच्च 'क्षेत्रज्ञ चापि मा विद्धि' इति गीतावाक्य नैवाभेदपरम्।

**इति गीताशास्त्र नाद्वैतमतानुकूलम्।**

**॥ समाप्तः प्रथमो भागः ॥**

श्रीः

# अथ द्वितीयो भागः ।

## भेदपराण्येव खलु ब्रह्मसूत्राणि ।

वेदार्थनिर्णायकानि ब्रह्मसूत्राण्यपि जीवब्रह्मणोर्भेदप्रतिपादकान्येव न त्वैक्यप्रतिपादकानि । शङ्कराचार्यप्रभृतिभिरद्वैतिभिरेव तन्मतरीत्या पञ्चपञ्चाशदधिकपञ्चशतसूत्रेषु 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' (ब्र. सू. १।१।३०) 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' (ब्र. ४।१।३) 'अविभागेन दृष्टत्वात्' (ब्र. ४।४।४) इति, सूत्रत्रयमिदमभेदप्रतिपादकमित्युक्तत्वेन त्रिसूत्रीं विहाय द्विपञ्चाशदधिकपञ्चशत (५५२) सूत्राणि भेदप्रतिपादकानीत्यङ्गीकृतत्वेन विगतबहुलभारा वयमिदानीं त्रिसूत्र्या अपि अभेदप्रातिपादकत्वं न सम्भवति प्रत्युत भेदपरत्वमेव साधु सङ्घटीतीति प्रथममुपपाद्य तदनु ५५२ सूत्राणा भेदपरत्वमद्वैतिभिः कथमङ्गीकृतामित्येतमापि प्रकार निरूपयिष्यामः । तावदिदानी तद्वाक्यान्युदाह्रियन्ते । आनन्दगिरिटीकायां 'जीवब्रह्मणोरैक्यं न क्वापि सूत्रकारो मुखतो वदति, किंतु सर्वत्र भेदमेवातो नैक्यमिष्टं तत्राह । 'प्रतिपाद्यं' त्विति ।

शा. भाष्ये 'प्रतिपाद्य तु शास्त्रार्थमात्मैकत्वमेव दर्शयाति शास्त्रदृष्ट्या तूपदेशो वामदेववत् इत्यादिना' इति (शा. भा. १।३।१९)

रत्नप्रभाया 'सूत्रेषु अभेदो नोक्त इति भ्रान्तिं निवारयति प्रतिपाद्यं त्विति'।

(आ. गि) 'आदिपदं आत्मेति तूपगच्छन्तीत्यादिसङ्ग्रहार्थम्'
(र. प्र) 'आत्मेति तूपगच्छन्तीत्यादिसूत्राण्यादिपदार्थः'

इत्यानन्दगिरिरत्नप्रभाख्यव्याख्यासहितशाङ्करभाष्येण पञ्चपञ्चाशदधिकपञ्चशतसूत्रेषु द्वित्रसूत्राणामेवाभेदपरत्वमितरेषां च भेदपरत्वमुपवर्णितम् ।

प्रकृते शास्त्रदृष्ट्या तूपदेशो वामदेववत् इति सूत्रस्य भेदपरत्वम् अभेदपरत्वाभावं च दर्शयिष्यामः ।

ॐ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॐ

इति सूत्रं न जीवब्रह्मणोरभेदबोधकम् अस्मिन् सूत्रे जीवब्रह्मणोरैक्यबोधकपदाभावात् । तथाहि सूत्रस्य प्रतीयमानोऽर्थः यथा वामदेवस्य उपदेशः शास्त्रदृष्ट्या तथा प्रकृतोऽप्युपदेशः शास्त्रदृष्ट्या इति । न ह्यनेन जीवब्रह्मणोरभेदः सिध्यति । न च शास्त्रदृष्ट्या तूपदेशो वामदेववत् इति सूत्रस्य यथा वामदेवः अहं मनुरभवं सूर्यश्चाहं कक्षीवान् इति आत्मनः सर्वाभेददृष्ट्या ब्रह्माभेददृष्ट्या वा मनुत्वसूर्यत्वादिकम् आत्मन उक्तवान् तथा अयमिन्द्रोऽपि अहमेव परं ब्रह्म इति शास्त्रानुसारिज्ञानेन मामेव विजानीहि इति प्राणशब्दबोध्यं परं ब्रह्म मामेव मदभिन्नत्वेन जानीहि इत्युपदेशं कृतवान् इत्यर्थ इति शङ्कराचार्यैरुक्तत्वेन जीवब्रह्मणोरैक्यं सिध्यतीति वाच्यम् । एतावदर्थबोधकपदाभावात् । अस्यार्थस्य प्रमाणबाधितत्वाच्च । अहमेव परं ब्रह्मेति वेदे सूत्रे गीतायां च कुत्राप्यनुक्तत्वेन अहमेव परब्रह्म इति दृष्टेः शास्त्रानुसारित्वाभावेन शास्त्रदृष्ट्या इति पदस्य तथा अर्थकरणानुपपत्तेः शास्त्रदृष्ट्येति पदेन तादृशार्थस्य प्रतीयमानत्वाभावाच्च । य आत्मनि तिष्ठन्.... . यः आत्मानमन्तरो यमयति ' 'यः सर्वभूतेषु तिष्ठन् .....यः सर्वाणि भूतानि अंतरो यमयति, ' इत्याद्यनेकैर्वाक्यैः परमात्मनः इंद्रादिसर्वनियामकत्वस्योक्तत्वेन शास्त्रदृष्ट्येत्यस्य शास्त्रानुसार्यन्तर्यामिदृष्ट्य अथवा शास्त्रजन्यांतर्यामिदृष्ट्येत्यर्थसंभवेन यथा वामदेवः अंतर्यामिपरमात्मनः दृष्ट्या अहं मनुरभवं सूर्यश्चेति उक्तवान् तथा इंद्रः मा मदंतर्यामिणं परमात्मानं विजानीहि इत्यभिप्रायेण मामेव विजानीहि इत्युक्तवान् इत्यर्थस्य युक्तत्वात् । किंच अहं मनुरभवं सूर्यश्चेति ( ऋ. १५-१ ) मन्त्रद्रष्टुः वामदेवस्य आत्मनः ( स्वस्य ) सार्वात्म्य--ज्ञानं वा परमात्माभेदज्ञानं वा नासीदेव । तथाहि तेनैव

" गर्भे नु सन्नन्वेषामवेदमहं देवाना जनिमानि विश्वा ।
शतं मापुर आयसीररक्षन्नधश्येनो जवसानिरदीयम् ॥

( ऋ-४-३-६ ) ( पदविभागः ) गर्भे नु सन् एषां अवेद अहं देवानां जनिमानि विश्वा शतं मा पुरः आयसीः अरक्षत अधश्येनः जवसानिः अदीयम् ।

गर्भे नु गर्भ एव सन् विद्यमानोऽहं वामदेवः एषामिंद्रादीनां देवानां विश्वा विश्वानि सर्वाणि जनिमानि जन्मानि अन्ववेद आनुपूर्व्येणाज्ञासिषं परमात्मनः सकाशात् सर्वे देवा जाता इत्यवेदिषमित्यर्थः.... ......१

न घासमामपजोप जभाराभीमासत्वक्षसा वीर्येण ।
ईर्मापुरंधिरजहादरातीरुतवाता अतरच्छूशुवानः ॥ २ ॥

( पदविभागः ) न घ सः मां अप जोष जभार अभि ईम् आस त्वक्षसा वीर्येण ईर्मा पुरंधिः अजहात् अरातीः उत वातान् अतरत् शुशुवानः ।

स गर्भः मा वामदेवं जोषं पर्याप्तं नघ नैवापजभार अपजहार गर्भेऽपि वसतो मे मोहो माभूदित्यर्थः । अहं तु ईम् इदं गर्भस्थं दुःखं त्वक्षसा तीक्ष्णेन वीर्येण ज्ञानसामर्थ्येन अभ्यास अभ्यामवं ईर्मा सर्वस्य प्रेरकः पुरंधिः पुरां धारकः परमात्मा अरातीः गर्भसंस्थितान् शत्रूनजहात् अत्यजत् जघान उतापि च शूशुवानः वर्धमानः परिपूर्णः परमात्मा वा तान् गर्भक्लेशकरान् वायून् अतारीत् ॥ २ ॥

इत्युत्तरमन्त्राभ्यां सर्वे देवाः परमात्मनः जाताः सर्वस्य प्रेरकः परमात्मा अरातीः गर्भसंस्थिनात् शत्रूनजहत् । परिपूर्णः परमात्मा वातान् गर्भक्लेशकरान् वायूनतरत् इति परमात्मना स्वस्य देवाना च भेदः ज्ञातः परमात्मन. अन्तर्यामित्वं च ज्ञातं वामदेवेन इति स्पष्टमुक्तत्वेन विद्यारण्यभाष्येऽपि एवमेव व्याख्यातत्वेन च वामदेवस्य अहमेव परब्रह्म इति ज्ञानं नासीत् इति सिद्धया वामदेववदिति सूत्रगतपदस्य यथा वामदेवः अभेददृष्ट्या अहं मनुः अह सूर्यः अह कक्षीवान् इति उक्तवान् तथा इन्द्रोऽपीत्युक्तिरसङ्गतैव ।

अद्वैतमतरीत्यापि विशिष्टयोरैक्यायोगात् विशिष्टस्य वामदेवस्य विशिष्टैः मन्वादिभिः ऐक्यासम्भवेन अह मनुः अह सूर्य इत्यादिज्ञानस्य भ्रमत्वापत्तेः । न हि ज्ञानिनः भ्रमः सम्भवार्हः ।

न च अहमन्वादिपदाना चिन्मात्रे लक्षणामंगीकृत्य चित् चित् अभव इति वा चित् इति अखडबोधो वाऽभिप्रेतस्तस्य वाक्यस्येति वाच्यम् । तत्त्वमस्यादिवाक्यविचारोक्तरीत्या लक्षणाद्यसंभवाद्यनेकदोषदुष्टत्वेन तादृशबोधस्य स्वीकर्तुमशक्यत्वात् । मुख्यार्थस्य बाधे अन्यार्थस्य इतरप्रमाणानुकूलस्य इतरप्रमाणाबाधितस्यैव च स्वीकार्यत्वेन अभेदप्रतिपादकप्रमाणानामभावेन भेदबोधकाना प्रमाणाना सत्त्वेन तदनुकूलतया तदविरुद्धतया च ‘ अहं ’ मदन्तर्यामी मन्वन्तर्यामी इत्याद्यनेकार्थानां सम्भवेन त्वदभिमतार्थस्य स्वीकारायोगाच्च ।

किंच अद्वैतिमते सर्वस्य प्रपञ्चस्य ब्रह्मज्ञानकल्पितत्वात् अहमेव परं ब्रह्मेति ज्ञाने जाते ब्रह्माज्ञाननिवृत्त्या सर्वस्यापि प्रपंचस्य निवृत्त्या 'अहं भूमिमददामार्याय अहं वृष्टिं दाशुषे मर्त्याय अहमपो अनयं वावशानामम देवासो अनुकेतमायन्' इत्यादिभिरुत्तरैर्मन्त्रैः उक्तानि आर्याय मनवे भूमिदानं यज्ञकर्त्रे यजमानाय वृष्टिदानं उदकानां सर्वदेशं प्रति प्रापणं शम्बरपुरनाशनं इत्यादिकर्माणि कथं घटेरन्। अतः अद्वैतमतरीत्यापि वामदेवस्य ब्रह्मात्मैक्यज्ञानं नासीदित्येव वक्तव्यं। तथा च 'वामदेवः यथा सार्वात्म्यदृष्ट्या (ब्रह्माभेददृष्ट्या) अहं मनुरभवमित्याद्युक्तवान् तथा इन्द्रोपीति अद्वैतिना कथनमयुक्तमेव। एवं इन्द्रस्यापि यदि अहमेव परं ब्रह्म इति ज्ञानं तदा ब्रह्मज्ञानकल्पितस्य ब्रह्मातिरिक्तस्य सर्वस्यापि निवृत्त्यापत्त्या मामेव विजानीहि इत्याद्युक्तिरयुक्तैव स्यादिति नेन्द्रस्यापि अद्वैतमतरीत्या अहमेव ब्रह्मेति ज्ञानमासीत् इति वक्तुं शक्यमिति नेदं सूत्रं जीवब्रह्मणोरैक्यबोधकम्। किञ्चैतदधिकरणीयपूर्वोत्तरसूत्रपर्यालोचनयापि जीवब्रह्मणोरभेदः नैतत्सूत्रार्थतया वक्तुं शक्यः। तथाहि 'प्राणस्तथानुगमात्' 'न वक्तुरात्मोपदेशादिति चेदध्यात्मसबंधभूमा ह्यस्मिन्' (ब्र. १।१।२) 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' इति चतुःसूत्रात्मकमिदमधिकरणम्। तत्र प्राणस्तथानुगमादिति प्रथमसूत्रे।

शंकरानन्दकृतवैय्यासकन्यायमालायां

**'प्राणोऽस्मीत्यत्र वाग्विद्रजीवब्रह्मसु संशयः।**
**चतुर्णां लिंगसद्भावात्पूर्वपक्षस्त्वनिर्णयः॥१॥**

**ब्रह्मणोऽनेकलिंगानि तानि सिद्धान्यनन्यथा।**
**अन्येषामन्यथासिद्धेर्व्युत्पाद्यं ब्रह्म नेतरत्॥२॥**

इति अधिकारणार्थसङ्ग्राहकाभ्यां अद्वैतिभी रचिताभ्यां श्लोकाभ्यां मुख्यप्राणजीवदेवताब्रह्मणामनेकेषां लिगानि बहूनि संप्लवंते तत्कतमदत्र लिंगं लिंगाभासं च कतमदित्यत्र विचार्यते इत्यादिभामतीवाक्येन 'च स होवाच प्राणोस्मि प्रज्ञात्मा' (कौ. ३-१-२-३) इत्यादिवाक्यानि विचार्यत्वेनात्र उपक्षिप्य वाग्विद्रजीवब्रह्मणां लिगानां विद्यमानत्वेनायमेवात्र प्रतिपाद्यत इति निर्णयो नैव शक्यत इत्यादिपूर्वपक्षं च प्रापय्य ब्रह्मलिंगाब्द्रह्मैवात्र प्रतिपाद्यते इतरत् = ब्रह्म-

भिन्नप्राणवाय्विंद्रजीवादिक न प्रतिपाद्यत इति सिद्धांतितत्वेन स्पष्ट प्राणवाय्विंद्र-जीवाना परमात्मना भेदस्य कथितत्वात् । यदि प्राणेंद्रजीवानां परब्रह्मणा ऐक्यं अभिप्रेतं स्यात् तदा तथा पूर्वपक्षकरणमयुक्तं स्यात् । तथा अज्ञानवशात् पूर्वपक्षे कृतेऽपि इंन्द्रादिजीवानां परमात्मना ऐक्यमेवेति समाधानं कर्तव्यं स्यात् । तथा अकृत्वा ब्रह्मैव प्राणशब्दवाच्य नान्ये जीवादयः इत्युक्तिरसंगता स्यात् । तस्मान्नेदं सूत्र जीवब्रह्मणोरैक्यबोधकम् । नाप्येतदधिकरणांतर्गत 'न वक्तुरात्मोपदेशादिति चेदध्यात्मसबंधभूमा ह्यस्मिन्' (ब्र. १–१–२९) इतिसूत्रं जीब्रह्मणोरैक्यबोधकम् । तथाहि तत्सूत्रे प्राणोस्मि प्रज्ञात्मा इति इंद्रेण आत्मनः (स्वस्य) प्राणत्वेनोपदेशात् ब्रह्मण्यसभाव्यमानानां त्वाष्ट्रवधादिधर्मीणा इद्रसंबंधिना प्राणे कथितत्वेन इंद्र एव प्राणशब्दवाच्यः न ब्रह्म इति पूर्वपक्षं प्रापय्य 'यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुरिति तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेव एता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः । स एप प्राण एव प्रज्ञानदोऽजरोऽमृत इति स आत्मेति विधानात् इति च अध्यात्म (परमात्म) सबधबाहुल्यस्यैतदध्याये दृश्यमानत्वेन ब्रह्मोपदेश एवाय न देवतात्मोपदेशः (इंद्रोपदेशः) इति सिध्यति इति इदमपि सूत्र भेदबोधकमेव ।

'जीवमुख्यप्राणालिंगान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' इत्युत्तरसूत्रेऽपि प्राणोऽस्मि प्रज्ञात्मा इत्यादिवाक्येषु जीवलिंगाना प्राणलिंगानां ब्रह्मलिंगाना च श्रवणात् जीवः प्राणो ब्रह्म च प्रतिपाद्यता न ब्रह्मैवेति पूर्वपक्षयित्वा प्राणशब्दस्य प्राणजीवब्रह्मपरत्वे अगीकृते उपासात्रैविध्यप्राप्तेः ब्रह्मलिंगाना सत्त्वात् तेषामन्यपरतया नेतुमशक्यत्वात् 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवंति यस्मिन्नेतावुपाश्रितौ' । (का.२-५-५) इत्यादिश्रुत्या प्राणादिव्यापारस्य परमात्मायत्तत्वावगमात् प्राणाद्यन्यलिंगानां परमात्मनि नेतुं शक्यत्वेन प्राणशब्देन ब्रह्मैव प्रतिपाद्यं न जीवप्राणावपि इति शंकरेण सिद्धांतितत्वेन उत्तरसूत्रेऽपि जीवपरमात्मनोर्भेदस्यैव बोधितत्वेन मध्यस्थं शास्त्रदृष्ट्येतिसूत्रमपि अद्वैतव्याख्यानरीत्याऽपि न जीवब्रह्मणोरैक्यबोधकमिति । एवं च एतदधिकरणान्तर्गताभ्यां 'प्राणस्तथेति' न वक्तुरिति चेति पूर्वसूत्राभ्यां इंद्रब्रह्मणोर्भेदस्यैव कथने कथं 'प्राणोस्मि प्रज्ञात्मा' इति इन्द्रेण प्राणशब्द-बोध्यपरमात्माऽभेदोपदेशः कृत इति शंकायां तन्निवारणार्थं प्रवृत्तं

'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इति सूत्रं न प्राणब्रह्मणोरैक्यं वक्तु **प्रवृत्तमिति** कथयितुं शक्यम्। यत एतदधिकरणीयप्रधानेन प्राणस्तथेतिसूत्रेण, तथा पूर्वसूत्रोक्तं भेदं व्यवस्थापयद्भ्यां न वक्तुरिति, जीवमुख्यप्राणेति, पूर्वसूत्राभ्यां अनेकश्रुतिसूत्रगीतारूपप्रमाणैश्च विरुद्ध तस्मात् शास्त्रदृष्ट्या इत्यस्य य आत्मनि तिष्ठन् य आत्मानमंतरो यमयति यः सर्वेषु भूतेषु तिष्ठन्... यः सर्वाणि भूतानि अंतरो यमयति इत्यादि शास्त्रजन्यया नियम्यमृत्तिकावाचिमृच्छब्देन तन्नियामकदेवतोक्तिवत् स्वान्तर्यामी (स्वानियामकः) परमात्मा इति दृष्ट्या प्राणोऽस्मि प्रज्ञात्मा इत्युपदेशः यथा परमात्मना जीवान्मनः स्वस्य च भेदज्ञानवतो वामदेवस्य यथा अंतर्यामिदृष्ट्या अहं मनुरभवं सूर्यश्चेति उपदेशः तद्वत् इति सूत्रार्थस्यैव इतरप्रमाणानुकूलत्वेन इतरप्रमाणाविरुद्धत्वेन च युक्तत्वात् नेदं सूत्र जीवब्रह्मणोरभेदबोधक किंतु भेदबोधकमेवेति।

अभेदबोधकत्वेनाद्वैत्याभिमतद्वित्रब्रह्मसूत्रान्तर्गतं '**आत्मेति तूपगच्छन्ति ग्राहयन्ति च**' इति सूत्रमपि नाभेदबोधकम्। तत्रैकस्याऽपि अभेदबोधकस्य पदस्याभावात्। भेदबोधकपदाना सत्त्वाच्च। तथाहि शब्दस्वारस्येन प्रतीयमानोऽर्थस्तु आत्मा इति उपगच्छन्ति जानन्ति, ग्राहयन्ति इति। अत्र हि नाभेदबोधकं किंचिदपि पदमास्ति। प्रत्युत ज्ञातृज्ञेयभावबोधनेन ज्ञातृज्ञेयज्ञापयितृभावबोधनेन च भेदबोधकमेव।

ननु 'यः शास्त्रोक्तविशेषणः परमात्मा सः किमहमिति प्रतिपत्तव्यः किंवा मदन्य इति संशये परमात्मा अहमिति प्रतिपत्तव्यः।

न ह्यपहतपाप्मत्वादिगुणो विपरीतगुणत्वेन शक्यते गृहीतु विपरीतगुणो वाऽपहतपाप्मत्वादिगुणत्वेन, अपहतपाप्मत्वादिगुणश्च परमेश्वरः तद्विपरीतगुणस्तु शारीरः (जीवः)

ईश्वरस्य च संसार्यात्मत्वे ईश्वराभावप्रसङ्गः। ततः शास्त्रानर्थक्यम्। संसारिणोऽपि ईश्वरात्मत्वेऽधिकार्यभावाच्छास्त्रानर्थक्यमेव। प्रत्यक्षविरोधश्च।

अन्यत्वेपि तादात्म्यदर्शनं प्रतिमादिष्विव विष्ण्वादिदर्शनामिति चेत्काममेवं भवतु। नतु संसारिणो मुख्य आत्मेश्वर इत्येतन्नः प्रापयितव्यम् एवं प्राप्ते ब्रूमः आत्मेत्येवेश्वरः प्रतिपत्तव्यः। तथाहि परमेश्वरप्रक्रियाया जाबाला आत्मत्वेनैवैनमुपगच्छन्ति। त्वं वा अहमास्मि भगवो देवतेऽहं वै त्वमासि देवते इति। तथाऽन्येऽ-

पि अहं ब्रह्माऽस्मि इत्येवमादय आत्मत्वोपगमा द्रष्टव्याः । ग्राहयन्ति चात्मत्वेनैवेश्वरं वेदातवाक्यानि ' एष त आत्मा सर्वान्तरः ( बृ. ३-४-१ ) एष ते आत्मान्तर्याम्यमृतः (बृ. ३-७-३ ) तत्सत्यं स आत्मा तत्त्वमासि ( छा. ६-८-७ ) इत्येवमादीनि ' ( ब्र. स. शा. भा. ४-१-३ ) इति शङ्करभाष्यदिशा आत्मेति तूपगच्छन्ति ग्राहयन्ति च इति सूत्रं जीवपरमात्मनोरैक्य श्रुत्यवष्टम्भेन वक्तीति चेत् न। शाङ्करीयसूत्रार्थकथनस्यायुक्तत्वात् । तथाहि

जाबाला आत्मत्वेन एतं ( परमेश्वरं ) उपगन्छन्ति इति ' आत्मेति तूपगच्छन्ति,' इति सूत्रभागस्यार्थकरणं तावदयुक्तम् । सूत्रे परमेश्वरबोधकपदाभावात् । न च परमेश्वरम् इति पदमध्याहृत्य परमेश्वरम् आत्मा इति उपगच्छन्ति इत्यर्थः क्रियते इति वाच्यम् । परमेश्वरनियम्यं परमेश्वरदासं, परमेश्वरजन्यं परमेश्वररक्ष्यम् अस्वतन्त्रम् इति वा पदस्याध्याहारेण परमेश्वरनियम्यं परमेश्वरदासं वा आत्मा इति ( आत्मत्वेन ) उपगच्छन्ति इत्यादिक प्रमाणपरिष्कृतमर्थं परित्यज्य परमेश्वरम् इति पदमेवाध्याहृत्य परमेश्वरम् आत्मेति उपगच्छान्ति इत्यप्रामाणिकार्थकरणे नियामकाभावात् । प्रत्युत परमेश्वरदासम् इत्यादिपदाध्याहारेण परमेश्वरदासम् आत्मेति उपगच्छन्ति इत्यादिभेदानुगुणार्थकरण एव ५५४ सूत्रेषु द्वित्रसूत्राणि विहाय परमेश्वरनियम्यत्वादिना भेदप्रतिपादकतया अद्वैत्यभिमतानां ५५१ सूत्राणामानुगुण्यरूपस्य भेदप्रतिपादकश्रुत्यानुगुण्यरूपस्य च नियामकस्य सत्त्वेन परमेश्वरदासम् आत्मेति उपगच्छन्ति इत्यर्थकरणैस्यव युक्तत्वात् । परमेश्वरदासमिति पदाध्याहारः कर्तव्य उत परमेश्वरमिति सन्देहेऽपि अस्य सूत्रस्य अभेदे प्रमाणत्वासम्भवात् । परमेश्वरमिति पदमध्याहृत्य परमेश्वरम् ' आत्मा ' इति (आत्मत्वेन) उपगच्छन्ति इत्यर्थकरणेऽपि न जीवब्रह्मणोरैक्यसिद्धिः। आत्मशब्दस्य आप्त्यादिगुणविशिष्टपरमात्मबोधकत्वेन जीवाबोधकत्वात् । परमेश्वरम् आत्मा = यच्चाप्नोतीत्यादिप्रमाणसिद्धाप्त्यादिगुणवान् इति ( आप्त्यादिगुणवत्त्वेन ) जानन्तीत्यर्थो भवति न तु परमेश्वरम् आत्मत्वेन ( जीवत्वेन ) जानन्तीत्येवार्थो भवतीति भक्षितेऽपि लशुने न शान्तो व्याधिरिति न्यायेन परमेश्वरम् इति पदमध्याहर्तुरद्वैतिनो जीवपरमात्मनोरभेदासिद्धेः । मुख्यया वृत्त्या आत्मशब्दस्य आप्त्यादिबहुगुणाविशिष्टपरमात्मबोधकत्वमेव, न तु जीवबोधकत्वमित्येतत् शङ्कराचार्याद्यद्वैतिभिरेव ' द्युभ्वाद्यायतन स्वशब्दात् ' (ब्र सू १।३।१ ) इति सूत्रभाष्यव्याख्यावसरे उक्तम् । तथा हि तद्वाक्यानि ( अर्थतः शाङ्कर-

भाष्यम्) द्युभ्वाद्यायतनं परं ब्रह्म भवितुमर्हति, न जीवादयः आत्मशब्दात्। आत्मशब्दश्च परमात्मपरिग्रहे सम्यगवकल्पते नार्थान्तरपरिग्रहे (जीवान्तरपरिग्रहे) इति।

**भामत्यर्थानुवादः**-द्युभ्वाद्यायतनं परं ब्रह्मैव, न प्रधानाव्याकृतवायुशारीर (जीव) हिरण्यगर्भाः स्वशब्दात् (आत्मशब्दात्) इति।

**रत्नप्रभाः**—नन्वात्मशब्दो जीवे सम्भवतीत्यत आह आत्मशब्दश्चेति।

(आनन्दगिरि) जीवादावपि तदुपपत्तिमाशङ्क्योक्तम् आत्मशब्दश्चेति। पक्षान्तरे मुख्यमाप्त्याद्ययुक्तमित्यर्थः। ब्रह्मविद्याभरणे — यद्यप्यात्मशब्दो जीवसाधारणोऽपि भवति, तथाऽपि योगेन ब्रह्मासाधारण एव। तथा च व्यापकत्वरूपयोगेन रूढ्या च परमेश्वरे स्वरसस्य न रूढिमात्राश्रयणेन जीवसाधारण्य कल्पयितुं युक्तमिति।

तथा च परमेश्वरम् इति पदमध्याहृत्य परमेश्वरम् आत्मत्वेन उपगच्छन्ति इत्युक्तावपि परमेश्वरम् आप्त्यादिगुणयुक्तत्वेन जानन्तीत्येवार्थः सिद्ध्यति, न तु परमेश्वरम् आत्मेति (जीव इति) जानन्ति इत्यर्थः। ततः 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति सूत्र न जीवब्रह्मणोरभेदबोधकमिति।

परमेश्वरम् आत्मत्वेन उपगच्छन्ति इत्यस्मिन्विषये यानि प्रमाणतया उदाहृतानि 'त्वं वा अहमस्मि भगवो देवते, अहं वै त्वमसि देवते' इति 'अहं ब्रह्माऽस्मि' इत्यादीनि वाक्यानि तानि परमेश्वरस्य आत्मत्वोपरमे प्रमाणं भवितुं नार्हन्ति। तेषामद्वैतिभिः अखण्डार्थबोधकत्वाङ्गकिरात्। विशेषविचारस्तु तत्त्वमस्यादिवाक्यार्थविचारे द्रष्टव्यः।

ग्राहयन्ति च =आत्मत्वेनैवेश्वरं वेदान्तवाक्यानि 'एष ते आत्मा सर्वान्तरः' (बृ. ३-४-१) 'एष ते आत्माऽन्तर्याम्यमृतः (बृ. ३-७-३) तत्सत्यं स आत्मा तत्त्वमसि (छां ६-८-७) इत्येवमादीनि इति ग्राहयन्ति चेति सूत्रभागस्य शाङ्करीयार्थवर्णनं तदप्यत्यन्तायुक्तम्

ईश्वरम् इत्यर्थबोधकपदस्य सूत्रे अभावात् अध्याहारेण तथा वर्णने दोषस्योक्तत्वात्।

अभेदविषये यत् 'तत्सत्यं स आत्मा तत्त्वमसि' इत्यादिप्रमाणोदाहरणं तदप्ययुक्तम्। तत्त्वमसीति वाक्यस्याऽपि अद्वैतिभिः अखण्डार्थबोधकत्वाङ्गी-

कारात्। ‘ तत्सत्यं स आत्मा ’ इत्यधिकोदाहरणस्य तेषां प्रयोजनं न पश्यामः। अधिकांशोदाहरणं तु आत्मा अतत् त्वम असि इति पदच्छेदज्ञापनद्वारा ‘ सन्मूलाः सोम्य सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ( छा. ६। ८। ६ ) इति पूर्ववाक्ये सर्वप्रजाना परमात्मजन्यत्वेन परमात्माश्रितत्वेन परमात्मप्रतिष्ठितत्वेन परमात्मनो भिन्नत्वस्योक्त्या। त्वम् [ अपि ] अतत् परमात्माभिन्नोऽसि इत्यर्थकरणं ज्ञापयन्ति द्वैतिनः।

किंवा तत् कारणीभूतं सदाख्यं ब्रह्म सत्यम् सः— सदाख्यं ब्रह्म तत्त्वं याथात्म्यं इति उपनिषद्भाष्येस्वकृत ( शङ्करकृत ) व्याख्यानसूचनद्वारा ‘ आत्मा तत्त्वमसि ’ इति वाक्ये केवलम् अखण्डार्थबोधकत्वेन वा आत्मा अतत् इति पदच्छेदेन वा अभेदाप्रतिपादकं न, अपितु तत् त्वम् इति पदच्छेदमन्तरा आत्मा तत्त्वम् इति पदच्छेदस्यापि सम्भवेन ‘ आत्मा तत्त्वमसि ’ इति वाक्यमभेदबोधकं (न) भवति इति सूचनार्थं च भवति।

ग्राहयन्ति चात्मत्वेन ईश्वरम् इत्यस्मिन्विषये ‘एष ते आत्माऽन्तर्याम्यमृतः ’ इति च यत् बृहदारण्यकवाक्योदाहरणं तत् परप्रतारणरूपं स्वव्याहतं च। तथाहि ‘ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ’ ( ब्र. १।२।२० ) इति सूत्रभाष्ये उभयेऽपि हि शाखिनः काण्वा माध्यन्दिनाश्चान्तर्यामिणो भेदेनैनं शारीरं ( जीवं ) पृथिव्यादिवत् अधिष्ठानत्वेन नियम्यत्वेन चाधीयते। यो विज्ञाने तिष्ठन् विज्ञानादन्तरो य विज्ञान न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरो यमयति एष ते आत्माऽन्तर्याम्यमृतः ( बृ. ३।७।२२ ) यो विज्ञाने तिष्ठन् इति काण्वाः य आत्मनि तिष्ठन् इति मध्यन्दिनाः। य आत्मनि तिष्ठन् इत्यस्मिंस्तावत्पाठे भवत्यात्मशब्द शारीरस्य वाचकः। यो विज्ञाने तिष्ठन् इत्यस्मिन्नपि पाठे विज्ञानशब्देन शारीर उच्यते। विज्ञानमयो हि शारीरादन्य ईश्वरोऽन्तर्यामीति सिद्धम्।' ( ब्र. सू. शा. भा. १।२।२० ) इति वाक्येन तथा ‘ भेदव्यपदेशाच्चान्यः ( ब्र.- सू.– १।१।२१ ) इत्येतत्सूत्रभाष्ये.

“ आदित्यादिशरीराभिमानिभ्यो जीवेभ्योऽन्य ईश्वरोऽन्तर्यामी ‘ य आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष ते आत्माऽन्तर्याम्यमृतः ( बृ. ३।७।९ ) इति श्रुत्यन्तरे भेदव्यपदेशात्। तत्र हि आदित्यादन्तरो यमादित्यो नवेद इति वेदितुरादित्याद्विज्ञानात्मनोऽन्योऽन्तर्यामी स्पष्टं निर्दिश्यते ” इति वाक्येन—

तथा ‘ उभयव्यपदेशात्त्वहिकुंडलवत् ’ ( ब्र. सू ३।२।२७ ) इत्येतत्सूत्र-भाष्ये क्वचिज्जीवप्राज्ञयोर्भेदो व्यपदिश्यते ।. . . . यः सर्वाणि भूतान्यन्तरो यमयति एष ते आत्माऽन्तर्याम्यमृतः ’ इति नियन्तृनियन्तव्यत्वेन ’ इति वाक्येन

तथा ‘ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ’ इत्येतत्सूत्रभाष्ये ‘ एष ते आत्माऽन्तर्याम्यमृतः....एष ते आत्माऽन्तर्याम्यमृत इति वाक्य घटितानामेकविंशति-वाक्याना जीवब्रह्मणोर्भेदपरत्वमुक्त्वा ‘ एष ते आत्माऽन्तर्याम्यमृतः इति चात्मत्वा-मृतत्वे मुख्ये परमात्मन उपपद्येते इति जीवस्य मुख्यात्मत्वाभावकथनेन च ‘ यं पृथिवी न वेद, इति च पृथिवी देवतया अविज्ञेयमन्तर्यामिणं ब्रुवन् देवतात्मनोऽ न्यमन्तर्यामिण दर्शयति ’ इति कथनेन च ‘ एष ते आत्माऽन्तर्याम्यमृतः ’ इति वाक्यं जीवेश्वरयोर्भेदबोधकमिति क्रियासमभिव्याहारेण स्वयमेव स्पष्टं कथयित्वा आत्मत्वेनैवेश्वरं वेदान्तवाक्यानि ग्राहयन्ति इत्यस्मिन्विषये स्वव्याहतमेतद्वाक्योदा-हरणमयोग्यजनमोहनार्थं वा चित्तास्वास्थ्यमूलकं वा ।

**अनवस्थादयो दोषाः सत्तां निघ्नन्ति वस्तुनः ।**
**अद्वैतिनां ते सुहृदः प्रपञ्चे तत्प्रसञ्जकाः ।।**

इत्यद्वैतिभि स्वीकृतत्वेन स्वव्याहत्यादिर्भूषणमिति भ्रममूलकमेव वेति समुपेक्षणीयमेव प्रज्ञाशालिभिर्नादरणीयमेव । काममाद्रियन्तां नामेतरे ।

एषः पृथिव्याद्यन्तर्यामित्वेनोक्तः अमृतः आत्मा = परमात्मा ते–तव ( उपलक्षणया ) मम च अन्तर्यामी इत्यर्थकत्वेन ‘ एष ते आत्माऽन्तर्याम्यमृतः ’ इत्येकविंशतिवार पठितानि वाक्यानि जीवपरमात्मनोर्भेदपराण्येव नाभेदपराणीति ।

ग्राहयन्ति चात्मत्वेनेश्वरमित्यस्मिन्विषये ‘ एष ते आत्मा सर्वान्तरः ’ ( बृ. ३ । ४ । १ ) इति वाक्योदाहरणमप्युक्तम् । तत्र अभेदबोधकपदाभावात् प्रत्युत ते आत्मा इति जीवपरमात्मनोः सम्बन्धकथनेन भेदबोधकत्वात् । परि-च्छिन्नस्य जीवस्य आत्मत्वसर्वान्तरत्वयोरसम्भवेन आत्मशब्देन जीवग्रहणा-सम्भवाच्चेति ।

यद्यपि ‘आत्मेति तूपगच्छन्ति ग्राहयन्ति च ’ इति सूत्रं नाभेदबोधकं नापि अभेदे प्रमाणतयोदाहृतानि श्रुतिवाक्यानि नाभेदबोधकानि इति स्थितमिति न विचारान्तरस्यास्त्यवकाशः तथापि परमात्मा अहमिति न ग्राह्यः इति कथयित्रा यानि यानि साधकानि परमात्मा ‘ अहमिति ग्रहणे यानि बाधकान्युक्तानि तेषां ’

दूषण यदुक्त शकराचार्यैः तास्मिन् असामञ्जस्यप्रदर्शनमन्तरा न स्वमते दार्ढ्यं भवतीति तस्यासामञ्जस्यं किंचित्प्रदर्श्यते । तथाहि—

जीवब्रह्मणोर्भेदे ' त्वमहमस्मि ' इति वाक्यस्य का गतिरिति शंकायां भेद-वादिनो ' यथा मनो ब्रह्मेति ' अभेदोक्तिः मनःप्रतीकत्वेन ब्रह्मोपासनविधायिका न तु मनसो ब्रह्मतादात्म्यबोधिका तथा त्वमहमस्मि इति वाक्य जीवप्रतीकत्वेन ब्रह्मोपासनविधायकं न तु जीवस्य ब्रह्मतादात्म्याविधायकामिति उक्तिं प्रतीकदर्शन-मिद विष्णुप्रतिमान्यायेन भविष्यतीति वाक्येनानूद्य तथात्वे गौणत्वप्रसगात् इति यद्दूषणमाहुः शंकराचार्याः तत् निजभोजनभाजने पतितेऽपि रासभशवे परस्य-पत्रावल्या मक्षिकानिवारणन्यायमनुरुन्धे । स्वमतेऽपि (शाकरमते ) ' त्वमहमस्मि तत्त्वमसि इत्यादिवाक्यानां बोधजनकत्वेमवनास्ति । बोधजनकत्वेऽपि तत् त्वम् असि इति पदत्रयाणामपि लक्षणया वृत्त्या चिन्मात्रबोधकत्वमिति गौणार्थांगी-कारात् ।

यच्चोक्तम्– ' यत्र हि प्रतीकदृष्टिरभिप्रेयते सकृदेव तत्र वचन भवति, यथा ' ' मनो ब्रह्म ' (छां. ३।१८।१) ' आदित्यो ब्रह्म ' (छा. ३।१९।१) इत्यादि इह पुनः ' त्वमहमस्मि ' अहं च त्वमसि इत्याह । अतः प्रतीकदृष्टिवैरूप्यादभेद-प्रतिपत्तिरिति ' तदप्ययुक्तम् । प्रतीकदृष्ट्यभिप्राये सकृदेव वचनामिति नियमस्य कुत्राऽप्यदृष्टेः । प्रकृतेऽपि ' त्वमहमस्मि ' इति सकृदेवोक्तत्वात् ' अहं त्वमासि ' इति वाक्य भिन्नानुपूर्वीकम् अनुयोगिप्रतियोगिभेदेन भिन्नार्थकामिति न प्रतीक-श्रुतिवैरूप्यमिति । यद्यपि प्रतिमादिषु विष्ण्वादिदर्शनं कार्यमिति नास्माकसिद्धान्तः । मिथ्योपासनायाः

**योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।**
**किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥**

इत्यादिना निषिद्धत्वात् । तथाऽपि मिथ्योपासनमन्यत्राङगीकृत्य अत्र तद्वैरूप्यदर्शन शङ्कराचार्याणामयुक्तमित्येव दर्शने तात्पर्यम् । यदुक्तम् ' भेददृष्ट्यपवादाच्च ' । तथाहि—

' अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद ' ( बृ. **४।४।१९। कठ. ४।१०) ' मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ' ( बृ. ४।४।१९। कठ. ४।१० ) ' सर्वं त परादाद्योऽन्यत्रात्मनः सर्व वेद ' (बृ. ४।५।७)**

इत्येवमाद्या भूयसी श्रुतिर्भेदमपवदति इति तदप्ययुक्तम् । उदाहृता ‘ अथ योऽन्यां देवतामुपास्ते ’ इति श्रुति तावत् कर्मिणा निन्दाबोधकतया उपानिषद्भाष्ये गीताभाष्ये सूत्रभाष्ये च व्याख्याय अत्र पुनर्भेददृष्टिनिन्दाविषये तदुदाहरणस्य स्ववाक्यविरुद्धत्वात् । जीवब्रह्मणोर्भेददृष्टिनिन्दाया अप्रतीतेः । तथाहि उपनिषद्भाष्ये “ अथ यः कश्चिद्ब्रह्मवित् अन्याम् आत्मनः ( परमात्मनः ) व्यतिरिक्तां या काचिद्देवता ( इन्द्राग्न्यादिरूपा ) उपास्ते स्तुतिनमस्कारयागबल्युपहारप्रणिधानध्यानादिना उपास्ते तस्या गुणभावम् उपगम्याऽऽस्ते, अन्योऽसावनात्मा मत्तः पृथक् अन्योऽहमस्म्यधिकृतो मयाऽस्मा ऋणिवत्प्रतिकर्तव्यमित्येवप्रत्ययः सन्नुपास्ते न स इत्थंप्रत्ययो वेद विजानाति तत्त्वमिति वाक्येन अहमस्म्यधिकृतः मया अस्मै ऋणिवत्प्रतिकर्तव्यमित्येवंप्रत्ययः सन् यः परमात्मभिन्नाम् इन्द्रादिदेवता बल्युपहारप्रणिधानादिना उपास्ते स तत्त्वं न वेद इति कर्मिणां निन्दा प्रतीयते न तु भेददृष्टिमतां निन्दा । प्रत्युत अन्या = परमात्माभिन्नाम् इन्द्रादिदेवतामिति स्पष्टम् इन्द्रादिजीवाना परमात्मनो भेद एव प्रतीयते इति नैतद्वाक्य जीवब्रह्मणोर्भेददृष्ट्यपवादकम् ।

न च असौ अनात्मा = परमात्मभिन्ना देवता अन्यः मत्तः पृथक् अहम् अन्यः इत्येवं प्रत्ययः न वेदेत्युक्त्या भेदज्ञानिनिन्दा प्रतीयते इति वाच्यम् । इन्द्रादिदेवतायाः कर्मकर्तृजीवाद्भेदस्याद्वैतमतेऽपि विद्यमानत्वात् । इन्द्रादिदेवताना जीवात् भेदनिन्दायामेवैतद्वाक्यस्य तात्पर्यसत्त्वे ‘ अन्योऽसावनात्मा मत्तः पृथक् अन्योऽहम् ’ ‘ इत्येवप्रत्ययः ’ इत्येतावन्मात्रेण निर्वाहे ‘ अहमस्म्यधिकृतो मयाऽस्मा ऋणिवत्प्रतिकर्तव्यम् ’ इति वाक्यस्याधिक्यापाताच्च । तस्मात् नित्यफलप्रापकं ब्रह्मज्ञानमसम्प्राप्य अल्पफलार्थमिन्द्रादिदेवतामुद्दिश्य यागकर्तॄणा कर्मिणां निन्दायामेव तात्पर्यं न तु भेदनिन्दायाम् ।

यद्यस्य वाक्यस्य भेदनिन्दाबोधने तात्पर्य स्यात् तर्हि ‘ योऽनन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीत्याकारः स्यात्, न तु योऽन्या देवतामिति । न हि घटत्वेन घटं जानन् परं परत्वेनावगच्छन् गर्दभं गर्दभत्वेन मन्वानः बी. ए. परीक्षामुत्तीर्ण बी. ए. पदवीभाजं च जानानोऽविद्वान् भवति । भिन्नदेवताया भिन्नत्वेन ज्ञानिनोऽज्ञत्वं देवानां प्रियोऽपि न ब्रूयात् महान्तः शंकराचार्यास्तु एवं वदेयुरिति संम्भावनाऽपि न सम्भावनार्हेति तामसलोकमोहनार्थमेव क्वचित्तथा प्रदर्शयामासुरित्यवश्यं स्वीकार्यम् तेषामेव तथाऽभिप्राये भिन्ना देवतां भिन्नत्वेन

ॐ साक्षाच्चोभयाम्नानात् ॐ

यत्कारणं " सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति " ( छां. १-९।१ ) इति साक्षाद्ब्रह्मैव कारणमुपादाय प्रभवप्रलययोराम्नानात् ब्रह्मैवोपादानकारणं इति यव्द्याख्यानं शंकराचार्याणां तन्मन्दम्। शंकरभाष्यव्याख्यानरूपे ब्रह्मविद्याभरणे " भूतले घटप्रलयेऽपि न भूतलं घटोपादानम्। न च यस्मात्प्रभवति" इति भूतलव्यावृत्तिः 'निमित्तकारणेऽपि चक्रादौ लयसंभवात् ' इति वाक्ये नाद्वैतिभिरेव प्रभवप्रलयाम्नानयोर्व्यभिचारेणोपादानकारणत्वासाधकताया उक्तत्वात्। न च न हि वयं ब्रह्मणि प्रभवप्रलययोराम्नानमात्रेणोपादानत्वं ब्रूमः किंतु ' अन्तवद्वै किल ते शालावत्य सामे ' ति उपक्रमात्। ' स एषोऽनन्त ' इत्युपसंहाराच्चानन्त्यव्युत्पादनार्थं ' सर्वाणि ह वा इमानि ' इत्यादिवाक्यमाम्नायते। न चोपादानान्यत्वे ब्रह्मणः आनन्त्यं व्युत्पादयितुं शक्य, आनन्त्यवाक्यैकवाक्यतापन्नतयैव प्रभवप्रलयाम्नानं ब्रह्मण उपादानत्वसाधकमिति वाच्यम्। ' साक्षाच्चोभयाम्नानात् ' इति सूत्रस्य उपादानत्वविषये उदाहरणायोगात् उपक्रमोपसंहाराभ्या प्रतीतस्यानन्त्यस्योपादानता विनाऽनुपपत्त्यभावाच्च। तथा हि "महद्गुणत्वाद्यमनन्तमाहुः" इति स्मृत्यनुसारेण अनन्तपदस्य महागुणवत्त्वार्थकत्वेन गुणतः आनंत्यस्य न विद्यते अंतो नाशो यस्य इति व्युत्पत्त्या अनन्तशब्दस्य नाशाभाववदर्थकतया कालतः आनंत्यस्य, न विद्यते अंतः देशपरिच्छेद. यस्य इति व्युत्पत्त्या देशत आनंत्यस्य च उपादानत्व विनाऽनुपपत्त्यभावात् स यथानन्तोऽयमाकाश एवमनन्त आत्मा वेदितव्य इत्यादिश्रुत्या आकाशस्यापि अनन्तत्वबोधनात् तस्यापि सर्वजगदुपादानतापत्तेश्च।

ब्रह्मण परिणाम्युपादानताया विवर्तोपादानतायाश्च प्रमाणविरुद्धत्वेनोभयाम्नानस्य तदाक्षेपकत्वासभवाच्च। न ह्याक्षेपकं प्रमाणाविरुद्धमाक्षिपति।

ब्रह्मैव कारणमुपादाय प्रभवप्रलययोराम्नानात् ब्रह्मैवोपादानकारणमिति व्याख्याने साक्षादिति पदस्य वैय्यर्थ्यं च।

न च आकाशादेवेति श्रौतावधारणोक्तापादानान्तराभावं साक्षात् इति सूत्रपदेन दर्शयति इति साक्षात्पदस्य सार्थक्यमिति वाच्यम्। साक्षात् इति पदेन एतावदर्थस्याबोधनात्। अद्वैतिमतेऽविद्यायाः उपादानत्वांगीकारेणोपादानांतरव्या-

वृत्तेः कर्तुमशक्यत्वाच्च । घटादीनामनुपादानभूते भूतले चक्रे च लयदर्शनात् 'प्रत्यस्तमयश्च नोपादानादन्यत्र कार्यस्य दृष्ट' इति शाङ्करभाष्यन्त्वयुक्तमेव ।

### ॐ आत्मकृतेः परिणामात् ॐ

इतश्च प्रकृति=उपादानकारणं ब्रह्म "तदात्मान स्वयमकुरुत" (तै. २-७) इत्यात्मन. कर्तृत्वकर्मत्वाभिधानात् कथं पूर्वसिद्धस्य सतः कर्तृत्वेन स्थितस्य क्रियमाणत्वमित्याशंकाया परिणामात् पूर्वसिद्धोऽपि परमात्मा विकारात्मना परिणमयामासात्मानं इति ।

अथवा परिणामादिति पृथक्सूत्रम् । 'सच्च त्यच्चाभवत् निरुक्तं चानिरुक्तं च' इत्यादिना सामानाधिकरण्येन ब्रह्मण एव विकारात्मना परिणामः आम्नायतेऽतः ब्रह्म प्रकृतिः—उपादानामिति यव्याख्यानं ततुच्छम् । अस्यार्थस्य सर्वप्रमाणविरुद्धत्वात् ।

तथा हि—कथ पूर्वसिद्धस्य सतः कर्तृत्वेन स्थितस्य क्रियमाणत्वमित्याशक्य परिणामात् पूर्वसिद्धोऽपि परमात्मा विकारात्मना परिणमयामास आत्मानमिति तत्तावदसंगतम् । परब्रह्मणः निर्विकारतायाः श्रुत्यादिसिद्धत्वेन विकारवत्त्वरूपपरिणामासंभवात् ।

न च 'तदात्मानं स्वयमकुरुत' इति वाक्ये श्रूयमाणः परिणामरूपो विकारो मिथ्येति न विकाररूपपरिणामबोधकश्रुतेः निर्विकारश्रुतिविरोध इति वाच्यम् । इष्टापत्तेः । यतो मिथ्येत्यस्य त्रिकालेऽपि नास्तीत्यर्थकत्वेन ब्रह्मणो विकारित्वरूपपरिणामवत्त्व नास्तीत्येवोक्त स्यात् । तथा चास्मदिष्टासिद्धिः । अस्याःश्रुतेः ब्रह्मणो मिथ्याभूत ( अविद्यमान ) परिणामबोधकत्वांगीकारे श्रुतेरप्रामाण्यापत्तेश्च । न चाप्रामाण्यं वेदस्य, वैदिकम्मन्येन वक्तुं शक्यम् । अतो नेयं श्रुति. परिणामबोधिका ।

ननु तर्ह्यस्या. श्रुतेः कोऽर्थ इति चेत्, 'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः' ( गी. ४-९ ) 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तादात्मानं सृजाम्यहम् ।' ( गी. ४-७ ) इत्याद्युक्तरीत्या 'स्वयमविकारः सन्नेव स्वसृष्टजगन्नियामकान्तर्यामिरूपेण स्वस्य बहुभावोपपत्तेः । 'यदेकमव्यक्तमनन्तरूप' मिति श्रुतौ एकस्यैवानन्तरूपतायाः श्रवणात् । तस्मात् ( अद्वैतिभिरेवोपादानकारणतायाः मिथ्यात्वबोधनात् विवर्तोपादानताया अकथ-

नात् ) नेदं सूत्रं ब्रह्मण उपादानत्वबोधकम् । ब्रह्म विवर्तोपादानमिति अस्मिन् सूत्रे कथ्यते इति शंकायाः न प्रसरः, स्पष्टं परिणामादिति परिणामवाचकपदस्य श्रवणात् ।

यच्चोक्तं परिणामादिति सूत्र पृथक्कृत्य 'सच्च त्यच्चाभवत्' 'निरुक्त चानिरुक्तं च' ( तै. २-६ ) इत्यादिना ब्रह्मण एव विकारात्मना परिणामः सामानाधिकरण्येनाम्नायते इति ब्रह्म उपादानकारणमिति तदप्यतिहेयम् । तथा हि-'इद सर्वमसृजत यदिद किंच तत्सृष्ट्वा तदेवानुप्राविशत्' ( तै २-६ ) इति पूर्ववाक्ये सर्वजगतः सृष्टिमभिधाय 'तत्सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवत् निरुक्तं चानिरुक्त च' इति सर्वजगत्सृष्ट्वा स्वसृष्टं जगत् अनुप्राविशत् । अनुप्रविश्य च सच्च त्यच्चाभवत् इति प्रवेश्यप्रवेशकभावादिना स्वसृष्टजगद्भिन्नताया आवश्यकत्वेनोपादानकारणत्वासभवात् । निर्विकारब्रह्मणः परिणामासंभवेन सच्च त्यच्चाभवदिति वाक्येन ब्रह्मणः सत्यदादिजगद्रूपेण परिणामः कथ्यत इति वक्तुमशक्यत्वात् श्रुतौ कथितस्य परिणामस्य मिथ्यात्वेन ब्रह्मण उपादानत्वासिद्धेः श्रुतेरप्रामाण्यप्रसंगाच्च न ब्रह्मण उपादानकारणत्वसिद्धिः ।

**ॐ योनिश्च हि गीयते ॐ**

'कर्तारमीशं पुरुष ब्रह्मयोनिं' ( मुं. ३-१-३ ) 'यद्भूतयोनि परिपश्यन्ति धीराः' ( मु. १-१-६ ) इति च ब्रह्मणि योनिशब्दः प्रयुज्यते योनिशब्दश्चोपादानवचन इति ब्रह्म उपादानकारणमिति यच्छंकरव्याख्यानं तत्तुच्छम् । योनिशब्दस्य 'योनिष्ठ इन्द्र निषदे अकारि' ( ऋ सं. १-१०४-१ ) इति वाक्ये हे इन्द्र ते तव निषदे उपवेशनाय योनिः स्थानं मया अकारि इति स्थानार्थेऽपि प्रयोगदर्शनात् न योनिशब्देनोपादानत्वसिद्धिः । न च 'यथोर्णनाभिः सृजते गृह्णते च' ( मु. १-१-७ ) इत्युत्तरवाक्ये उपादानकारणीभूतोर्णनाभिदृष्टान्तदानात् योनिशब्द उपादानवचन इति वाच्यम् । ऊर्णनाभेश्चेतनत्वेन तन्तुं प्रति निमित्तकारणत्वात् ऊर्णनाभ्युपभुक्तान्नपरिणतलालाया एवोपादानकारणत्वात् इति वाक्यशेषेणापि योनिशब्देनोपादानकारणत्वासिद्धेः, नेदमपि सूत्रं ब्रह्मणः उपादानत्वबोधकमिति नेदं पंचसूत्रात्मकमधिकरणं ब्रह्मण उपादानत्वबोधकमिति ।

**ॐ एतेन सर्वे व्याख्याता व्याख्याताः ॐ**

इदं सूत्रं अण्वादिकारणवादा ब्रह्मकारणवादस्य प्रतिपक्षत्वात् प्रतिषे-

द्धव्याः । अतः प्रधानमल्लनिबर्हणन्यायेनातिदिशति । एतेन प्रधानकारणवाद-प्रतिषेधन्यायकलापेन सर्वे अण्वादिकारणवादा अपि प्रतिषिद्धतया व्याख्याता वेदितव्याः । तेषामपि प्रधानवत् अशब्दत्वात् शब्दविरोधित्वाच्चेति व्याख्यात-मिति ब्रह्मण एव कारणत्वं न त्वण्वादीनामित्युक्त्या अकारणेभ्यः अण्वादिभ्यो जगत्कारणस्य ब्रह्मणो भेदः सिध्यति इति ।

ॐ उत्पत्त्यसम्भवात् ॐ

इति सूत्रस्य "येषामप्रकृतिरधिष्ठाता केवलनिमित्तकारणमीश्वरोऽभिमतस्तेषां पक्षः प्रत्याख्यातः । येषां पुनः प्रकृतिश्चाधिष्ठाता चोभयात्मकं कारणमीश्वरोऽभिमतस्तेषां पक्षः प्रत्याख्यायते । ननु श्रुतिसमाश्रयणेनाप्येवंरूप एवेश्वरः प्राङ्-निर्धारितः प्रकृतिश्चाधिष्ठाता चेति । श्रुत्यनुसारिणी च स्मृतिः प्रमाणामिति स्थितिः । तत्कस्य हेतोरेष पक्षः प्रत्याचिख्यासित इति । उच्यते । यद्यप्येवंजा-तीयकोंऽशः समानत्वान्न विसंवादगोचरो भवत्यस्ति तु अंशांतरं विसवादस्थान-मित्यतस्तत्प्रत्याख्यानायारंभः । तत्र भागवता मन्यन्ते । भगवानेवैको वासुदेवो निरञ्जनज्ञानस्वरूपः परमार्थतत्वं, स चतुर्धात्मानं प्रविभज्य प्रतिष्ठितो वासुदेव-व्यूहरूपेण संकर्षणव्यूहरूपेण प्रद्युम्नव्यूहरूपेणानिरुद्धव्यूहरूपेण च । वासुदेवो नाम परमात्मोच्यते । संकर्षणो नाम जीवः प्रद्युम्नो नाम मनः । अनिरुद्धो नामा-हंकार. । तेषां वासुदेवः पराप्रकृतिरितरे संकर्षणादयः कार्यम् । तमित्थंभूतं परमेश्वरं भगवन्तमभिगमनोपादानेज्यास्वाध्याययोगैर्वर्षशतमिष्ट्वा क्षीण–क्लेशो भगवन्तमेव प्रतिपद्यते इति । तत्र यत्तावदुच्यते योऽसौ नारायणः परोऽव्यक्तात् प्रसिद्ध परमात्मा सर्वात्मा स आत्मनात्मानमनेकधा व्यूह्यावस्थित इति तन्न निराक्रियते 'स एकधा भवति त्रिधा भवति, (छां. ७।२६।२)' इत्यादि-श्रुतिभ्यः परमात्मनोऽनेकधाभावस्याधिगतत्वात् । यदपि तस्य भगवतोऽभिगमना-दिलक्षणमाराधनमजस्रमनन्यचित्ततयाऽभिप्रेयते तदपि न प्रतिषिध्यते । श्रुति-स्मृत्योरीश्वरप्रणिधानस्य प्रसिद्धत्वात् । यत्पुनरिदमुच्यते वासुदेवात्संकर्षण उत्पद्यते संकर्षणाच्च प्रद्युम्नः प्रद्युम्नाच्चानिरुद्ध इति । अत्र ब्रूमः । न वासुदेव-संज्ञकात्परमात्मनः संकर्षणसंज्ञकस्य जीवस्योत्पत्तिः संभवति । अनित्यत्वादिदोष-प्रसंगात् । उत्पत्तिमत्वे हि जीवस्यानित्यत्वादयो दोषा. प्रसज्येरन् । ततश्च नैवास्य भगवत्प्राप्तिर्मोक्षः स्यात् । कारणप्राप्तौ कार्यस्य प्रविलयप्रसंगात् । प्रतिषेधिष्यति

चाचार्यो जीवस्योत्पत्ति— 'नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ( ब्रह्मसू. २-३-१७ )' इति तस्मादसंगतैषा कल्पना " इति ग्रन्थेन तत्र भागवता मन्यन्ते—वासुदेवः साक्षात् परमात्मा संकर्षणो जीवः प्रद्युम्नो नाम मनः अनिरुद्धो नाम अहंकारः तत्र वासुदेवः कारण—संकर्षणादयः कार्यम् । तमित्थंभूत परमेश्वरं भगवन्तं (१) अभिगमन (२) उपादान (३) इज्या (४) स्वाध्याय (५) योगैर्वर्षशतं इष्ट्वा क्षीणक्लेशो भगवन्तमेव प्रतिपद्यते इति यत्प्रतिपाद्यते, तत्र श्रुतिस्मृत्यादिप्रमितत्वात् भगवतं अभिगमनादिना वर्षशतमिष्ट्वा क्षीणक्लेशो भगवंतमेव प्रतिपद्यते इत्येवंरूपं भागवतमतमनुमोद्य वासुदेवात् संकर्षणो नाम जीवो जायते इत्येतं भागवतमतांशम् । वासुदेवात्परमात्मनः संकर्षणसंज्ञकजीवस्य उत्पत्तिर्न संभवति जीवस्योत्पत्तिमत्त्वे अनित्यत्वादयो दोषाः प्रसज्येरन् । तथा अस्य जीवस्य भगवत्प्राप्तिरूपो मोक्षो न स्यादिति सूत्रकारो निराचकारेति उत्पत्त्यसंभवात् इतिसूत्रस्यार्थवर्णनं शङ्कराचार्याणां न तद्युक्तम् ।

(१) वासुदेवात्संकर्षणो नाम जीवो जायते संकर्षणात्प्रद्युम्नसंज्ञकमनो जायते प्रद्युम्नादनिरुद्धसंज्ञकोऽहंकारो जायते इति पूर्वोदाहृतपंचरात्रवाक्यस्य वक्ष्यमाणरीत्या अनेकाबाधितार्थानां संभवेन अद्वैतवादिभिरपि प्रमाणत्वेन स्वीकृतेषु महाभारतादिग्रंथेष्वपि पञ्चरात्रागमवत् जीवादिविषयेषु उत्पत्त्यादिबोधकाना वाक्यानां सत्त्वेन तेषामप्रामाण्यमनुक्त्वा पञ्चरात्रस्यैवाप्रामाण्यकथनायोगात् ।

(२) भारत एव पञ्चरात्रस्य प्रामाण्यं वदद्भिः सूत्रकारैर्ब्रह्मसूत्रेषु पञ्चरात्रप्रामाण्यं निराक्रियत इत्युक्तेः सूत्रकाराणां व्याहतभाषित्वसंपादकत्वेनायोगात् । न हि सूत्रकाराणां व्याहतभाषित्वमंगीकर्तुमर्हं प्रस्थानत्रयप्रामाण्यवादिभिर्वैदिकंमन्यैः ।

(३) यो वासुदेवो भगवान् क्षेत्रज्ञो निर्गुणात्मकः । ज्ञेयः स एव राजेंद्र जीवः संकर्षणः प्रभुः ।। ( महा. भा. शा. ३३९-४० ) इत्यस्मिन्वाक्ये वासुदेवस्य संकर्षणरूपतायाः उक्तत्वात् तथा केशवादिचतुर्विंशतिनामसु विश्वादिविष्णुसहस्रनामस्वपि वासुदेवात्मकपरमात्मनः संकर्षण इति नाम्नश्च सत्त्वात् ।

' अहं हि जीवसंज्ञो वै ' ' जीवः संकर्षणः प्रभुः '। (महा. भा. शां. ) इति वाक्ययोः परमात्मनः जीव इति संज्ञाया कथितत्वात् : जीवप्राणधारण

इति धातुपाठानुसारेण इति प्राणधारकत्वगुणयोगेन जीवशब्दस्य परमात्म-वाचकत्वसंभवात् ।

जनीप्रादुर्भावे इति धातुपाठानुसारेण जायत इत्यस्य प्रादुर्भवतीत्यर्थकत्वेन वासुदेवात्संकर्षणो नाम जीवो जायत इति पचरात्रवाक्यस्य वासुदेवात्परमात्मनः जीवः प्राणधारकत्वहेतुना जीवशब्दवाच्य संकर्षणनामकं भगवद्रूपं जायते अभि-व्यक्तो भवति इति इतरप्रमाणानुसारिणोऽर्थस्य संभवाच्च ।

(४) संकर्षणपदेन जीव एव पञ्चरात्रे उक्त इति स्वीकारेऽपि बाध-काभावात् । तथा हि—

१ यतो वा इमानि भूतानि जायन्ते २ सर्व एते आत्मनो व्युच्चरन्ति ३ चंद्रमा मनसो जातश्चक्षोः सूर्योऽजायत । मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ४ जन्माद्यस्य यतः ५ अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरं । पतिं प्रजा-नामसृज महर्षीनादितो दश ॥ (मनुस्मृ. ३-४) ६ बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ॥ (गी. ४-५) ७ जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ॥ (गी. २-५) ८ सहयज्ञाः प्रजाः सृष्ट्वा (गी. ३-१०) ९ मया सृष्टः पुरा ब्रह्मा [ महा. भा. शां ३३९-६० ] इत्यादिषु प्रमाणतया अंगीकृतेषु ग्रंथेषु जीवस्यो-त्पत्तेः कथितत्वेन ग्रंथाना जीवोत्पत्तिप्रतिपादकपञ्चरात्रस्येवाप्रामाण्यस्य वक्तव्यत्वा पातात् ।

न च यतो वेत्यादिवाक्येषु जीवस्योत्पत्तिर्नाम देहसंबंध एव कथ्यते न तु स्वरूपोत्पत्तिः अतो नाप्रामाण्यं श्रुत्यादीनामिति वाच्यम् । श्रुत्यादीनामिव पञ्च-रात्रस्यापि जीवस्य देहसंबधरूपोत्पत्तिबोधकत्वेन प्रामाण्यसंभवात् पञ्चरात्र-समानार्थकस्यापि वेदादेः प्रामाण्यं पचरात्रस्याप्रामाण्यमित्यस्य अर्धजरती-यन्यायेनायोगात् ।

ॐ न च कर्तुः करणं ॐ

इति सूत्रस्य कर्तुं संकर्षणात् जीवात् प्रद्युम्ननामकं करणं मनः प्रजायते यस्मान्न हि लोके कर्तुर्देवदत्तादे (सकाशात्) करणं परश्वादि उत्पद्यमानं दृश्यते इति यत् व्याख्यानं तत् बालानामपि उपहासकरं किमु प्रौढानाम् । तथा हि जीवः मनोरूपकरणोत्पादको न भवति । कर्तृत्वात् । यः कर्ता स करणोत्पादको न

भवति । यथा देवदत्तः कर्ता न परशुरूपकरणोत्पादको भवति इति खलु अनुमानमुक्तं भवति । तन्न युक्तं अनेकशिल्पपर्यवदातस्य करणरूप परशुं कृत्वा तेन पलाशच्छेदनक्रियाकर्तृतायाः दर्शनेन व्यभिचारात् कर्तुः सकाशात् करण नोत्पद्यते इति अनुमातु न शक्यते य यस्या क्रियाया कर्ता स तया क्रियया तत्क्रियाकरणं कर्तु न शक्नोति यथा छेदनक्रियाकर्ता देवदत्तेन तया च्छेदनक्रियया च्छिदाकरणस्य परश्वादे कर्तुमशक्यत्वेऽपि क्रियातरेण परशुं कृत्वा स्वकृतेन परशुना करणेन पलाशच्छेदनाक्रिया कर्तु शक्यत एव ।

प्रकृते च ज्ञानरूपाक्रियोत्पत्तौ जीवः कर्ता मनः करणं पञ्चरात्रे ज्ञानरूपक्रियाकर्त्रा जीवेन ज्ञानरूपक्रियया तत्क्रिया [ ज्ञान ] करणभूतं मनः जायते इति यद्युच्यते तदायं दोष· स्यात् । य· यत्क्रियाकर्ता तेन तत्क्रियया तत्क्रियाकरणं नोत्पद्यते लोके अदृष्टत्वात् इति न तथोक्तं पञ्चरात्रे किन्नाम जीवान्मनो जायत इत्येवोक्त तस्मान्नेदमनुमान साधु इति सुज्ञेयमेतत् बालानामपि ।

किंच महाभारते संकर्षणाच्च प्रद्युनो मनोभूतः स उच्यते ( म. सा. शा. ३३९।४० ) 'स हि संकर्षणः प्रोक्तः प्रद्युम्नं सोऽप्यजजिनत्, । ( महाभा. ७३ ) इत्यादौ संकर्षणात् प्रद्युम्नसंज्ञकमनस उत्पत्तिरुक्ता सा च 'मयैव कथितं सम्यक् तव मूर्तिचतुष्टयं' ( महाभा. शा. ३३९।४६ ) इति वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाना परमात्मस्वरूपताप्रतिपादनात् परमात्मन उत्पत्त्यभावेन अनुपपन्नेव यद्यपि भाति तथापि तत्र यथा प्रद्युम्नसंज्ञकस्य भगवद्रूपस्य संकर्षणरूपादभिव्यक्तिरूपां जनि स्वीकृत्य प्रामाण्यं समर्थ्यते तथा पञ्चरात्रवाक्यस्यापि प्रामाण्योपपादनसंभवात् ।

प्रद्युम्नसंज्ञकान्मनस अनिरुद्धसंज्ञक अहकारो जायते इति पञ्चरात्रोक्तेविषये न काप्यनुपपत्तिः प्रदर्शिता शंकरभाष्ये । न संति च अनुपपत्तयः । अहंकारस्य मनस उत्पत्तिं बोधयतः सप्रतिपन्नप्रमाणभावस्य भारतवाक्यस्येव तथाविधपञ्चरात्रस्यापि प्रामाण्यमुपपाद्यत एव ।

किंच भारते ' प्रद्युम्नाद्योऽनिरुद्धस्तु सोहंकारः स ईश्वर· ( महाभा. ३३९।४१ ) ' प्रद्युम्नादनिरुद्धोहं सर्गो मम पुनः पुनः (७३) अनिरुद्धात्तथा ब्रह्मा तन्नाभिकमलोद्भवः ' (७४) इत्यादिवाक्यैः अहंकारस्य ईश्वरत्वस्य चतुर्मुख-

ब्रह्मजनकत्वस्य चोक्तत्वेन अहंकारस्येश्वरत्वोक्तेर्नाप्रामाण्यं तथा पञ्चरात्रस्य अहंकारपदेन ईश्वररूपबोधकत्वेऽपि नाप्रामाण्यम् ।

ॐ विज्ञानादिभावे वा तदप्रतिषेधः ॐ

इति सूत्रस्य अथापि स्यान्न चैते संकर्षणादयो जीवादिभावेनाभिप्रेयन्ते किं तर्हि ईश्वरा एवैते सर्वे ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिरैश्वरैर्धर्मैरन्विता अभ्युपगम्यन्ते। वासुदेवा एवैते सर्वे निर्दोषा निरधिष्ठाना निरवद्याश्चेति तस्मान्नायं यथावर्णित उत्पत्त्यसम्भवे दोष प्राप्नोतीति । अत्रोच्यते । एवमपि तदप्रतिषेध उत्पत्त्यसंभवस्याप्रतिषेधः प्राप्नोत्येवायमुत्पत्त्यसंभवो दोषः । प्रकारान्तरेणेत्यभिप्राय. । कथ यदि तावदयमभिप्राय परस्पराभिन्ना एवैते वासुदेवादयः चत्वार ईश्वरास्तुल्यधर्माणो नैषामेकात्मकत्वमस्तीति ततोऽनेकेश्वरकल्पनार्थक्यमेकेनैवेश्वरेणेश्वरकार्यसिद्धे सिद्धातहानिश्च भगवानेवैको वासुदेवः परमार्थतत्वमित्यभ्युपगमात् । अथायमभिप्रायः एकस्यैव भगवत एते चत्वारो व्यूहास्तुल्यधर्माण इति तथापि तदवस्थ एवोत्पत्त्यसंभवः। न हि वासुदेवात्संकर्षणस्योत्पत्ति. संभवति संकर्षणाच्च प्रद्युम्नस्य प्रद्युम्नाच्चानिरुद्धस्यातिशयाभावात् । भवितव्यं हि कार्यकारणयोरतिशयेन यथा मृद्घटयो. । न ह्यसत्यतिशये कार्यं कारणमित्यवकल्पते । न च पञ्चरात्रसिद्धान्तिभिर्वासुदेवादिष्वेकास्मिन् सर्वेषु वा ज्ञानैश्वर्यादितारतम्यकृतः कश्चिद्भेदोऽभ्युपगम्यते । वासुदेवा एव हि सर्वे व्यूहा निर्विशेषा इष्यन्ते न चैते भगवद्व्यूहाश्चतु.संख्यायामेवावतिष्ठेरन् ब्रह्मादिस्तंबपर्यंतस्य समस्तस्यैव जगतो भगव्द्यूहत्वावगमात् । इति व्याख्यानेन पंचारात्रोक्तस्य वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाना भगवद्रूपत्वस्य अयुक्तत्वात् । तत्प्रतिपादकं पंचरात्रमप्रमाणमिति यदुक्तं तन्न युक्तम् । वासुदेवसंकर्षणप्रद्युम्नानिरुद्धरूपाणा परमात्मस्वरूपताबोधकपञ्चरात्रवाक्यस्य तथाविधभारतवाक्यसंवादित्वेन प्रामाण्योपपत्तेर्बाधकाभावाच्च । न चानेकेश्वरकल्पनानर्थक्यदोष. । भागवतैर्वासुदेवा एव हि सर्वे व्यूहा इति वासुदेवादिरूपाणामभेदांगीकारात् । न च भागवतैः तेषां भगवद्रूपाणां विशेषानंगीकारात् एकस्य कारणत्वमपरस्य कार्यत्वं विशेषाभावेन संघटीतीति वाच्यं । न हि भागवता एकस्माद्भगवद्रूपादपरं भगवद्रूपं जायते इत्यभ्युपयन्ति येन त्वदुक्तदोषः स्यात् । किन्नाम स्वेच्छया अभिव्यज्यत इति ' यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।। अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहं ' इति गीतोक्तेः ।

वासुदेवा एव हि सर्वे व्यूहा; निर्विशेषा इष्यन्ते ( भागवतैः ) इत्यत्र व्यूह-शब्दस्य सकर्षणप्रद्युम्नादिरूपपरत्व स्वीकृत्य सर्वे व्यूहा सकर्षणादिरूपाणि वासुदेवा एव वासुदेवाभिन्ना एव इत्यर्थो भवतीति मत्वा तस्य यद्दूषणमुक्तं शङ्कराचार्यैः 'न चैते भगवव्यूहाश्चतु संख्यायामेवावतिष्ठेरन् ब्रह्मादिस्तबपर्यंतस्य समस्तस्यैव जगत· भगवद्व्यूहत्वावगमादिति' तदयुक्तं । वासुदेवसंकर्षणप्रद्युम्नानिरुद्धानामेव भगवद्रूपत्वं नान्येषामिति कुत्राऽपि नोक्तम् । प्रत्युत मत्स्यादिदशरूपाणि केशवादिचतुर्विंशतिरूपाणि विश्वादिसहस्ररूपाणि इत्यनेकशो मूर्तीना भगवद्रूपत्व-मुक्तं इति ' चतु सख्यायामेवावतिष्ठेरन् इत्युक्तिरनुक्तोपालंभरूपैव ।

यच्चोक्तं ब्रह्मादिस्तबपर्यंतस्य समस्तस्य जगत· भगवद्व्यूहत्वावगमादिति तत्सकलशास्त्रविरुद्धं अद्वैतमतविरुद्धं च । कस्मिन्नपि शास्त्रे ( वेदे सूत्रेषु गीताया वा ) जडस्य जगत भगवद्रूपत्वानभिधानात् जन्यजनकभावेनाधाराधेयभावेन सर्वज्ञत्वासर्वज्ञत्वाभ्या पूर्णशक्त्यल्पशक्तिभ्यां च भगवता भेदस्यैवोक्तत्वात् । अद्वैतमतरीत्या असत्यस्य जगत· सत्येन ब्रह्मणा अभेदस्यायोगाच्च । ' मयैतत्कथित सम्थक् तव मूर्तिचतुष्टयं ' ॥ इति भारते भगवव्यूहस्य (भगवद्रूपाणा) चतुष्टयस्योक्तत्वेन त्वदुक्तरीत्या तस्याप्यप्रामाण्यप्राप्ते , तस्मात् नेद व्याख्यानं युक्तम् ।

## ॐ विप्रतिषेधाच्च ॐ

इति सूत्रस्य विप्रतिषेधश्चास्मिञ्शास्त्रे बहुविध उपलभ्यते गुणगुणित्वकल्पनादिलक्षण· ज्ञानैश्वर्यशक्तिबलवीर्यतेजांसि गुणा आत्मान एवैते भगवन्तो वासुदेवा इत्यादिदर्शनात्... तस्मादसंगतैषा कल्पनेति सिद्धम्,इति यव्याख्यानं तदप्ययुक्तम् । भिन्नभिन्नोपनिषत्सु सत्यज्ञानानंदादीना ब्रह्मरूपताप्रतिपादकाना सत्यं ज्ञानमित्यादिवाक्याना, परमात्मगुणत्वप्रतिपादकाना ' तदैक्षत ' ' परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ' इत्यादिवाक्याना एकस्यामेवोपनिषदि ' आनदो ब्रह्मेति व्यजानात् ' ' आनंद ब्रह्मणो विद्वान् ' इत्यादीनां गुणगुणित्वबोधकाना वाक्याना चोपालभेन प्रकाशस्वरूपस्यापि सवितु· प्रकाशत इति व्यवहारसिद्धप्रकाशाश्रयत्ववत् ईक्षणादि ( ज्ञानादि ) रूपस्यापि ब्रह्मणः ऐक्षत इत्याद्युक्तक्षणाद्याश्रयत्वमुपपाद्य यथा अविप्रतिषिद्धत्वं कथ्यते शकराचार्यै· तथा ' ज्ञानैश्वर्यशक्तिबलवीर्यतेजासि गुणा आत्मान एवैते भगवन्तो वासुदेवा ' इति एकस्यैव गुणगुणित्वप्रतिपादकपंचरात्रस्यापि अविप्रतिषिद्धता संपाद्य प्रामाण्यं

वक्तव्यम् । अन्यथा एकस्यैव गुणगुणित्वप्रतिपादकाना पूर्वोदाहृतवेदवाक्यानाम-प्यप्रामाण्यप्रसंगात् । न चान्यतरपक्षपाते कारणमस्ति ।

यच्चोक्तं विप्रतिषेधाच्च इति सूत्रस्य यत् वर्णनान्तरं वेदविप्रतिषेधश्च भवति चतुर्षु वेदेषु पर श्रेयो लब्ध्वा शांडिल्य इदं शास्त्रमधितगवानित्यादि वेदनिदादर्शनात् तस्मादसंगतैषा कल्पना इति तदप्ययुक्तम् । एवंरीत्या वेदनिदाबोधकाना बहूनां वाक्याना वेदे पुराणेषु च दर्शनात् । तथा हि छादोग्ये "अधीहि भगव इति होपससाद सनत्कुमारं नारदस्तं ५ होवाच यद्वेत्थ तेन मोपासीद ततस्त ऊर्ध्वं वक्ष्यामीति स होवाच ऋग्वेदं भगवो अध्येमि यजुर्वेद ५ सामवेदमाथर्वणं....... सोऽहं भगवो मंत्रविदेवास्मि नात्मवित् " । इति सनत्कुमारं प्रत्यध्ययनार्थं नारदो गत. । तदा सनत्कुमारस्तमाह कि भवता अधीतं तन्मह्यं निवेदय तत ऊर्ध्वं उत्तरग्रंथान् तेऽह वक्ष्यामि इति । ततो नारदः प्रत्याह ऋग्वेदाद्याः सर्वे वेदाः शिक्षादिवेदागानि अन्यानि सर्वाण्यपि शास्त्राणि मयाधीतानि तथापि मन्त्रविदेवास्मि न मोक्षसाधनात्मज्ञानवान् इति वेदनिदा श्रूयते ।

यदि विद्याच्चतुर्वेदान्सांगोपनिषदान् द्विजः । न चेत्पुराणं संविद्यान्नैव स स्याद्विचक्षणः ॥ इति पुराणे सागसोपनिषत्सर्ववेदार्थज्ञानेऽपि पुराणज्ञानमन्तरा पण्डितो न भवतीति वेदनिन्दा श्रूयते ।

यदि वेदनिंदाश्रवणमात्रेण पञ्चरात्रमप्रमाणं स्यात् । छांदोग्यादिकमप्यप्रमाणं प्रसज्येत ।

ननु ऋग्वेदादयो महागुरूपदेशमन्तरा न समीचीनज्ञानजननाय प्रभवन्ति गहनार्थत्वात् ।

तथा ' इतिहासपुराणाभ्यां वेद समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रचलिष्यति ॥ इत्युक्त्यनुसारेण उपबृंहकेतिहासपुराणाभावे वेद. बिभेति न समग्रं स्वार्थं प्रकटयति अतः ब्रह्मसूत्रैरिव इतिहासपुराणाभ्यामपि वेदास्योपष्टंभनमावश्यकमिति सूचयत् ' न चेत्पुराणं ' इति पुराणवाक्यं वेदानां अतिगंभीरार्थत्वं प्रकटयत् न निन्दति इति चेत् पञ्चरात्रमपि शाडिल्यगाथामुखेन वेदानामतिगंभीरार्थत्वादल्पमतीना चतुरर्भिरपि वेदैर्ज्ञानासंभवात् एतच्छास्त्रमधिगंतव्यमिति बोधयत् वेदानतिगंभीरार्थत्वेन स्तौति न तु निन्दति इति न पञ्चरात्रे वेदविप्रतिषेधः क्रियते । इति न पञ्चरात्रस्याप्रामाण्यं सिध्यति । तस्मान्नेदं युक्तं व्याख्यानम् ।

॥ द्वितीयो भागः समाप्तः ॥



श्री १०८ श्रीमत्सत्यप्रमोदतीर्थश्रीपादाः ।



# प्रमाणानि त्रीण्येव उपमानादीनां तत्रैवान्तर्भावः ।

अद्वैततत्त्वसुधाया द्वैताद्वैतमतविप्रतिपन्नप्रक्रियासंग्रहे "(द्वैतमते) प्रत्यक्षानुमानशब्दा एव प्रमाणानि, अन्येषा तत्रैवान्तर्भावः यत्र (अद्वैतमते) प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धयः षट् प्रमाणानि" इत्युक्तम् । तदत्र स्वपक्षस्थापनं परपक्षनिराकरणं च उपरिष्टात् कर्तुकामाः किञ्चिदावश्यकं प्रास्ताविकं वाचकबुद्धिसौकर्याय करिष्यामः ।

तथाहि मानाधीना मेयसिद्धिरिति सर्वे समयकारा अभ्युपयन्ति । मानमेययोः समानसत्ताकत्वमपि अद्वैत्यतिरिक्ताः सर्वे परीक्षका· उररीकुर्वन्ति । मानशुद्धिर्यावती, मेयशुद्धिरपि तावत्येव भवितुं प्रभवति । तत्र प्रमाणसंख्याऽपि विशेषतो मननीयतामश्नुते । "यद्वै किञ्चन मनुरवदत् तद्भेषज"मिति शंकराचार्योपन्यस्तश्रुतिप्रख्यापितमहामहिमशाली मनु प्रमाणानि त्रीण्येव इति कण्ठत उद्घोषयामास । तथाहि मानव प्रमाणम् । —

"प्रत्यक्षचानुमानच शास्त्र च विविधागमम् ।
त्रय सुविदित कार्यं धर्मशुद्धिमभीप्सता" ॥

अत्र कुल्लूकटीका "तदेव च प्रमाणत्रयं मनोरभिमतम् । उपमानार्थापत्त्यादेश्चानुमानान्तर्भाव" इति । उपर्युक्तप्रमाणत्रयापेक्षया न्यूनाधिकप्रमाणान्यवलम्बमानाः प्रामाणिकपरित्यागदोषभाजो वा अप्रामाणिककल्पनाकलङ्किनो वा भवन्ति इत्यतिरोहित सर्वेषा सुविचारशालिनाम् । यथा प्रत्यक्षमेकमेव प्रमाणमिति स्वीकुर्वतः चार्वाकस्य मते महान् प्रामाणिकपरित्यागो दरीदृश्यते । प्रत्यक्षमनुमानं च द्वे एव प्रमाणे इति मतमातिष्ठमानस्य बौद्धस्य मतेऽपि प्रमाणपरित्यागपरिमितं प्रामाणिकहानं प्रकटीभवति । एवमेव एतदतिरिक्तप्रमाणावलम्बं कुर्वाणा· नैयायिका अध्वरमीमांसकाश्च अप्रामाणिकातिरिक्तप्रमाणकल्पनानुसारेण अप्रामाणिकपदार्थप्रपञ्चनं वितन्वते स्वस्वशास्त्रेषु ।

तत्र त्रीण्येव प्रमाणानीति श्रीमदानन्दतीर्थाः । परमार्थतः किञ्चिदपि प्रमाणमनङ्गीकुर्वाणाः ज्ञानदशाया प्रमाणसत्तामप्यसहमानाः मायावादिन प्रमाणषट्कमत पुरस्कुर्वन्ति व्यवहारादिप्रसिध्यर्थम् । वेदान्तभाष्यकारा· प्रायश· सर्वे शंकराचार्यवर्जं मन्वाद्युक्तप्रमाणत्रयमवलम्ब्य स्वस्वसमीहितसिद्धान्तं समर्थयन्ति । तत्र अमीषां समेषां वेदान्तिनामाचार्याणा वेदान्तः प्रस्थानत्रयप्रतिष्ठित· इति सुविदित

सर्वेषाम् । तादृशं च प्रस्थानत्रयम्--उपनिषत्, गीता, ब्रह्मसूत्राणि च इत्यत्रापि न विवाद. । त्रिष्वपि प्रस्थानेषु प्रमाणत्रयमेव प्रख्यापितम् ।

तथाहि " आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः " इतीहिश्रुतिः । अत्र परममहाप्रमेयम्—आत्मा—परमात्मा । तद्विषये द्रष्टव्यत्वोक्त्या दर्शनं—प्रत्यक्षं प्रमाणत्वेन उक्तं भवति । श्रोतव्य इत्यस्य आचार्योपदिश्यमानागमरूपशब्दजन्यज्ञानविषयताशाली संपादनीय इत्यर्थः । " आचार्यात् आगमतश्च श्रोतव्यः " इति शंकराचार्यैर्भाषितत्वात् । अनेन आगमप्रामाण्य विवृत भवति । **" श्रोतव्यः श्रुतिवाक्येभ्यः मन्तव्यश्चोपपत्तिभि. "** इति प्रमाणमपि श्रुतिवाक्यानां श्रुत्यनुसारिवाक्यानां च प्रामाण्यं ग्राहयति । ' श्रवणं शब्दज ज्ञान मित्यपि उक्तमेवार्थं दृढयति । मन्तव्य इत्यस्य उपपत्तिजन्यज्ञानविषयीकर्तव्य इत्यर्थः । अनेन उपपत्त्यपरपर्यायस्य अनुमानस्य प्रामाण्यमुक्तं भवति । " प्रत्यक्षावगमं धर्म्यम् " " ऋषिभिर्बहुधा गीत छन्दोभिर्विविधै पृथक् ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितै " इत्यादिगीतावचनैः प्रत्यक्षस्य, छन्दउपलक्षितागमस्य, हेतोः—अनुमानस्य च प्रामाण्यं प्रोच्यते । ब्रह्मसूत्राण्यपि प्रमाणत्रित्वमेव अनुमन्यन्ते । तथाहि—" शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्, " " दृश्यते च " " युक्तेः शब्दान्तराच्च, " " श्रुतेस्तु शब्दमूलत्वात्, " " उपपद्यते चाप्युपलभ्यते च, " " अपि संराधने प्रत्यक्षानुमानाभ्याम्, " " दर्शनाच्च, " " उपपत्तेश्च " " फलमत उपपत्ते. " " वाड्मनसि दर्शनात् शब्दाच्च" " स्थितिमाह दर्शयतश्चैव प्रत्यक्षानुमाने " इत्यादीनि सुस्पष्टमेव प्रमाणत्रयमुपाददते । " श्रुतिः प्रत्यक्षमैतिह्यमनुमानं च जाग्रति " इति विवेकचूडामण्युपात्तं प्रमाणमपि श्रुति—ऐतिह्यभेदेन द्विविधमागमं प्रत्यक्षमनुमानं च प्रमाणत्वेन प्रतिपादयति ।

एवं सत्यपि वेदान्तित्वेन आत्मान ख्यापयन्तोऽपि अद्वैतिनः प्रमाण षट्कमभ्युपगच्छान्ति इति महत् चित्रम् । तत्र रहस्यमेवं वर्तते । अनुमानदूषकत्वेन उद्भाव्यमानाः दोषाः नैकसख्याकाः वर्तन्ते । जगन्मिथ्यात्वं प्रत्यक्षतः साधयितुं न शक्यते । तेन तस्य सत्यत्वस्यैव सिद्धेः । आगमतोऽपि न समर्थयितुं शक्यते, जगत्सत्यत्वप्रतिपादकागमानां बहुलमुपलम्भात् । प्रत्यक्षेण जगत्सत्यत्वस्य सिद्धत्वादेव अनुमानानि सर्वाणि बाधितानि भवन्ति । अतः कथं जगन्मिथ्यात्वं साधनीयमिति भृश व्याकुलमनाः प्रतारणपटुरद्वैती अनुमानमेव अर्थापत्तिरूपनामान्तरेण उपन्यस्य अनुमानदोषेषूद्भावितेषु ' भ्रान्ता यूयम् । नेदमनुमानम् ।

इयमर्थापत्तिर्नाम प्रमाणान्तरम् नात्र अनुमानदोषा अवकाशं लभेरन् तद्दोषाणामनुमानमात्रदूषकत्वात् " इत्यादिरीत्या नेत्रयोः धूलिप्रक्षेपं कर्तुमीहते । एवमेव ब्रह्मसाक्षात्कारेण समूलमविद्यायामुत्खातायां ब्रह्मसाक्षात्कारवतः प्रपञ्चः नास्ति नासीत् न भाविष्यति इति प्रतीतिविषयो भवति इति तेनोच्यते । ब्रह्मज्ञानिनः ज्ञानोत्पत्यनन्तरमपि तदतिरिक्तैः सर्वैः प्रपञ्चः अध्यक्षीक्रियते । अतः कथं नास्ति इति प्रतीतिविषयत्वं तस्य इति आशङ्कायां अज्ञानिनः प्रत्यक्षत्वेऽपि ज्ञानिना अनुपलभ्यमानत्वात् तस्य अभावः निश्चीयते, मिथ्यात्वं अपरोक्षीक्रियते इति । प्रपञ्चाभावप्रत्यक्षं भवति इत्युक्ते आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेन इत्युक्तरीत्या मनइन्द्रियादिपदार्थसन्निकर्षः भेदमाक्षिपेत्, तन्माभूत इति कपटाभिसन्धिना अनुपलब्धिप्रमाणेन प्रपञ्चाभावः ज्ञानिनः सिद्धः इति प्रतिपादयति मायावी मायावादी—

" यदि सत्य भवेद्विश्वं सुषुप्तावुपलभ्यताम् ।
यन्नोपलभ्यते किञ्चिदतोऽसत्स्वप्नवन्मृषा " ॥२३६॥ (वि. चू.)

इति श्लोके यदि विश्वं सत्यं भवेत् तर्हि सुषुप्तावुपलभ्येत । नोपलभ्यते, अत सत्यं न भवति इति अनुपलब्धेः विश्वमिथ्यात्वं सिध्यति इत्युक्त शंकराचार्यैः । तदिद व्याहतम् । तैरेव दृश्यत्वहेतुना विश्वमिथ्यात्वं साध्यते । दृश्यत्वमुपलभ्यमानत्वान्नान्यत् । यदि इदानीमनुपलभ्यमानत्वहेतुना नाम दृश्यत्वाभावहेतुना मिथ्यात्वं साध्यते कथं न व्याहति । ननु न वयं अनुपलभ्यमानत्वहेतुना मिथ्यात्वं साधयाम । नेयमनुमानप्रणाली । अपि तु अनुपलब्धिरूपस्वतन्त्रप्रमाणगोचरत्वं मिथ्यात्वस्य वदाम इति चेत् । अयमेव प्रतारणप्रकारः इति ब्रूमः । अनुपलब्धिप्रमाणगोचरत्वम् अनुपलब्धिज्ञाप्यत्वम् अनुपलब्धिसाध्यत्वं इति अनर्थान्तरम् । यदि अनुमानविधया उच्येत व्याहतिशङ्का भवेत् सा माभूत् इति सा प्रणाली निन्हुता । भवतु तावत् अनुपलब्धेः स्वतंत्रप्रमाणत्वं, तथापि प्रपञ्चे अनुपलभ्यमानत्वं अदृश्यत्व वर्तते इति जातम् । तथाच दृश्यत्वहेतोरसिध्या न मिथ्यात्वसाधकत्वम् । इत्यलं पल्लवितेन ।

तदिदानीं प्रमाणत्रित्वसमर्थनार्थं उपमानार्थापत्त्यनुपलब्धिस्वरूपपरीक्षां विधाय क्लृप्तप्रमाणेष्वन्तर्भावं समर्थयाम । तद्विषये चिरन्तननवीनपरीक्षकसम्मतिमपि प्रदर्शयिष्यामः । तत्र तत्र अद्वैततत्त्वसुधाकारजीवातुभूत—न्यायचन्द्रिकासमीक्षामपि विधास्यामः ।

## अथ उपमानस्य पृथक् प्रामाण्यभङ्ग.

तत्र प्रत्यक्षानुमानागमभेदेन त्रीण्येव प्रमाणानि । इतरेषां प्रमाणानामत्रैवान्तर्भावः । तत्र तावत् उपमानस्य पृथक् प्रामाण्यं नास्ति । तथा चोक्तं प्रमाणलक्षणटीकायाम् । " सादृश्यप्रमासाधनमुपमानम् । तत्त्रिविधम् । गृह्यमाणे स्मर्यमाणप्रतियोगिकप्रमासाधनम् । यथा गां दृष्टवतो वनं गतस्य गृह्यमाणे गवये गोसादृश्यप्रमासाधनमुपमानम् । गोसदृशोऽय गवय इति । गृह्यमाणप्रातियोगिकं स्मर्यमाणगतसादृश्यज्ञानं स्मर्यमाणप्रतियोगिकगृह्यमाणगतसादृश्यप्रमासाधनम् । यथा गामनुभूय वनं गतस्य गवये गोसादृश्यज्ञान स्मर्यमाणे गवि गृह्यमाणगवयप्रतियोगिकसादृश्यप्रमासाधनम् । गोसदृशोऽय गवयः । तस्माद् गवय सदृशो गौरिति । निर्देशवाक्यं सादृश्यप्रमासाधनम् यथा, यथा गौर्गवयस्तथेति । तदेतत्त्रयं क्रमेण प्रत्यक्षाद्यन्तर्भूतम् " इति । तत्र आद्यस्य प्रत्यक्षेऽन्तर्भावः तृतीयस्य शद्बेऽन्तर्भावः स्पष्टः । द्वितीयस्य अनुमान एवान्तर्भावः । तथाहि विमतो गौः गवयसदृशः गवयगतसादृश्यप्रतियोगित्वात् । यो यत्सादृश्यप्रतियोगि स तत्सदृशः यथा यमो यमान्तरेण इति ।

" अकृतसमयसंज्ञास्मरणसहायं तत्समभिव्याहृतवाक्यार्थप्रत्यभिज्ञाप्रत्यक्षमुपमानम् । संज्ञासंज्ञिसबन्धप्रतिपत्तिस्तत्फलम् " इत्यन्ये । साधर्म्यं वैधर्म्यं तद्धर्ममात्र च, तद्भेदात् तत्प्रतिसन्धानात्मकमुपमान त्रिधा भिद्यते । तदेतत्त्रितयमनुमान एव अन्तर्भवति । विमतः गवयशद्बवाच्यः अगोत्वे सति गोसदृशत्वात् व्यतिरेकेण घटवदित्यादिप्रयोगसंभवात् । अतः उपमानस्य पृथक् प्रामाण्यं नास्ति। शाबरोपमानस्य यथायथं प्रत्यक्षाद्यन्तर्भावस्य तार्किकाभिमतोपमानस्य अनुमानान्तर्भावस्य समर्थितत्वात् ।

यत्तूक्त न्यायचन्द्रिकायां—" न च गवयसादृश्यविशिष्टगोज्ञानं प्रत्यक्षफलम्; सादृश्यस्य इन्द्रियसान्निकृष्टत्वेन प्रत्यक्षत्वेऽपि सादृश्यविशिष्टस्य गोरिन्द्रियासन्निकृष्टत्वेन सादृश्यविशिष्टगोज्ञानस्य प्रत्यक्षफलत्वानुपपत्तेः । न चेदं स्मृतिरेव; पूर्वं गवयानवगतौ गवयसादृश्यविशिष्टगोरननुभवात् । तस्माद्गवयसादृश्याविशिष्टगोज्ञानं मानान्तरम् । तत्साधनं च गोसादृश्यविशिष्टगवयज्ञानमिति स्थितम् " इति तन्न । गवयसादृश्यविशिष्टगोज्ञानस्य अनुमानफलत्वाङ्गीकारात् । विमतो गौः गवयसदृशः गवयगतसादृश्यप्रातियोगित्वात्; यो यत्सादृश्यप्रातियोगी स तत्सदृशः यथा यमो यमान्तरेण इति प्रयोगसम्भवस्योक्तत्वात् । एतेन यदप्युक्तं

तत्रैव "मदीया गौः एतत्सादृश्यवती खुरपुच्छादिमत्त्वात्; एतद्गवयवत् इत्यनुमानादस्तु तत्सिद्धिरितिचेन्न; साध्याविकलत्वाद्दृष्टान्तस्य। न ह्ययं गवयः एतत्सदृशः। अन्यस्य अन्येन सादृश्यं वैसादृश्यं वा, न स्वेनैव, प्रसिद्धिविरोधात्" इति,। तदपि निरस्तम्। तदुपेक्षितानुमानस्य दुष्टत्वेऽपि अस्मदुपदर्शितानुमानस्य साध्यवैकल्यादिदृष्टान्तदोषशून्यत्वात्। चैत्रात् मैत्रः दीर्घः इति प्रतीतौ मैत्रात् चैत्रः ह्रस्वः इति प्रतीतिः यथा अर्थापत्तिरूपानुमानविशेषफलम्, मैत्राच्चैत्रस्य ह्रस्वत्वमन्तरेण मैत्रस्य चैत्रात् दीर्घत्वानुपपत्तेः। एवं गवि गवयसादृश्यं विना गवये गोसादृश्यस्य अनुपपत्त्या, गवि गवयसादृश्यं ज्ञायते। सादृश्यं प्रतियोगिनिरूप्य, ह्रस्वत्वादिक नैतादृशमित्यपि न; ह्रस्वत्वस्यापि अवधिनिरूप्यत्वावश्यभावात्। अवधेश्च प्रतिसंबन्धिरूपप्रतियोगिस्वरूपत्वात्।

सादृश्यज्ञानस्य प्रमाणान्तरत्वे वैसादृश्यज्ञानस्यापि प्रमाणान्तरत्वं स्यात्। ननु गवयनिष्ठधर्माभावो महिषे वैधर्म्यमनुपलब्ध्या गम्यते। तस्य अभावत्वादिति चेन्न, अनुपलब्ध्याः अपि यथायथं प्रत्यक्षादिष्वन्तर्भाव्यत्वात्। किं च तद्वैसादृश्यं न केवल तन्निष्ठधर्माभावः, किन्तु तन्निष्ठधर्मविरुद्धधर्मवत्त्वमपि। तस्य अभावभिन्नत्वेन अनुपलब्ध्यगोचरत्वमेव। वैसादृश्यस्य प्रमाणान्तरत्वे आपादिते "क्लृप्तकरणादुपपत्तौ मानान्तरकल्पनागौरवायोगात्" इति यत् न्यायचन्द्रिकोक्तमुत्तरं तदेव सादृश्यस्य पृथक्प्रामाण्यवादिनं प्रत्यपि वक्तुं शक्यते। यथाहुः कुसुमाञ्जलिकारा —

साधर्म्यमिव वैधर्म्यं मानमेव प्रसज्यते।
अर्थापत्तिरसौ व्यक्तमिति चेत् प्रकृते न किम्।

यदप्युक्तं न्यायचन्द्रिकायाम् "सा गौः अनेन सदृशी, स्वप्रतियोगिकसादृश्येन अस्य अवच्छेदकत्वात्, स्वसादृश्येन यत् यस्य अवच्छेदकम् तत्तेन सदृशं दृष्टं यथा भ्रात्रन्तरमित्यनुमानात् तत्सिद्धिरिति चेन्न। अप्रसिद्ध विशेषणत्वात्, दृष्टान्ते साध्यसाधनोभयवैकल्याच्च। न हि दृष्टान्तस्य उभय वैकल्ये सामान्यतोदृष्टोऽपि साधीयान्" इति तदपि न;

एव सति सामान्यतो दृष्टानुमानस्य सर्वथा उच्छेदप्रसङ्गात्। सामान्यतोदृष्टानुमानस्य लक्षणं तु साध्यतावच्छेदकभिन्नव्यापकतावच्छेदककत्वे सति हेतुतावच्छेदकभिन्नव्याप्यतावच्छेदककत्वम्। अत्र सर्वत्र दृष्टान्ते निश्चितसाध्यतावच्छेदकावच्छिन्नहेतुतावच्छेदकावच्छिन्नवत्त्वं नावश्यकम्। किंतु निश्चितसाध्यताव-

च्छेदकभिन्नव्यापकतावच्छेदकधर्मावच्छिन्नवत्वे सति निश्चितहेतुतावच्छेदकभिन्न-व्याप्यतावच्छेदकधर्मावच्छिन्नवत्त्वमावश्यकम् । तस्य च अत्र विद्यमानत्वात् ।

यदप्युक्तं न्यायचन्द्रिकायाम्—“ समीरितं च तिमिरारिणा ” इत्युपक्रम्य “किंचित् वस्तु आश्रयमात्रग्रहणापेक्षम्, किंचित् स्वाश्रयप्रतियोग्युभयग्रहणा-पेक्षम् । परिमाणं हि आश्रयमात्रग्रहणापेक्षम्, प्रतियोग्यग्रहणेऽपि पूर्वं परिमाण-व्यवहारदर्शनात् । सादृश्यग्रहणं तूभयग्रहणापेक्षमेव; केवलाश्रयमात्रग्रहणे पूर्वं सादृश्यव्यवहारादर्शनात् ” इति तदप्यचारु । यतः परिमाणमपि उभयग्रहणापेक्षम् । सादृश्यपरिमाणयोरेतस्मिन् अंशे लेशतोऽपि न विशेषोऽङ्गीक्रियते अनुभवशरणैः परीक्षकैः । सादृश्यमपि नोभयग्रहणापेक्षमिति अनुभवकलहावतारे तूष्णींभाव एव शरणीकरणीयः स्यात् परेण । अतः अस्मदुक्तमेव साधु । तदेतत्सर्वमभिसंधायैव श्रीन्यायसुधायां सारं सरलं प्रतिपादितं श्रीजयतीर्थश्रीमच्चरणैः । तथाहि—

“ गृह्यमाणे वस्तुनि स्मर्यमाणप्रतियोगिकसादृश्यदर्शनात् स्मर्यमाणे गृह्यमाण-प्रतियोगिकसादृश्यप्रतीतिरुपमानम् । यथा गामनुभूय वनं गतो गवये गोसादृश्य-मुपलभ्य गवि गवयसादृश्यं प्रत्येति । यद्यपि नैतत्स्मरणम् । प्रतियोगिनो गवयस्य प्रागननुभूतत्वेन गोगतसादृश्यस्याननुभूतत्वात् । न हि सामग्र्यभावे योग्येन्द्रियस-न्निकर्षसद्भावमात्रेणानुभवः शक्योऽङ्गीकर्तुम् । प्रतियोगिज्ञानस्यान्वयव्यतिरेकाभ्या सादृश्यप्रतीतौ हेतुत्वमवधृतमेव । निर्विकल्पकप्रतीत्यभ्युपगमस्त्वप्रामाणिक एव । तथापि यो यत्सदृशः स तत्सदृश इति व्याप्तिबलेन गमकत्वादनुमानमेव । व्यधिकरणत्वान्नेति चेत्तस्यादोषताया निरूपितत्वात् । एकाधिकरणतायाः शक्यसंपादनत्वाच्च । तस्माद्वैसादृश्यदर्शनवत्सादृश्यदर्शनमपि न पृथक्प्रमाणम् । अन्ये तु संज्ञासंज्ञिसंबन्धप्रमितिफलमनधिगतसंगतिसंज्ञास्मरणसहायं तत्समभिव्या-हृतातिदेशवाक्यार्थप्रत्यभिज्ञानमुपमानम् । अतिदेशवाक्यार्थश्च क्वचित्साधर्म्यं क्वचि-द्वैधर्म्यं क्वचिद्धर्ममात्रमिति त्रिविधो भवति । यथाऽव्युत्पन्नगवयपदार्थो गोसदृशो गवय इति अतिदेशवाक्यानुभूतमर्थं प्रत्यक्षे (ण) गवये प्रत्यभिजानन् गवयपदं स्मरन् गवयपदस्य गवये संगतिमवगच्छति, तदिदं साधर्म्योपमानम् । वैधर्म्यो-पमानं तु गवादिवत् द्विशफो न भवत्यश्व इति वाक्यार्थप्रत्यभिज्ञानादश्वेऽश्वपद-संगतिग्रहणम् । धर्ममात्रोपमानमपि दीर्घग्रीवत्वादिधर्मवान्पशुरुष्ट्र इति वाक्यार्थ-

प्रत्यभिज्ञानादुष्ट्रपदव्युत्पत्तिरिति मन्यन्ते । तत्र यद्यपि संज्ञासंज्ञिसंबन्धप्रतिपत्तिः प्राग्गवयादिदर्शनादतिदेशवाक्येन प्रयोगादिना लिङ्गेन वा भवितुं नार्हति । संबन्धिनोऽनवगमे संबन्धस्यावगन्तुमशक्यत्वात् । तथापि गवयादिदर्शनोत्तरकालं साधर्म्यादिना लिङ्गेनैव भविष्यति । एतस्यां दशायामतिदेशवाक्यं व्याप्तिग्राहकत्वेनोपयुज्यते । यथा हि पृथिवीत्वाभिसबन्धात् पृथिवीतिव्यवहर्तव्येति लक्षणवाक्यं श्रुतवतः पृथिवीत्वाभिसम्बन्धं क्वचित् द्रव्ये पश्यतः अनुमानेनैव संज्ञासंज्ञिसंबन्धप्रतिपत्तिरभ्युपगता, तथा प्रकृतेपीति ।" अतः उपमानस्य पृथक्प्रामाण्य नाङ्गीकर्तव्यम् ।

**इत्युपमानस्य पृथक्प्रामाण्यभङ्गः**

—×—

**अथ अर्थापत्तेः पृथक्प्रामाण्यभङ्गः**

अर्थापत्तेरपि पृथक् प्रामाण्य नास्ति । तथाहि—

अर्थतः प्राप्तिरेवार्थापत्तिरित्यभिधीयते ।

अर्थतः– अनुपपद्यमानस्य अर्थस्य दर्शनात्–प्राप्तिः तदुपपादकार्थान्तर–प्रमिति —अर्थापत्तिरित्यभिधयिते । येन विना यन्नोपपद्यते तदुपपादकम् । अन्यदुपपाद्यम् । तत्र अनुपपद्यमानार्थदर्शनं करणम् । उपपाद्यविषयबुद्धिः फलम् । फलकरणयोरर्थापत्तिशद्वो वर्तते । फले अर्थस्य आपत्तिः कल्पना इति व्युत्पत्त्या । करणे अर्थस्य आपत्तिः कल्पना यस्या इति व्युत्पत्त्या । अनुपपत्तिज्ञानमेव च व्याप्तिज्ञानम् । अनुपपत्तिरविनाभाव इत्येतयोरेकार्थत्वेन नाम्नैव विवादपर्यवसानात् । वेदान्तपरिभाषायामपि " येन विनायदनुपपन्न तत् तत्र उपपाद्यम् । यस्य अभावे यस्य अनुपपात्ति तत् तत्र उपपादकम् " इति ।

अत्रोच्यते-अर्थापत्तिरपि अनुमान एवान्तर्भवति । यथा देवदत्तः रात्रिभोजनवान् दिवा अभुञ्जानत्वे सति पीनत्वात् । एवं दृष्टार्थापात्तिः अभिधानानुपपात्ति-अभिहितानुपपत्तिभेदेन द्विविधाऽपि श्रुतार्थापात्तिश्च अनुमान एवान्तर्भवतः । अर्थापत्तिस्थले अनुमिनोमीति नानुव्यवसायः, किंतु अनेन इदं कल्पयामीति । अतः न अर्थापत्तेरनुमानेऽन्तर्भाव इति वचनमपेशलम् । 'अनुमिनोमि' इत्यस्य 'कल्पयामि' इत्यस्य च एकार्थकत्वात् । अन्यथा 'कल्पयामि' इत्यनुव्यवसायसद्भावेन कल्पनायाः अर्थापत्त्यपेक्षया पृथक् प्रामाण्याङ्गीकारापातात् । अर्थापत्त्यनन्तर 'अर्थापयामि' इत्येव अनुव्यवसायोत्पत्त्यापत्तेश्च ।

भासर्वज्ञेन न्यायसारे त्रीण्येव प्रमाणानि इति व्यवस्थापितम् । यथा चोक्तम् । एवमेतानि त्रीण्येव प्रमाणानि । एतेषु एव उपमानार्थापत्तिसंभवैतिह्यादीनामन्तर्भावः । तत्र यथा गौ. एवं गवयः इत्युपमानं शब्देऽन्तर्भूतम् ।

अर्थापत्तेरप्यनुमानेऽन्तर्भावः । अविनाभावबलेनैव अर्थप्रतिपत्तिसाधनात् । अन्यथा नोपपद्यते इत्युक्ते सत्येवमुपपद्यते इति लभ्यते अयमेव अविनाभाव इति । यत्र सामान्याकारेण अन्वयग्रहण नास्ति यथा मुख्यकारणत्वाप्रतिबन्धशक्त्योः तत्र अर्थापत्ति पृथक् प्रमाणमिति चेन्न; मुख्यकारणत्वं नाम सकलसहकारिसाकल्यं यदनन्तरमेव कार्योत्पत्ति । सहकारिणो दृष्टादृष्टरूपा । न च तेषा साकल्यं क्वचिदप्यस्मदादिप्रत्यक्षम्, किन्तु कार्यैकसमाधिगम्यम् । तथा वन्ह्यादीनां दाहकत्वादिशक्तेः प्रतिबन्धकाभावोऽपि न प्रत्यक्षः । प्रतिबन्धकाना मणिमन्त्रादीनामनन्तत्वेन तदभावस्याप्यसंख्यातत्वात् । अतो मुख्यकारणत्वाप्रतिबन्धशक्त्योः सामान्याकारेणान्वयग्रहणाभावादनुमानासम्भवेऽर्थापत्तिरेव प्रमाणमित्यर्थः । परिहरति– न, तत्रापि केवलव्यतिरेक्यनुमानाव्यतिरेकात् । केवलव्यतिरेकी अर्थापत्तिरिति संज्ञाभेदमात्रम् । पदपञ्चिकायामेवं विवृतम्––

“ प्रयोगस्तु कार्योत्पत्तेः पूर्वक्षणे कारणानि सकलसहकारसमवेतानि सकलप्रतिबन्धकशून्यानि वा, अनन्तरमेव कार्योत्पादकत्वात् । यानि पुनरेव न भवन्ति न तान्यनन्तरमेव कार्योत्पादकानि, यथा केवलतन्तवो मणिप्रतिबद्धो-वन्हिर्वा ” इति ।

अन्वयाभावान्नैतदनुमानमिति चेन्न; केवलान्वयिनो हि व्यतिरेकाभावेन प्रमाणान्तरत्वप्रसङ्गादिति । अपिच प्रत्यक्षादिभेदाना केनचिद्वैधर्म्येण भेदात् प्रमाणान्तरत्वप्रसङ्गादिति । उपसंहरति--तस्मादविनाभाववशेन अर्थप्रतिपादकत्वादर्थापत्तिरनुमानमिति ।

न्यायकुसुमाञ्जलौ उदयनाचार्याः —

न च अर्थापत्तिरनुमानतो भिद्यते. लोके तदसंकीर्णोदाहरणाभावात् प्रकारान्तराभावाच्च ।

तथाहि––“ अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः ।

न मानयोर्विरोधोऽस्ति प्रसिद्धे वाप्यसौसमः ॥ जीवंश्चैत्रो गृहे नास्तीति अनुपपद्यमानमसति बहिः-- सद्भावे तमावेदयतीत्युदाहरन्ति । तत्र चिन्त्यते-

किमनुपपन्नं जीवतो गृहाभावस्येति । न हि अनियम्यस्य अनियामकं विना किञ्चिदनुपन्नम् । अतिप्रसङ्गात् । ननु स्वरूपमेव तत् । न तावद्बहिःसत्त्वेन कर्तव्यं,तदकार्यत्वात्तस्य। स्थितिरेव अस्य तेन विना न स्यादित्यस्य स्वभाव इति चेत् एवं तर्हि तन्नियतस्वभाव एवासौ,व्याप्तिरेव व्यपदेशमुखनिरूप्यायास्तथाव्यपदेशात् । कथ वा बहिःसत्त्वमस्योपपादकम् । नहि अनियामको भवन्नप्यनियम्यमुपपादयति, अतिप्रसङ्गादेव स्वभावोस्य, यदनेन बहिः सत्त्वेन गेहासत्त्वं क्रोडीकृत्य स्थातव्यमिति चेत्, सेयं व्याप्तिरेव अन्वयमुखनिरूप्या तथा व्यपादिश्यते इति । न वयमविनाभावमर्थापत्तावपजानीमहे । किन्तु तज्ज्ञानम् । न चासौ सत्तामात्रेण तदनुमानत्वमापादयतीति चेत्- न । अनुपपत्तिप्रतिसन्धानस्य अवश्याभ्युपगन्तव्यत्वात् । अन्यथा त्वतिप्रसङ्गात् । अर्थापत्त्याभासानवकाशाच्च ।

तथापि कथमत्र व्याप्तिर्गृह्यते इति चेत्—यदाऽहमिह तदा नान्यत्र, यदा नान्यत्र तदा नेहेति सर्वप्रत्यक्षसिद्धमेतत् । का तत्रापि कथन्ता ।

प्रमाणयोर्विरोधे अर्थापत्तिरविरोधोपपादिका, न त्वेवमनुमानामित्यपि नास्ति । विरोधेहि रज्जुसर्पादिवदेकस्य बाध एव स्यात्, नतूभयोः प्रामाण्यम् ।

धूमोऽपि वा अनुपपद्यमानतयैव वह्निं गमयेत् । न हि तेन विना असावुपपद्यते । विरोधोपि धूमाद्वह्निना भवितव्यम्, अनुपलब्धेश्च न भावितव्यमितिं ।

केवलव्यतिरेक्यनुमान पराभिमतमर्थापत्तिः. अन्वयाभावादिति चेत् एवमेतावता विशेषेण अनुमाने अर्थापत्तिव्यवहारं न वारयामः । तत्रानुमानव्यवहारः कुत इति चेत् अविनाभूतलिङ्गसमुत्पन्नत्वात् । तस्मादर्थापत्तिरित्यनुमानस्य पर्यायोऽयं तद्विशेषवचननं वा इति ।

तार्किकरक्षाया न्यायसारसंग्रहे च अर्थापत्तेरनुमानेष्वन्तर्भावो दर्शितः । 'तथाहि' इत्यादिना । तथाहि—अनुपपद्यमानार्थदर्शनात् तदुपपादकभूतार्थान्तरकल्पनमर्थापत्तिः । यथा जीवतो देवदत्तस्य गृहाभावदर्शनेन बहिर्भावस्य गृहभावदर्शनेन वा बहिरभावस्य कल्पनम् । तत्र तावत् बहिर्भावमन्तरेण गृहाभावस्य का अनुपपत्तिरिति वाच्यम् । तमन्तरेण असौ न भवतीति चेत् । न भवतीत्यस्यकोऽर्थः कि न जायते इति किं नावतिष्ठत इति । न प्रथमः, बहिर्भावाकार्यत्वात् गृहाभावस्य । न द्वितीयः शब्दान्तरेणाविनाभाव-

स्यैवाङ्गीकारात् । गम्येनाविनाहि गमकस्यानवस्थानमेवाविनाभावः । कीदृशंच बहिर्भावस्योपपादकत्वम् । न तावत् तज्जनकत्व तदकार्यत्वात्तस्येत्युक्तत्वात् । स्वसद्भाव एव गृहाभावस्यावस्थानमितिचेत् तर्हिव्यापकत्वमेवाभिहितं स्यात् । प्रमाणद्वयविरोध एव अनुपपत्तिरिति चेत् मैवं व्याहतं भाषिष्ठाः । प्रमाणयो : सतोर्विरोध एवानुपपन्नः । शुक्लोऽयं घटोऽयमितिवत्सहभावात् । विरुद्धयोश्च न प्रामाण्यं वस्तुनोद्वैरूप्यासम्भवेन रज्जुरियम्; सर्पोयमितिवदन्यतरस्य प्रामाण्याभावात् । न चात्र जीवनगृहाभावयोर्विरोधोऽस्ति । जीवत एव स्वात्मनो गृहाभावदर्शनेन जीवनगृहाभावयो सहसम्भवात् । जीवनप्रमाणेन जीविते प्रमिते जीवता क्वचित् स्थातव्यमिति देशसामान्यसम्बन्धेचावगते, तच्च जीवनं गृहे वा बहिर्वेति विषये सन्देहमात्र जायते, न प्रमाणभवप्रवर्तत इति नास्ति गृहाभावस्य प्रमाणविरोधः । अत एव जीवनाविशिष्टेन गृहाभावलिङ्गेन बहिर्भावानुमानं सुकरम् । जीवनस्य विशेषानिश्चयेऽपि सामान्यनिश्चयेन तद्विशिष्टस्य गृहाभावस्य लिङ्गत्वात् । यथा स्थाणुत्वपुरुषत्वानिश्चयेऽपि ऊर्ध्वद्रव्यमात्रनिश्चयेन तद्विशिष्टदेशादिकमवधार्य व्यवहारप्रवृत्तिः । प्रयोगश्च देवदत्तो बहिरस्ति विद्यमानत्वेसति गृहे असत्वात् । यो विद्यमानो यत्र नास्ति स ततोन्यत्रास्ति यथाहमिति । तथैव देवदत्तो बहिर्नास्ति मूर्तत्वे सति गृहे सत्त्वात् यथाहमिति । तस्मात्सिद्धमेव अनुपपद्यमानदर्शनात् तदुपपादकार्थान्तरकल्पनमनुमानमिति । अन्यथा अनुमानतया प्रसिद्धे धूमोदाहरणेऽपि धूमः स्वकारणं दहनमाक्षिपति प्रतिक्षिपति च अनुपलब्धिरिति प्रमाणद्वयविरोधात् पर्वतावाग्भागे दहनाभावः, परभागे च दहनावस्थानमित्यर्थापत्तितापत्तिः । यथाहुः उदयनाचार्याः—

" अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः । न मानयोर्विरोधोस्ति प्रसिद्धे वाऽप्यसौसमः " निष्कण्टकाव्याख्यायाम्—अत्रोदयनसम्मतिमाह । ' यथाहु ' रिति । अनियम्यस्य अयुक्ति. अनुपपत्ति न । अनियन्ता अव्यापकः उपपादको न भवति । तथा मानयोर्भावाभावग्राहिप्रमाणयोः पूर्वोक्तरीत्या विरोधश्च नास्ति । अतोऽर्थापत्तिरनुमानान्नभिद्यते इति भावः । अन्यथा प्रसिद्धे धूमाद्यनुमाने चासौ विरोधः सम । तस्याप्यर्थापत्तित्वापत्तिरित्यर्थः ।

तत्त्वचिन्तामणावुक्तं गङ्गेशोपाध्यायैः—व्यतिरेक्यनुमानसिद्धावर्थापत्तिर्नमानान्तरम्—तेनैव तदर्थसिद्धेः ।

उपपादकाभाववत्युपपाद्याभावनियम· अनुपपत्ति·। एवञ्च व्यतिरेकव्याप्तिमत· उपपाद्याद्व्यतिरेक्यनुमानमुद्रयैव साध्यसिद्धेः, किमर्थापत्त्या? तथाहि—देवदत्तो बहिः सन्, जीवित्वे सति गृहासत्त्वात्, यन्नैवं तन्नैवं, यथा मृतो गृहस्थितो वा। न च अन्यव्याप्त्या अन्यस्य गमकत्वेऽतिप्रसङ्ग·। साध्याभावव्यापकाभावप्रतिप्रतियोगित्वस्य नियामकत्वात्। न च अर्थापत्तौ स्वरूपसती व्याप्तिर्लिङ्ग नानुमाने इति वाच्यम्। अनुपपत्तेर्ज्ञानं विना कल्पनानुदयात् अर्थापत्त्याभासानवकाशाच्च। अस्तु तावदेवम्। तथापि जीविदेवदत्ताभावः गृहे वर्तमानो न बहिः सत्त्वे लिङ्गं, देवदत्तावृत्तित्वात्, बहिःसत्त्वगृहनिष्ठाभावयोर्व्यधिकरणत्वेन नियतसामानाधिकरण्यरूपव्याप्त्यभावाच्च। ननु भूमिनिष्ठालोकसंयोगस्य उपरिदेशे सयोगसम्बन्धेन सवित्रनुमापकत्वं न स्यात्, पक्षावृत्तित्वात्तस्य इति चेन्न; भूमि· सवितृसयुक्तोपरिदेशवती विजातीयालोकवत्वात् इति सामानाधिकरण्यसंपादनसम्भवात्। पर्वतो वन्हिमान् इत्यत्र पर्वतधर्मधूमस्मृतिसहितात् 'धूमो वन्हि विना नास्ती' त्यनुपपत्तिज्ञानात् वन्हिज्ञानं संभवति। ननु दृश्यमानो धूमो वान्हि विना अनुपपन्न इति यदा ज्ञायते तदाऽर्थापत्तिरेव। यदा तु अनुपपत्तिज्ञानं विना व्याप्यत्वेन प्रतिसन्धीयते, तदानुमानम्। तस्माव्द्यतिरेकव्याप्तिमुपजीव्य जीविदेवदत्तगृहाभावो बहिस्सत्त्वं कल्पयति इति अर्थापत्ते· पृथक् प्रामाण्यमङ्गीकर्तव्यम्। अन्यच्च गृहानिष्ठाभावप्रतियोगित्वस्य देवदत्तधर्मतया तदसन्निकर्षे प्रत्यक्षेण ज्ञातुमशक्यत्वम्। तथा च कथं तेन बहिः सत्त्वानुमानम्। इति चेत। अनुपपत्तिज्ञान विना व्याप्यत्वज्ञानमेव न संभवति। देवदत्तासनिकर्षेऽपि तस्य ग्रहनिष्ठाभावप्रतियोगित्वं प्रत्यक्षेण गृह्यते। तथाहि--गृहे देवदत्तस्याभाव इतिप्रत्यक्षं देवदत्तं षष्ठ्यर्थं चाभावसंबधं प्रतियोगित्वलक्षणं गोचरयति सम्बन्धज्ञानस्य सम्बन्धिद्वयविषयकत्वात्। प्रतियोगिना सममभावस्य संवन्धान्तराभावात्, गृहनिष्ठाभावप्रतियोगित्वे च प्रत्यक्षोपस्थिते स्मृतव्याप्तिवैशिष्ट्यमपि प्रत्यक्षेण सुग्रहम्। न च देवदत्तविशेष्यक बहिः सत्त्वव्याप्यगृहनिष्ठाभावप्रतियोगित्वज्ञानं नास्तीति वाच्यम्। पक्षवृत्तिलिङ्गपरामर्शमात्रस्य अनुमितिजनकत्वात्, आधिक्यस्य गौरवपराहतत्वात्। अत्र देवदत्तस्येति प्रतियोगित्वं, षष्ठ्यर्थ प्रकारः। न तु नेह देवदत्त इतिवत् संसर्गमर्यादया प्रतियोगित्वज्ञान; तेन प्रतियोगित्वत्वरुपव्याप्यतावच्छेदकावच्छिन्न-प्रतियोगित्वरूपलिङ्गलाभादनुमानावतार। अन्यथा वैशिष्ट्यविधया प्रतियोगित्वलाभेपि व्याप्यतावच्छेदकावच्छिन्नलिङ्गानुपस्थितौ

कथमनुमानं भवेदितिशङ्कानवकाशः । न चैव यत्रैव नेह देवदत्त इत्याकारकानुभवस्तत्रैवानुमानानवतारे अर्थापत्ति सावकाशेति वाच्यम् । अर्थापत्तावपि बहिःसत्त्वं विना गृहनिष्ठाभावप्रतियोगित्वस्यैवानुपपन्नत्वबुद्धिर्गमानिकेति । प्रतियोगित्वत्वावच्छिन्नोपस्थिति विना अर्थापत्त्यवताराऽनभ्युपगमात् । नन्वनुपपत्तिर्न व्यतिरेकव्याप्तिः किन्तूपपादकाभावे उपपाद्याभावावश्यभावः, स च व्यधिकरणयोरपि सुकरः । यदि देवदत्तस्य न बहिःसत्त्वं तदा गृहे सत्त्वावश्यभावः, यदा वा गृहे देवदत्ताभावस्तदा देवदत्तबहिस्सत्वावश्यभाव इत्यनुपपत्तिज्ञानस्य वैयधिकरण्येऽपि सभवादतो न प्रतियोगित्वेऽनुपपत्तिज्ञान कारणम् । मैवम् । अवश्यभावज्ञानस्य गमकत्वे धूमादावपि तथात्वापत्तेःधूमेसति अवश्य वह्निरितिज्ञानात् तथापि नार्थापत्तिर्मानान्तरम् , अवश्यभावेनैव गमकत्वेऽनुमानविलक्षणप्रकाराभावात् । ननु उक्तप्रत्यक्षस्य देवदत्तविषयकत्वे प्रमाणाभावः देवदत्त साक्षात्करोमीत्यनुव्यवसायाभावात्, अभाव साक्षात्करोमीत्यनुव्यवसायात् किन्तु तदव्यवहितपूर्ववर्तिस्मरणस्यैव देवदत्तो विषय इतिचेन्न, सबन्धप्रत्यक्ष एव सबन्धिद्वयं विषयः इति विभावनीयम् ।

ननु मयूरः पर्वतेतरे न नृत्यति, नृत्यति चेति ज्ञानानन्तरं पर्वते नृत्यतीति ज्ञानमास्ति । न च व्यतिरेकिणस्तत्संभवति पर्वतनृत्यस्य साध्यस्य अप्रतीतौ व्यतिरेकव्याप्त्यनिरूपणात् । न च पर्वतनृत्याप्रसिद्धौ तेन विनाऽनुपपत्तिप्रतिसन्धानमपि नेति कथमर्थापत्तिरपीति वाच्यम् । अधिकरणं विना अनुपपद्यमानं नृत्य प्रसिद्धाधिकरणबाधसहकृतं प्रसिद्धेतरमाधिकरणं कल्पयतीति चेत्, नः । मयूरनृत्यं साधिकरणकं नृत्यत्वादिति सामान्यतोदृष्टं प्रसिद्धाधिकरणबाधसहकृतं प्रसिद्धेतरं पर्वतमधिकरणमादाय नृत्यज्ञान जनयति । यद्वा पर्वतेतरे न नृत्यतीति शब्देन नृत्याभावबोधानन्तरं मयूरो नृत्यतीतिशब्दात् जायमान ज्ञान पर्वतनृत्यं गोचरयति । प्रसिद्धविशेषबाधसहकृतसामान्यज्ञानजनकप्रमाणस्य प्रसिद्धेतरं पर्वतमधिकरणविशेषमादाय ज्ञानजनकत्वनियमात्। यद्वा मयूरनृत्यं पर्वताधिकरणकं पर्वतेतरानधिकरणकत्वे सति साधिकरणकत्वात् पर्वतत्ववदित्यन्वयव्यतिरेकी। अत्र विशेष । इतरबाधसहकारेण पदानुपस्थितमपि शाब्दबोधे प्रकटीभूय भासत इति गुरुमतेनेदम् । अन्यथा मयूरो नृत्यति इति शब्दात् पर्वतेतराधिकरणकनृत्यबाधसहकारेण नृत्यविशेषसिद्धावपि नृत्यस्य पर्वतवृत्तित्वं तदुपस्थापकपदाभावादनुपपन्नमेव स्यादिति ध्येयम् । तस्मान्नार्थापत्तिरनुमानादतिरिच्यते इति ।

एतेन यदुक्तं न्यायचन्द्रिकायाम् किंचाविनाभावेन गमकं लिङ्गम्, न तथा अर्थापत्तिः गृहाभावबहिर्भावयोरेकप्रमाणेनास्फुरणादविनाभावग्रहणायोगादिति। तदसारम्। मण्युक्तरीत्या यदि देवदत्तस्य न बहिः सत्त्वं तदा गृहे सत्त्वावश्यं भावः। यदा वा गृहे देवदत्ताभावस्तदा देवदत्तबहिस्सत्त्वावश्यंभाव इत्यनुपपत्तिज्ञानस्यैव अविनाभावज्ञानरूपत्वात्। धूमानुमानेऽपि। धूमे सति अवश्य वन्हिरिति अवश्यंभावज्ञानस्य सत्त्वात्। अर्थापत्तिवादिनापि अवश्यभावस्य गमकत्वमङ्गीकृतम्। अवश्यंभावेनैव गमकत्वे अनुमानविलक्षणप्रकाराभावात्।

यदप्युक्तं न्यायचन्द्रिकायाम् " कतिपयकालदेवदत्तजीवनगमकगणितागमेन सामान्यतो देवदत्तसत्त्वं गम्यते, अनुपलब्ध्यापि गृहेऽसत्त्वमिति साधारणासाधारणप्रमाणविरोधः, तस्य बहि सत्त्वं कल्पयति सर्वत्र च अर्थापत्तौ साधारणासाधारणप्रमाणविरोध एव सामग्री। स एवानुपपत्तिरित्युच्यते। तदविरोधापादनाय विपयान्तर एवैकस्य स्थापन, सा अर्थापत्तिः इति। तदसाधु प्रमाणद्वयविरोधवचनस्य व्याहतत्वात्। यथोक्तं तार्किकरक्षायाम्–

" प्रमाणद्वयविरोध एव अनुपपत्तिरिति चेत् मैवं व्याहतं भाषिष्ठाः। प्रमाणयोः सतोः विरोध एवानुपपन्नः। शुक्लोयं घटोऽयमिति वत्सहभावात्। विरुद्धयोश्च न प्रामाण्यं वस्तुनोद्वैरूप्यासंभवेन रज्जुरियं सर्पोऽयमितिवदन्यतरस्य प्रामाण्याभावादिति। धूमानुमानेऽपि एतादृश्यविरोधस्य वक्तु शक्यत्वात्। धूमाद्वन्हिना भवितव्यम्, अनुपलब्धेश्च न भवितव्यमिति प्रमाणविरोधस्य वर्तमानत्वात्। इत्यर्थापत्तेः पृथक्प्रामाण्यं नास्ति।

तदुक्तं सुधायाम्– अनुपपद्यमानदर्शनादुपपादके बुद्धिरर्थापत्ति. । यथा जीवतोगृहाभावदर्शनाद्बहिर्भावबुद्धिः। तत्र जीवतो गृहाभावस्यानुपपद्यमानता नाम किं सर्वथाऽसंभव, किंवा बहिर्भावेन विनाऽनवस्थानम्। आद्ये दहनशैत्यमप्यनुमानाभासात् प्रतीतं किं कमप्यर्थं न बोधयेत्?। तत्प्रतीन्तिर्भ्रांतिरिति चेत्। सर्वथाऽसंभवतो गृहाभावस्यापि प्रतीति कथं न भ्रान्तिः। दहनशैत्यस्योपपादकं नास्तीति चेन्न। सर्वथाप्यसभवतो गृहाभावस्यापि तदनुपपत्ते। द्वितीये व्याप्तिरेव सेति व्याप्यदर्शनाद्व्यापकबुद्धिरर्थापत्तिरनुमानमेव। प्रमाणद्वयविरोधोनुपपत्तिरिति चेन्न। प्रकृतोदाहरणे तदभावात्। विरोधो हि तदास्याद्यदि जीवतीत्यस्य गृहेस्तीत्यर्थः स्यात्। यदि वा गृहे नास्तीत्यस्य न जीवतीत्यर्थ. स्यात्। न च तदास्ति। स्वस्मिन्नेवान्यथाभावदर्शनात्। यो हि मातापितृभ्या सुरक्षितो

न जातु गृहान्निर्गच्छति, सोऽन्यानपि तथा मन्यमानो जीवनप्रमाणस्य गृहे सत्त्वमेवार्थं प्रतिपद्यत इति । एव तर्हि संदिहानोऽवतिष्ठेत, न तु बहिर्भावं निश्चिनुयात् । अन्यथा प्रकरणसमेनापि किंचिदवधारयेत् । एतेनैतदपि निरस्तम् । यदाहु अनुमानत्वपक्षे कि बहिर्भावे जीवनमात्र लिङ्गमुतगृहाभावमात्रम् । अथवा विशिष्टम् । न प्रथम--द्वितीयौ । व्यभिचारात् । न तृतीय । विरुद्धयोर्विशेषणविशेष्यभावानुपपत्तेः । अविरोधप्रतीतेश्च बहिर्भावकल्पनोत्तरकालीनत्वेनेतरेतराश्रयापत्तेरिति । जीवनगृहाभावयोर्विरोधस्यैवाभावात् । भावेवार्थापत्तेरप्यनुपपत्तेः । अतोऽविनाभावबलेनार्थप्रतीतिहेतुत्वादर्थापत्तिरनुमानमेव । एतेन केवलव्यतिरेकी परिशेषश्चार्थापत्तिरेव नानुमानमित्यपि निरस्तम् ।

## इति अर्थापत्तेः पृथक्प्रामाण्यभङ्गः

## अथ अभावस्यापि क्लृप्तप्रमाणान्तर्भावसमर्थनम्—

अथाभावस्य प्रत्यक्षादिषु यथायथमन्तर्भावः । तत्र तावदिह भूतले घटो नास्तीति प्रतीनिरिन्द्रियजन्या, अनन्यत्रोपक्षीणेन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वात् रूपादिबुद्धिवत् । अधिकरणग्रहणोपक्षीणामिन्द्रियमिति चेन्न । त्वगिन्द्रियेण घटादिग्रहणे प्रतियोगिस्मृतिमतोऽन्धस्य शुक्लाद्यभावप्रतीतिप्रसङ्गात् । प्रतियोगिग्राहकेन्द्रियेणाधिकरणप्रतीतिरपेक्षणीया इति चेत् न । त्वगिन्द्रियग्राह्ये वायौ चाक्षुषरूपाभावानवगमप्रसङ्गात् । अभावप्रतीतौ चाधिकरणप्रतीतिरनुपयोगान्न तत्रेन्द्रियमुपक्षीयते । उपयोगे तन्तुनाशोत्तरकालं पटप्रध्वंसानिरूपणप्रसङ्गात् । तस्य हि प्रतियोग्यधिकरणाधारत्वेन तन्त्वाश्रयत्वात् तेषां च विनष्टत्वात् । भवतु वा अधिकरणग्रहणावश्यम्भावः । तथापि नेन्द्रियं तत्रोपक्षीयते, तदवान्तर व्यापारत्वात्तस्य । नचैवं लिङ्गज्ञानस्यापि इन्द्रियावान्तरव्यापारत्वप्रसङ्गः । यद्धि यज्जनयित्वैव यज्जनयति, तत्र तस्य तदवान्तरव्यापारत्वात् । इन्द्रियस्य च लिङ्गज्ञानमन्तरेणापि लिङ्गिज्ञाने सामर्थ्योपलम्भात् । न च तुच्छत्वादिन्द्रियसन्निकर्षाभावोऽभावस्य यथा ज्ञानेन विषयत्वेन सन्निकृष्यते तथेन्द्रियेणापि सन्निकर्षोपपत्तेः। न च तुच्छत्वमप्यभावस्य । अभावप्रतियोगित्वं हि तुच्छत्वं, नाभावत्वम् । किंच षष्ठप्रमाणवादिनाऽप्यनुपलब्धेरज्ञाता या एव ज्ञानजनकत्वमास्थेयम् । अन्यथा तस्या अप्यभावरूपत्वेन अनुपलब्ध्यन्तरापेक्षायामनवस्थाप्रसङ्गात् । ततश्च अज्ञातकरणत्वात् रूपादिज्ञानवदेव अभावज्ञानस्येन्द्रियजन्यत्वं स्वध्यवसानम् ।

सर्वत्र च बाह्यार्थेषु भावप्रमाणावष्टम्भेनैव मनसोऽपि ज्ञानहेतुत्वं दृष्टमित्यभावज्ञानेऽपि तथात्वमुपगम्यत इति अनुपलब्धिसहायत्वं नोपपद्यते। किंच भावज्ञानजननसमर्थस्य लिङ्गशब्दादेस्तदभावज्ञानजननेऽपिसामर्थ्यमुपलब्धमिति इन्द्रियस्यापि अभावप्रतियोगिनि घटादौ समर्थस्य तदभावज्ञानजननेऽपि सामर्थ्यमनुमीयते। किंच इन्द्रियदोषेण दूष्यमाणमभावज्ञानं तदेव आत्मनः करणीकरोति। कारणदोषादेव कार्यदोषाः प्रादुर्भवन्ति। अन्यथा अतिप्रसङ्गात् किंच अघटं भूतलमिति विशिष्टज्ञानस्य इन्द्रियजन्यत्वावश्यम्भावात् विशेष्यांश इव विशेषणांशेऽपि तज्जन्यत्वमकामेनापि स्वीकरणीयम्। तस्मात् प्रत्यक्षयोग्यार्थानुपलब्धौ तदभावोऽपि प्रत्यक्षः। नन्वेवमनुपलब्धिः कारणं स्यादिति चेत्, हन्तैवमभावानुपलब्धिरपि भावग्रहणकारणमापन्नमायुष्मताम्। भावोपलम्भेऽपि अभावानुपलम्भस्य नित्यं सन्निधानादिति। तदेतत्सर्वं न्यायकुसुमाञ्जलौ प्रपञ्चितमाचार्यैः—

"प्रतिपत्तेरापरोक्ष्यादिन्द्रियस्यानुपक्षयात्। अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः॥ प्रतियोगिनि सामर्थ्याद्व्यापाराव्यवधानतः। अक्षाश्रयत्वाद्दोषाणामिन्द्रियाणि विकल्पनात्" अनयोः श्लोकयोस्तात्पर्यम्—

नन्वघटं भूतलमिति विशिष्टबुद्धाविन्द्रियग्राह्यत्वेऽप्यभावस्य विशिष्टबुद्धित्वाभावान्नास्ति इन्द्रियग्राह्यत्वम्। सत्त्वे वा केवलसौरभस्य चाक्षुषत्वप्रसङ्गः। तस्मात् पूर्वं केवलग्रहणाय अनुपलब्धिराश्रयणीया। अन्यथा नागृहीतविशेषणेतिन्यायात्विशिष्टे धीरेव नस्यात्। अनन्यनिरूप्यस्वभावानां दण्डकुण्डलादीनामेव विशेषणीभविष्यतां पूर्वं कैवल्येन ग्रहणम्। विषयसम्बन्धिप्रतियोगिनिरूप्याणां तु ज्ञानसमवायाभावानां नित्यसानिरूप्यस्वभावतया विशेषणविशेष्यत्वे विकल्पसामग्रीसमवधानवत एव इन्द्रियस्य सामर्थ्यावधारणान्न कैवल्ये निर्विकल्पकग्रहणापेक्षा इति। न कुत्राऽपि अनुपलब्धिपैशाच्याः प्रवेशावकाशः।

अभावप्रतिपत्तिः इन्द्रियजन्या अपरोक्षत्वात्, रूपादिप्रतिपत्तिवत्। परोक्षत्वे वा लैङ्गिकादिवदज्ञातकरणत्वानुपपत्तिः, भावावेशात्—भावप्रमाणपरतन्त्रत्वात् इत्यर्थः। प्रतियोगिनिषेध एव अभाव इत्यर्थः। पूर्वमभावग्रहणे आधिकरणग्रहणस्यानुपयोगादिति पर्यहारि। इदानीमुपयोगमङ्गीकृत्य परिह्रियते अधिकरणग्रहणस्यावान्तरव्यापारत्वेनाव्यवधायकत्वादिति। अभावविपर्ययस्य इन्द्रियदोषोत्थत्वादैन्द्रियकत्वमित्यर्थः। अघटं भूतलमित्यभावविकल्पस्यैन्द्रियकत्वात् विशेषणस्य अभावस्याप्यैन्द्रियकत्वम्।

ननु गृहादिमात्रमनुभूय अन्यत्र गतवतः प्रतियोगिस्मरणे सति इन्द्रिय व्यापारमन्तरेणाप्यभावोऽनुमीयते ।

यथाहुः—

" स्वरूपमात्रं दृष्ट्वापि पश्चात् किंचित् स्मरन्नपि ।
तत्रान्यनास्तितां पृष्टस्तदैव प्रतिपद्यते " ।। इति

सत्यम् । न तत्र अभावः प्रत्यक्षः । किन्तु स्मरणयोग्यस्य स्मरणाभावादनुमीयते । स्मरणाभावश्च मानसप्रत्यक्ष इति नानवस्था । अनयैव दिशा प्रातर्गजाभावविज्ञानेपि ज्ञेयम् । कथमन्यथा प्रमाणान्तरवादिनः सायंतनसमयेऽनुभूयमानस्य गजादेः प्रातःकालीनाभावविषयोऽनुभवो जायेत । न हि तदानीं तस्य अनुपलब्धिरस्ति । प्रातःकालीनैव अनुवर्तत इति चेत् न, तत्रापि दृश्यत्वाभावेन योग्यानुपलब्धेरभावात् स्मर्तव्यस्य स्मरणाभावस्तत्र अभावज्ञाने कारणमितिचेत् न तर्हि " अभावोऽपि प्रमाणाभावो नास्तीत्यर्थस्येति भाष्यमुन्मत्तप्रलपितमेव स्यात् अभावोऽपि अभावाख्यं प्रमाणमित्यर्थः । प्रमाणाभावः प्रमित्यभावः इत्यर्थः । अभावाख्यं प्रमाणमिति लक्ष्यम् प्रमित्यभाव इति लक्षणम् । तस्य प्रमेयमाह-नास्तीत्येतस्य अर्थस्य वेदान्तपरिभाषाया ज्ञानकरणाजन्याभावानुभवासाधारणकारणत्वमनुपलब्धिरूपप्रमाणस्य लक्षणमुक्तम् । अनुमानादिजन्यातीन्द्रियाभावानुभवहेतौ अनुमानादौ अतिव्याप्तिवारणाय अजन्यन्तेति पदम् । अदृष्टादौ साधारण कारणे अतिव्याप्तिवारणाय असाधारणेति पदम् । अभावस्मृत्यसाधारणहेतुसंस्कारे अतिव्याप्तिवारणाय अनुभवेति विशेषणम् । न च अभावानुमितिस्थलेऽपि अनुपलब्ध्यैव अभावो गृह्यता विशेषाभावादिति वाच्यम् । धर्माद्यनुपलब्धिसत्त्वेऽपि तदभावानिश्चयेन योग्यानुपलब्धेरेव अभावग्राहकत्वात् ।

ननु केयं योग्यानुपलब्धिः ? किं योग्यस्य प्रतियोगिनोऽनुपलब्धिः ? उत योग्ये अधिकरणे प्रतियोग्यनुपलब्धिः ? नाद्यः, स्तम्भे पिशाचादि भेदस्य अप्रत्यक्षत्वापत्तेः । नान्त्यः । आत्मनि धर्माद्यभावस्य प्रत्यक्षत्वापत्ते, इति चेन्न; योग्या चासौ अनुपलब्धिरिति कर्मधारयाश्रयणात् । अनुपलब्धेः योग्यता च तर्कितप्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वम् । यस्य अभावः गृह्यते तस्य यः प्रतियोगी तस्य सत्त्वेन अधिकरणे तर्कितेन प्रसञ्जितमापादनयोग्य प्रतियोग्युपलब्धिस्वरूपं यस्य अनुपलम्भस्य तत्त्वं तदनुपलब्धियोग्यत्वम् ।

क्लृप्तेन्द्रियस्यैव अभावग्राहकत्वं किमर्थं नाङ्गीक्रियते इति चेत्, न; तत्प्रतियोग्यनुपलब्धेरप्यभावग्रहहेतुत्वेन क्लृप्तत्वेन कारणत्वमात्रस्य कल्पनात्। इन्द्रियस्य चाभावेन सह सन्निकर्षाभावेन अभावग्रहाहेतुत्वात्। इन्द्रियान्वयव्यतिरेकयोः अधिकरणज्ञानाद्युपक्षीणत्वेन अन्यथासिद्धेः। ननु भूतले घटो नास्ति इत्याद्यभावानुभवस्थले भूतलांशे प्रत्यक्षत्वमुभयसिद्धमिति तत्र वृत्तिनिर्गमनस्यावश्यकत्वेन भूतलावच्छिन्नचैतन्यवत् तन्निष्ठघटाभावावच्छिन्नचैतन्यस्यापि प्रमात्रभिन्नतया घटाभावस्य प्रत्यक्षतैव सिद्धान्तेपि इति चेत्, सत्यम् अभावप्रतीते प्रत्यक्षत्वेऽपि तत्करणस्य अनुपलब्धेर्मानान्तरत्वात्। न हि फलीभूतज्ञानस्य प्रत्यक्षत्वे तत्करणस्य प्रत्यक्षप्रमाणतानियतत्वमस्ति; 'दशमस्त्वमसि' इत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वेऽपि तत्करणस्य वाक्यस्य प्रत्यक्षप्रमाणभिन्नप्रमाणत्वाभ्युगमात्। ननु फलवैजात्य विना कथं प्रमाणभेदः? इति चेत्, न; वृत्तिवैजात्यमात्रेण प्रमाणवैजात्योपपत्तेः। तथा च घटाभावाकारवृत्तिर्नेन्द्रियजन्या इन्द्रियस्य विषयेण असन्निकर्षात्, किन्तु घटानुपलब्धिरूपमानान्तरजन्या इति भवत्यनुपलब्धेर्मानान्तरत्वमिति; तन्न अभावस्य तु त्रिष्वपि यथासंभवमन्तर्भावसंभवात्। तथाचोक्तं भासर्वज्ञेन अभावस्य तु त्रिष्वपि यथा सम्भवमन्तर्भावः। तथाहि-कौरवाद्यभावप्रतिपत्तिरागमादिति। आत्मादिषु रूपाद्यभावप्रतिपत्तिरनुमानादिति।

**पदपञ्चिकायाम्—**

आत्मा रूपरहितो नियमेनाचाक्षुषप्रत्यक्षत्वात् वायुवत्, गन्धरसरहितो रूपराहितत्वाद्वायुवत्। स्पर्शरहितोऽस्मदादिमानसप्रत्यक्षत्वात् सुखादिवत्। आकाशं रूपरसगन्धशून्यं स्पर्शरहितत्वात् आत्मवत् इत्याद्यूह्यम्। भूतलादिषु घटाद्यभावप्रतिपत्तिः प्रत्यक्षात् इन्द्रियव्यापारभावभावित्वादिति। अन्यत्र तद्भावभावित्त्वं पर्यवसितामिति चेत्

**पञ्चिकायाम्**—अन्यत्र—आधारभूतलादिग्रहणे। तथाचोक्तम् "**गृहीत्वा स्तुसद्भावं स्मृत्वा च प्रतियोगिनम्। मानसं नास्तिताज्ञान जायतेऽक्षानपेक्षया**"।। परिहरति—न रूपादिष्विव बाधकाभावादिति।

**पञ्चिका—**

न हि रूपाद्याश्रयग्रहणे एवेन्द्रियव्यापारः पर्यवसितो न रूपादिष्विति युक्तम्। घ्राणव्यापारे सत्येव निर्गन्धं कुसुममिति ज्ञानमुत्पद्यते। न च तत्र इन्द्रिय-

व्यापारोऽन्यत्र पर्यवसित इति युक्तं वक्तुम्; द्रव्यस्य चाक्षुषज्ञानविषयत्वात् । सम्बन्धाभावो बाधक इति चेत्, न; स्वपक्षपरपक्षयोरसिद्धत्वात् । स्वपक्षे ( मीमांसकपक्षे ) रूपादिष्विव अपरोक्षानुभवकार्यानुमेयो योग्यताख्यः सम्बन्धः । परपक्षेऽपि संयुक्तविशेषणभावादिति । संयोगसमवायरहितस्य विशेषणविशेष्य-भावानुपपत्तिरिति चेत्, न, विशिष्टप्रत्ययेन तत्सिद्धेरिति ।

अनुपलब्धेः प्रामाण्य खण्डित गङ्गेशोपाध्यायैः तत्त्वचिन्तामणौ प्रत्यक्ष-खण्डे—अत्रोच्यते इत्यादिना ।

अत्रोच्यते—

प्रतियोगिग्राहकेन्द्रियेण आश्रयग्रहो न हेतु, प्राक् नास्तिताग्रहे त्वन्वयेन व्यभिचारात् वाय्वादौ च रूपाद्यभावधीरिन्द्रियजन्यैव, नानुपलब्धिलिङ्गजन्या अनुपलब्धेरज्ञानात् । अथाज्ञातैव रूपाद्युपलम्भस्य अनुपलब्धिः रूपाद्यनुपलब्धि गृह्णाति भूतले घटाभावमिवेतिचेत्, त्वन्मते उपलम्भस्यातीन्द्रियत्वेन योग्यानुप-लब्ध्या उपलम्भाभावस्य ग्रहीतुमशक्यत्वात्,अनुपलब्धिमात्रस्य अभावाग्राहकत्वात् । घटाभावधीरज्ञातकरणिका लिङ्गाद्यनुसन्धानं विना जायमानत्वादिति चेत्, न; वाय्वादौ रूपाद्यभावप्रतीतिरपि तथा । अथ रूपादिमत्तया ज्ञातत्वाभावस्तदनुमित-रूपवत्तानुपलब्धिर्वा लिङ्गमिति चेत्, न, वाय्वादौ ज्ञातत्वाभावस्यापि रूपाद्यभाव-तुल्यतया ग्रहीतुमशक्यत्वात् । वाय्वादौ तस्य प्रत्यक्षत्वे रूपाद्यभावोऽपि तथास्तु । नापि कायवाग्व्यवहाराभावेन अनुपलब्धिरनुमीयते, उपेक्षाज्ञान-मूकस्वप्नयोर्दर्शनेन व्यभिचारात् न च व्यवहाराभावमात्रं लिङ्गं, कस्यचिद्व्यवहाराभावस्य व्यभि-चारात्, सर्वव्यवहाराभावस्य ग्रहीतुमशक्यत्वात् । किञ्च घटवत्तया ज्ञातत्वाभावेन तदनुमितानुपलब्ध्या वा लिङ्गेन भूतलादावभावानुमितिरस्तु, किं मानान्तरेणा-नुपलब्ध्या । गृहमुपलभ्य निर्गतश्चैत्रो यत्र केनचित् पृष्टस्तत्र मैत्र आसीदिति, स च क्षणं ध्यात्वा अनुपलब्ध्या तत्र मैत्राभावमवगम्याह—नास्तीत्तत्र मैत्र इति । सेयं प्राङ्नास्तिताधीर्न स्मृति, पुरा गेहेऽनुभूयमाने मैत्रास्मरणेन तदभावाननु-भावात् । एवञ्च तत्रैव इन्द्रियव्यापारं विनैव अनुपलब्ध्या अभावानुभवादन्यत्रापि सैव हेतुः, क्लृप्तत्वात् । तदाहु "**स्वरूपमात्रं दृष्ट्वं हि वेश्माद्यं स्मरन्नथो । तत्रान्येनास्तितां पृष्टस्तदैव प्रतिपद्यते**" इति । मैवम् । प्राङ्नास्तितायां हि न तावदज्ञातानुपलब्धिः । भूतले घटाभावस्येवाऽभावग्राहिका; तदानीं गेहस्य विप्र-कृष्टत्वेन योग्यानुपलब्धेरभावात् । नापि ज्ञाता, अनवस्थाप्रसङ्गात् । अनुपलब्धे-

रप्यभावरूपतया अनुपलब्ध्यन्तरेण ग्राह्यत्वात् । उपलम्भस्यानुपलब्धिरज्ञातैव स्वरूपसती मैत्रानुपलब्धिं गृह्णाति इति चेत् त्वन्नये उपलम्भस्य अतीन्द्रियत्वेन तदभावस्य योग्यानुपलब्ध्यग्राह्यत्वात् । अथ गेहस्य योग्यमैत्रवत्तया स्मरणार्हस्य स्मरणाभावस्तत्र अज्ञात एव गेहे मैत्राभावग्राहक इति चेत्, न; स्वरूपसतः स्मरणाभावस्य ग्राहकत्वे तस्मिन् सति अभावसंशयविपर्ययाभावप्रसङ्गात् । भवति च कदाचित् तत्र आसीदिति विपर्य्ययः, तत्रासीन्नवेति संशयश्च । अथ दोषात्संशयविपर्ययौ । न चासाधारणं प्रमाकरणं दूषयन्तः एव दोषाः सशयादिहेतवो भवन्ति । न चात्र स्वरससिद्धस्य योग्यास्मरणस्य किञ्चिद्दूषितमितिवाच्यम् । दोषसाहित्यमेव हि करणाना दुष्टता । न हि दूरत्वादिना चक्षुषः किञ्चिदपाक्रियते, किन्तु मण्यादेर्दाह इव स्वरूपसतामेव प्रतिबन्धकत्वमिति चेत्, न; अज्ञातायोग्यास्मरणात् तत्राभावधीरित्यसिद्धेः । किन्तु मनसा ज्ञातायोग्यास्मरणाल्लिङ्गात् प्रमाणत्वेन क्लृप्तात् तत्राभाव प्रतीत्युपपत्तौ नानुपलब्धिः प्रमाणान्तर कल्प्यते । योग्यसमस्मरणाभावो न मनोग्राह्यः, प्रत्यासत्त्यभावात् । ज्ञानस्य अयोग्यत्वाद्वेति चेत्, न; वाय्वादौ रूपाद्यभावप्रतीतेरलैङ्गिकत्वेनेन्द्रियानुविधानेन न तज्जन्यत्वे सिद्धे इन्द्रियसबद्धविशेषणतायाः प्रत्यासत्तित्वकल्पनात् । तज्ज्ञानं प्रत्यक्षं, जानामीत्यनुभवस्य लिङ्गाद्यजन्यत्वात् । न च ज्ञातता लिङ्गम् निराकृतत्वात् ।

तवापि कथमभावे संशयविपर्ययाविति चेत्, न; लिङ्गसंशयविपर्ययाभ्यां लैङ्गिकसंशयविपर्ययदर्शनात् । यदा तु सुनिपुणेन एकज्ञानविषयतायोग्यस्य मैत्रस्य अनुभवे सति स्मरणार्हस्य अस्मरणमवधार्यते, तदा अनुमितिः प्रामा । अत एव अस्मरणमात्रस्य व्यभिचारमुपलभ्य तदुपेक्ष्य विशिष्टास्मरणं ज्ञातुकामस्य प्रणिधानमुपयुज्यते । अन्यथा ध्यानमनुपपन्नम् । स्वरूपसत एव अस्मरणस्य अभावग्राहकत्वात् । तस्माद्योग्यास्मरणं लिङ्गत्वेनोपयुज्यते । प्रयोगस्तु–तद् गेहं तदा मैत्राभाववत् तत्तुल्यपरिमाणादियोगितया स्मरणेऽपि तद्वत्तया अस्मर्यमाणत्वात् । यदेवं तदेवम् । यथा घटाभाववभ्दूतलमिति । अतः साधूक्तं जयतीर्थश्रीमच्चरणैः पद्धतौ । “ नत्रेदानी कौरवाद्यभावो भारताद्यादवगम्यते । देवदत्तस्य चक्षुराद्यभावो रूपाद्यदर्शनलिङ्गगम्यः । सुखाद्यभावप्रमितिस्तु साक्षिप्रत्यक्षेणैव । पुरोवृत्तिघटाद्यभावप्रमितिस्तु झटिति जायमाना प्रत्यक्षफलमेव । न त्वनुपलब्धिमात्रजन्या । अपरोक्षज्ञानत्वात् । अनुपलब्धिस्त्ववर्जनीयसन्निधिरेव । यत्र त्वन्धकारे हस्तप्रसारणादिरूपपरामर्शेन घटाभावं प्रत्येति, न तदा अनुपलब्धिः

करणम् । किन्तु लिङ्गत्वेनैव । अत्र घटो नास्ति योग्यत्वे सत्यनुपलभ्यमानत्वादिति । एवं प्रातर्गजाद्यभावज्ञानमनुपलब्धिलिङ्गजन्यम् । अभावस्येन्द्रियसन्निकर्षानुपपत्तिरिति चेन्न; भाववदभावस्यापि इन्द्रियसन्निकर्षो बाधकाभावात् " इति । तर्कताण्डवे च—

"अनुपलब्धेरभावग्रहजनकत्वं नास्ति,व्यभिचारात् अन्यथासिद्धेश्च । तथा हि विनश्यदवस्थघटे कपाले घटोऽस्तीति चाक्षुषसाक्षात्कारे तदुत्तरक्षणे घटध्वंसे अनन्तरमेव चक्षुषा घटध्वंससाक्षात्कारस्य जायमानत्वेन व्यतिरेकव्यभिचारः । ध्वंससाक्षात्कारोत्पात्तिक्षणाव्यवहितपूर्वक्षणे ध्वंसोत्पत्तिक्षणरूपे उक्तरूपघटसाक्षात्कारस्य स्थित्या तदभावरूपानुपलब्धेरभावात्। आवश्यकेनेन्द्रियेण अन्यथासिद्धेश्च । अन्यथा अभावग्रहे भावानुपलब्धिरिव अभावानुपलब्धिरपि भावग्रहहेतुः स्यात् । तस्यास्तत्र अन्यथासिद्धत्वे प्रकृताया अपि तथात्वमिति । यदुक्तं न्यायचान्द्रिकायाम् " विमता रूपाभावप्रतीतिः इन्द्रियकरणिका अन्यत्र अनुपक्षीणेन्द्रियव्यापारानुविधायित्वात् रूपप्रतीतिवत् । तन्न; अधिकरणग्रहणे तस्य उपक्षीणत्वात् " इति तदसत् । तथा सति अन्धस्यापि त्वगिन्द्रियोपनीते घटादौ रूपविशेषाभावप्रतीतिप्रसङ्गात् । ननु प्रतियोगिग्राहकेन्द्रियगृहीते अधिकरणे, अनुपलब्धिः प्रमाणमिति चेन्न; वायौ त्वगिन्द्रियोपनीते रूपाभावप्रतीत्यनुदयप्रसङ्गात्, वातायनविवरविसारितकरपरामृष्टेप्यधिकरणे तदुपलम्भप्रसङ्गाच्च ।

यदप्युक्तं तत्रैव " यत्विदं गदितम्—वायौ त्वगिन्द्रियोपनीत इत्यादि तदसत्; योग्यानुपलब्धे रूपाभावप्रतीतेः " इति तन्न; अन्धस्यापि त्वगिन्द्रियोपनीते घटे रूपाभावप्रतीतिप्रसङ्गात् । यदप्युक्तं तत्रैव " करपरामृष्टे च न रूपाभावप्रतीतिः अधिकरणचक्षुस्सन्निकर्षलक्षणयोग्यताभावात् " इति तदपि न; तद्रीत्या चक्षुषः अधिकरणग्रहणमात्रे उपक्षीणत्वात्, । इन्द्रियान्तरेण गृहीते च अधिकरणे अधिकरणचक्षुस्सन्निकर्षस्य अनावश्यकत्वात् । यथोक्तं —

**" गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् । "**
**मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया ।। "** " अक्षानपेक्षया जायते इत्यस्य "बाह्येन्द्रियानपेक्ष्यनुपलब्धिसापेक्षमनोजन्यत्वमित्यर्थः " इति न्यायप्रकाशिकायां व्याख्यातम् ।

अन्यच्च इन्द्रियम् अभावप्रमाकरणम्, तद्विपर्ययकरणत्वात्, यत् यद्विपर्ययकरणम् तत् तत्प्रमाकरणम् । यथा रूपप्रमायां चक्षुः । न चासिद्धो हेतुः ।

तथाहि—अस्ति तावद्विद्यमान एव वस्तुनि विपर्ययात्मकोऽभावप्रत्ययः। स यस्मिन् दुष्टे सति भवति तदेवादुष्टं समीचीनाभावज्ञानकारणं भवितुं युक्तम्। तस्मादिन्द्रियदोषादेव अभावविपर्यय इति इन्द्रियस्य अभावप्रमाकरणत्व वक्तव्यम्।

यत्तूक्तं न्यायचन्द्रिकायाम् "यदपि तद्विपर्ययकारणत्वादिति, तदन्यथासिद्धम्। विषयतदधीनेतरेन्द्रियादिकारणसाकल्यलक्षणयोग्यपदार्थपक्षनिक्षिप्तत्वादिन्द्रियादेः, तद्दोषे योग्यतैव दुष्टेति तद्विशिष्टानुपलब्धेरेवाभावविपर्ययः, न तु तस्य दुष्टेन्द्रियमात्रनिबन्धनत्वम्" इति तन्न; दुष्टेन्द्रियमात्रनिबन्धनत्वमभावविपर्ययस्य वक्तव्यम् लाघवात् इन्द्रियदोषेणैव निर्वाहे कुतः कारणसामग्र्याः दुष्टत्वारोपः। तस्करस्य अपराधे कुतो मस्करिणो मारणम्। कुतो वा शरीरैकदेशस्य कर्दमदूषितत्वे समग्रस्य शरीरस्य तद्दूषितत्वकथनम्। अनुपलब्धिनिरपेक्षदुष्टेन्द्रियस्य तद्धेतुत्वे गृह्यमाण एव शुक्तीदमंशादौ तदभावभ्रमो भवेदित्यापादनमसाधु, अनुपलब्धे सहकारित्वस्य अङ्गीकारात् दुष्टेन्द्रियसहकारिण्या अनुपलब्धे दुष्टत्वाङ्गीकारे आलोकसहकृतमेव दुष्टेन्द्रिय रजतभ्रमजनकमिति आलोकस्यापि दुष्टत्वव्यवहार. प्राज्ञाना स्यात्।

अपरं च अघटं भूतलमिति विशिष्टधियः अवश्यमिन्द्रियकरणकत्वं वा स्वीकार्यं, सप्तमं प्रमाणं वा आस्थेयम्। यथा इन्द्रियस्य विशेष्यमात्रोपक्षीणत्वात् अकरणत्वमुच्यते, तथा अनुपलब्धेरपि वा विशेषणमात्रोपक्षीणत्वात् अकारणत्वं स्वीकर्तव्यं स्यात्, न्द्रियस्य अभावप्रमाकारणत्वं वा स्वीकर्तव्यं स्यात्। सप्तमं प्रमाणं वा गवेषणीयं स्यात्

अत्रोक्तं न्यायचन्द्रिकायाम्—मेदिनीतले कलशो नास्तीति वेदनं नाक्षादुत्पद्यते, अक्षस्य संसृष्टवेदनोत्पादकत्वनियमात्, कलशनास्तित्वस्य अक्षेण असंसर्गात् इति तन्न; संयोगादिसंसर्गाणामभावेऽपि विशेष्यविशेषणभावसंसर्गस्य जागरूकत्वात्। ननु विशेष्यविशेषणभावमात्रेण इन्द्रियैर्ज्ञानिजनने चक्षुस्संयुक्तकलशविशेषणस्य रसादेरपि चाक्षुषत्वं स्यात् इति चेन्न, कलशनास्तित्वं योग्यत्वात् गृह्यते, न रसादि, अयोग्यत्वात्। ननु केयं योग्यता नाम—स्वरूपं वा, सहकारिसाकल्यं वा तदतिरिक्तं वा। नाद्यः रसादेरपि तुल्यत्वात्। नान्त्यः, स्वरूपसहकारिसाकल्यातिरिक्तयोग्यतायास्त्वयाऽनङ्गीकारात् इति चेन्न; चक्षुस्संयुक्तफलसमवेतरसस्य चाक्षुषत्वे आपादिते यादृशयोग्यताभावात् रसस्य

अचाक्षुषत्वं समर्थ्यते, तद्रूपैव योग्यता इति गृहाण। अथवा चाक्षुषत्वावच्छिन्नं प्रति महत्त्वत्व-जातित्व-रूपत्व-रूपवत्त्वेत्यादीनामन्यतमत् प्रयोजकम्-तस्यैव योग्यतारूपत्वं स्वीक्रियते।

यत्तु न्यायचन्द्रिकायाम् इन्द्रियमभावज्ञानकारणम्,अभावप्रतियोगिसामर्थ्यादिति अनुमानदूषणाय तत्सामर्थ्यं तद्धीजनकत्वं वा तद्धीकारणसाकल्यवत्त्वं वा तदतिरिक्तातीन्द्रिययोग्यता वा? नाग्रिमः, तद्धीजनकत्वात्, तदभावधीजनकत्वमितिव्याघातात्। न हि यद्यस्य भावं यदा बोधयति, तत्तदा तदभावबोधकम्, अतिप्रसङ्गात्। अत एव न द्वितीयः। न तृतीयः। सिद्धान्तविरोधात्। "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति वाक्येन यागस्वर्गसम्बन्धबोधकेन तदभावप्रमाऽजनकेन व्यभिचाराच्च इत्युक्त, तन्न; इन्द्रियम् अभावविषयकप्रत्यक्षप्रमाजनकम् तत्प्रतियोगिविषयकप्रत्यक्षग्रहजनकतावच्छेकधर्मवत्वात् इति खलु अनुमानशरीरं क्रियते इति न कोऽपि क्षुद्रोपद्रव.। भिन्नसमयावच्छेदेन प्रतियोगिग्राहकतावच्छेदकधर्मशालिनोऽपि अभावप्रमाजनकत्वं संभवत्येव। ज्योतिष्टोमेनेति वेदवाक्ये अव्यभिचारः स्पष्ट एव। हेतोरभावात्।

यदुक्तं न्यायचन्द्रिकायाम "(इन्द्रियस्य) अभावज्ञानं प्रत्यव्यवहितपूर्वकालभावित्वमसिद्धम्, विषयतदितरकारणसाकल्यलक्षणयोग्यत्वेन व्यवधानात् भावान्धकारराद्धान्ते अन्तरेण अधिकरणग्रहणमन्धकाराध्यक्षणात्, अधिकरणग्रहणस्य 'धरातले जलधरो नास्ति' इति प्रतिषेधे करणव्यापरत्वायोगाच्च' इति, तन्न; विषयतादितरकारणसाकल्ये इन्द्रियमन्तर्भूतं न वा। यदि अन्तर्भूतम्, सिद्धं तर्हि तस्य अव्यवहितपूर्वकालभावित्वम्। यदि नान्तर्भूतमसिद्धं तर्हि साकल्यम्। किं च दण्डस्यापि घटकारणत्वं न स्यात्, तस्यापि स्वेतरकारणसामग्र्या व्यवधानात्। किंच अधिकरणग्रहणस्य करणावान्तरव्यापारत्वात् न तेन व्यवधानेऽपि दोषः। न हि व्यापारिणः व्यापारेण व्यवधानदोषाय ननु भावान्धकारराद्धान्ते अन्तरेण अधिकरणग्रहणमन्धकाराध्यक्षणात् अधिकरणग्रहणस्य अवान्तरव्यापारत्वं नास्तीति चेन्न; अन्धकारस्याऽपि साक्ष्युपनीते देशरूपाधिकरणे अध्यक्षीक्रियमाणत्वात्। अत्र अन्धकारः, नात्र अन्धकारः इति अधिकरणत्वेन देशावगाहिनी एव प्रतीतिरुत्पद्यते। देशरूपाधिकरणाविनिर्मोकेण केवलं 'अन्धकारः' इति प्रतीतेरेव अभावात्। ननु भवतु अन्धकारप्रतीतिः देशरूपाधिकरणविषयिणी तथा च तत्राप्यस्तु अधिकरणग्रहणानन्तरमन्धकाराध्यक्षणम् तथापि 'धरातले

जलधरो नास्ति ' इति प्रतिषेधे अधिकरणग्रहणस्य करणव्यापारत्वं नास्तीति चेन्न; तत्रापि अधिकरणग्रहणाभावे अधिकरणत्वेन धरातलस्य प्रतिभासायोगात् । प्रतिषेधप्रतीत्यभिलापकवाक्यघटक-धरातले-इति सप्तम्यन्तपदेन अभिलप्यमान-प्रतीतिविषयविषयकेण भाव्यम् इति नियमस्य केनापि अपलपितुमशक्यत्वाच्च ।

अघटं भूतलमिति विशिष्टधियः इन्द्रियजत्वाभावे सप्तमप्रमाणत्वापत्तेः परिहारः न्यायचन्द्रिकायामेवं कृतः । तथाहि " यत्पुनरुदितम् विशिष्टधीः अवश्यामिन्द्रियकरणिका आस्थेया, प्रमाणान्तरं वा सप्तमम् इति तदसारम् । सुरभि चन्दनमित्यादिविशिष्टप्रत्ययेऽपि समानत्वात् । त्वगिन्द्रियस्य चक्षुषश्च चन्दनमात्रोपक्षीणत्वात् घ्राणस्य गन्धमात्रोपक्षीणत्वात्। गन्धज्ञानसहकृतत्वाच्चक्षुषः सुरभि चन्दनमिति विशिष्टप्रत्यय इति चेत्, अधिकरणोपलब्धिसहायानुपलब्ध्या अघटं भूतलमिति विशिष्टधीरत्रापि स्यात् " इति तदचारु । सुरभिश्चन्दनखण्डः इत्यत्र घ्राणेन्द्रियजन्यसौरभज्ञानसहकृत त्वगिन्द्रियं चक्षुरिन्द्रिय वा विशिष्टधियं जनयति विशेषणज्ञानसहकृतस्य विशेष्यग्राहकस्य विशिष्टधीजनकत्वस्य बहुलमुपलम्भात् । अघट भूतलमित्यत्र चक्षुरिन्द्रियजन्यभूतलोपलब्धिसहकृता अनुपलब्धिः अघटं भूतलमिति विशिष्टधियं जनयतीति उक्ते विशेष्यज्ञानसहकृता विशेषणग्राहिका विशिष्टधियं जनयतीति आपतितम्, तच्च अनुभवविरुद्धम् ।

यत् पुनरुक्त–" किचाघटं भूतलमिति विशिष्टबुद्धेः पूर्वमेव विशेषणस्य अभावस्य ग्रहण वाच्यम् । विशेषणग्रहणकार्यत्वाद्विशिष्टबुद्धेः । न च विशिष्टसामर्थ्यमस्तीति विशेषणेपीन्द्रियसामर्थ्यम् । केवलसौरभेऽपि चक्षुरसामर्थ्यप्रसङ्गात् । तस्मादभावात्मनो विशेषणस्य ग्रहणाय षष्ठं प्रमाणमास्थेयमिति;" तन्न; अधिकरणविनिर्मोकेण अभावज्ञानासंभवात् । भूतलघटाभावयोरपि एकदैव ज्ञानोदयात् । विशेषणज्ञानस्य विशिष्टबुद्धिं प्रति कारणत्वनियमस्य अप्रामाणिकत्वात् ' तुष्यतु ' न्यायेन अङ्गीकृतेऽपि प्रामाणिकत्वे तस्य प्रकृते प्रसरासंभवाच्च । ननु एतज्जन्मनि प्राथमिकं गौरिति प्रत्यक्षं जन्याविशेषणज्ञानजन्यम्, जन्याविशिष्टज्ञानत्वादनुमितिवत् इति अनुमानं मानम् । न च तत्र विशेषणज्ञानस्मृतिरूपम् । एतज्जन्मनि तस्य गोत्वस्य अननुभवात् । न चाद्यस्तनपानादाविव अत्र अदृष्टमेव जन्मान्तरीयसंस्कारोद्बोधकम् । तद्वदनन्यगतिकत्वाभावात् । अन्यथा अतिप्रसङ्गात् । तद्वदेव सन्निकर्षेऽपि प्रथमं गोत्वस्मृत्यापाताच्च । गोत्वसन्निकर्ष-

स्याप्यपेक्षायां तु सन्निकर्षात् गोत्वानुभव एवोचितः । तस्यानुभवे एव हेतुत्वस्य क्लृप्तत्वात् । स्मृतिसामग्रीतोनुभवसामग्र्याः बलवत्त्वात् । अन्यथा जन्मान्तारानुभूतानाम् एतज्जन्मनि इन्द्रियसन्निकृष्टानां, नित्यानां वैदिकानां च अर्थानां स्मृतिरेव स्यान्न त्वनुभवः । न च गोत्वरूपविशेषणानुभवः सविकल्पकः । तथात्वे विशेषणज्ञानजन्यत्वावश्यंभावेन अनवस्थानात् । तस्मादर्थान्निर्विकल्पकसिद्धिः । न चाप्रयोजको हेतुः । अनुमितिशाब्द-ज्ञानादौ हि साध्यप्रसिद्धिपदार्थोपस्थित्यादिर्हेतुः । साध्यादीनि च विशेषणानि । एवं च यद्विशेषयोः कार्यकारणभावः असति बाधके तत्सामान्ययोरपीति न्यायेन साध्यप्रसिद्ध्यादेर्जन्यविशिष्टज्ञानसामान्ये जन्यविशेषणज्ञानत्वेन हेतुत्वसिद्धिरिति तन्न; अनुमित्यादौ साध्यप्रसिद्ध्यादेरेव अहेतुत्वेन यद्विशेषयोरिति न्यायानवकाशात् । न हि व्याप्त्यादिज्ञाने सति तद्विलम्बेन अनुमित्यादिविलम्बः ( " **असिद्ध-साधने दोषः को व्याप्तिर्यदि विद्यते ।** " इत्यनुव्याख्यानोक्तेः । न च व्याप्त्यादि धीरेव तेन विना नेति वाच्यम् एवं हि तस्य हेतुहेतुत्वेन अन्यथासिद्धत्वान्नानुमित्यादिहेतुता ।

अस्तु वा साध्यप्रसिद्ध्यादिरनुमित्यादिहेतुः वह्निमानित्यादिज्ञानं प्रति-वह्न्यादिज्ञानस्य न विशेषणज्ञानत्वेनैव कारणता । द्रव्यत्वादिना वह्निज्ञानेऽपि तदभावात् नापि विशेषणतावच्छेकप्रकारकाविशेषणज्ञानत्वेन । तेन निर्विकल्पकासिद्धेः गौरवाच्च । किंतु विशेषणतावच्छेदकप्रकारकज्ञानत्वेन । तथा च न निर्विकल्पकासिद्धिः ।

ननु पूर्वमज्ञातस्य विशेषणस्य भानायोग. इति चेन्न नैय्यायिकानां-मते घटाभावद्भूतलमिति ज्ञाने अभावरूपविशेषणस्य संयुक्ताविमौ समवेताविमा-वित्यादिज्ञाने च संयोगसमयायादिरूपस्य विशेषणस्य, अनुव्यवसाये व्यवसायगतस्य रजतत्वप्रकारकत्वरूपस्य विशेषणस्य, अभावज्ञाने प्रतियोगित्वादि-रूपस्य विशेषणस्य च पूर्वमज्ञातस्यैव भानामिति स्वीकृतत्वात्तत्र व्यभिचारः । भूतले अभाव इत्यभावादिविशेष्यकज्ञानानन्तरमेव भूतलमभाववदित्यभावविशेषणक-ज्ञानमितिकल्पने त्वन्योन्याश्रयः । एतत्कल्पनस्य विशिष्टज्ञानविशेषणज्ञानयोः कार्यकारणभावसिद्ध्यधीनत्वात् । उक्तेन व्यभिचारेणैव विशिष्टज्ञानं सम्बन्ध-विषयकम्; सम्बन्धज्ञाने च सम्बन्धिज्ञानं हेतुः, सम्बन्धि च विशेषणमिति

निरस्तम् । सम्बन्धिनोर्युगपदिन्द्रियसन्निकर्षे तयोरसंसर्गाग्रहे च ताभ्यां सहै-वेन्द्रियसन्निकृष्टसम्बन्धस्यापि धीरित्युक्तत्वाच्च।

तदेतत्सर्वमभिसन्धायैव अनुव्याख्यान व्याख्यातं न्यायसुधाकारै तथा हि

घटादिप्रत्यक्षयोग्यार्थप्रतियोगिकाभावप्रतीतिसाधनं प्रमाणमभावः । तच्चा-नुपलब्धिलक्षणं लिङ्गमेवेत्यभावोऽपि नानुमानाद्भिद्यते । अतो युक्तं त्रीण्येव प्रमा-णानीति । तत्किमभावो नियमेनानुमानान्तर्गत इत्यत आह । **क्वचिदिति** । कदाचिद्घटाद्यभावग्राहकं प्रत्यक्षमपि भवति । कि तर्हि प्रत्यक्षयोग्यार्थाना सर्वे-षामप्यभाव. प्रमाणद्वयवेद्य इत्यत आह । **सुखादेरिति** । चस्त्वर्थः । सुखादे-रान्तरस्य साक्षिवेद्यस्याभावस्तु नियमेन साक्षिप्रत्यक्षेणैव ग्राह्य इत्यर्थः । यद्वाऽ भाव इति प्रमाणमेवोच्यते। तस्य सुखादेरिति परंपरया संबन्धः । नियमेन प्रत्यक्षा-न्तर्गत इति संबन्धः । अनेन बाह्याना प्रत्यक्षयोग्यानां घटादीनामभाव प्रत्यक्षा-नुमानवेद्य इत्युक्तम् । तदयुक्तम् । एकस्यैव ज्ञानस्य स्वतन्त्रकारणद्वयजन्यत्वानु-पपत्तेः । परस्परविरुद्धपरोक्षापरोक्षत्वलक्षणाकारद्वयप्राप्तेश्चेत्यत उक्तम् **क्वचिदिति** । तथाप्यनुपपत्तिरेव । प्रत्यक्षग्राह्येऽर्थेऽनुमानानवकाशादित्यत आह । **अन्यत्रेति** । सुखादेरन्यत्र घटादौ प्रतियोगिनि सति योऽभावोऽभावप्रमाणं झडिति प्राप्नोति तत्प्रत्यक्षम् । यत्तु विलम्बेन जायते तदनुमानमिति । एतदुक्तं भवति । घटाद्यभावग्राहकं योग्यानुपलब्धिरूपं प्रमाणं पृथगेवेति मीमांसकाः । अनुपलब्धि-लिङ्गकमनुमानमेव तदिति सौगताः । तदुभयमप्यनुपपन्नम् । प्रतियोगिस्मरणवतः पुरोवर्तिनि भूतले घटा ( द्य ) भावस्य प्रत्यक्षेणैवावगम्यमानत्वात् । इंद्रियान्वय-व्यतिरेकानुविधायिनोऽभावप्रत्ययस्याप्रत्यक्षफलत्वानुपपत्तेः । अपरोक्षाकारस्यानु-भवसिद्धत्वात् । बाधकाभावाच्चान्यत्रोपक्षयकल्पनानुपपत्तेः । अन्यथारूपादि-ज्ञानेपि प्रमाणान्तरकल्पनाप्रसङ्गात् । लिङ्गदर्शनव्याप्तिस्मरणादिविलम्बेन विना झडिति जायमानस्यानुमानफलत्वानुपपत्ते. लिङ्गस्य ज्ञातस्यैव कारणत्वादनुपलब्धे-रपि अभावत्वेनानुपलब्ध्यन्तरापेक्षायामनवस्थाप्रसङ्गाच्च । ननु च प्रातश्चत्वारादौ प्रतियोगिस्मरणाभावेन गजाद्यभावमननुभूय देशान्तरं गतो गजस्मृतिमा-न्प्रातश्चत्वरे गजो नासीदिति प्रतिपद्यते । न तत्र प्रत्यक्षस्यावकाश इति अनुपल-ब्धिलक्षणं पृथक् प्रमाणं तत्राङ्गीकार्यमिति । मैवम् । तत्राभावस्याप्रत्यक्षत्वेऽप्यनुप-लब्धिलिङ्गकानुमानवेद्यताभ्युपगमात् । अनुपलब्धेश्च स्मरणाभावालिङ्गानुमेयत्वात् । अत एव तत्र क्षणं ध्यात्वा नासीच्चत्वरे गज इति प्रतिपद्यते । स्मरणाभावोऽप्य-

नुपलब्ध्यान्तरानुमेय इत्यनवस्थेत्यपि नास्ति । साक्षिग्राह्याणां बुद्धिसुखादीनामभावस्य नियमेन साक्षिप्रत्यक्षवेद्यत्वादिति । अत अभावस्य पृथक् प्रामाण्यं नास्ति ।

**इति अभावप्रामाण्यवादभङ्गः ।**

**अद्वैतिनां जगन्मिथ्यात्ववादभङ्गः ।**

तैस्तैर्वादिभिर्मानाधीनामेयसिद्धिरित्यङ्गीकृतत्वात् स्वस्वसिद्धान्तेषु प्रामाणिकत्वाभिमानो युज्यते । अद्वैतिनस्तु प्रामाणिकतमं श्रुतिस्मृतीतिहासपुराणादिषु सप्रपञ्चं वर्णितं योगिप्रत्यक्षाद्यबाधितप्रमाणैः निरन्तरं प्रमितमर्थक्रियासमर्थनमनन्तानवधिककल्याणगुणोन्नद्धं सृष्ट्याद्यष्टकर्तृत्वोपेतं परमात्स्वरूपमपलपन्ति । तथा तादृशमाहिमोपेतेन भगवता जीवाना विमोचनाय प्रतिकल्प सृज्यमानं महदहकारादिकं ब्रह्माण्डं तदन्तर्गतमहीमहीधरादिकं मिथ्येति जल्पन्ति । रामायणमहाभारतादिग्रन्थैः प्रतिपादित रामकृष्णादीना लोकोत्तरं चरितं निवृत्ततर्पैरत्यक्तसर्वस्वैरपि अत्यादरेण अनवरतं गीयमानं सर्वमपि मृषेत्यभ्युपगच्छन्ति । एवमेव बहुवित्तव्ययायासादिसाधनसम्भारसपाद्यकर्मकलापस्य, ज्ञानादिसाधनस्य, स्वर्गापवर्गफलजातस्य, पापकर्मफलीभूतस्य नानाविधनरकादिदुःखभोगस्य च परमार्थसत्यत्वाभावं समर्थयन्ति । क्षुत्पिपासानिवर्तनसमर्थं प्रत्यक्षादिप्रमाणप्रमितं क्षुत्पिपासानिवृत्त्यर्थ प्रत्यहं प्रतिक्षण यावज्जीवमुपयुज्यमानमन्नोदकादिकमर्थजातं नैव जातमिति मन्यन्ते । तत्प्रतिपादकप्रमाणानि अपि अतत्त्वावेदकत्वात् अप्रमाणानि इति उररीकुर्वन्ति । कर्तृत्वभोक्तृत्वसत्त्वादिसकलधर्मविकलं तत एव अर्थक्रियासामर्थ्यशून्यं वेदादिप्रमाणेन कदापि कथमप्यवेद्यं यत् तदेव किल पारमार्थिकं वस्तुतत्त्वमिति हि मायावादिनामुद्घोष । तदेतसर्वमुन्मत्तप्रलापसहोदरामिति स्पष्टं ज्ञायते । ननु सत्तात्रैविध्यवादिनस्तस्य मते व्यावहारिकी सत्ता प्रपञ्चे अस्त्येव; पारमार्थिकी परब्रह्मण्येव शुक्त्यादौ तु प्रातिभासिकी । अतो नोक्तदोष इति चेत्—सत्तात्रैविध्ये अङ्गीकृतेऽपि दोषतादवस्थ्यात् । तथाहि—व्यावहारिकप्रातिभासिकशब्दाभ्या व्यवहारादिविषयत्वमात्रमुच्यते अन्यद्वा । आद्ये व्यावहारिकत्वमभिधेयत्वरूपकं स्यात् । तच्च केवलान्वयित्वात् अद्वितीयादिव्यवहारविषये चिन्मात्रे, शुक्तिरूप्येप्यस्ति । द्वितीये प्रतिभासविषयत्वं नाम ज्ञेयत्वान्नान्यत् । तदपि केवलान्वयित्वात् सर्वत्र वर्तते इति वृथा विभागकल्पनम् । ननु अबाध्यत्वं पारमार्थिकत्वं तत् ब्रह्मण्येव, बाध्यत्वं व्यावहारिकत्वं तच्च प्रपञ्चे वर्तते इति चेन्न;

बाध्यत्वं त्रैकालिकनिषेधप्रतियोगित्वमिति हि तन्मतम्। तथा च सर्वदेशीयत्रैकालिकनिषेधप्रतियोगिनि भोजनादौ प्रवृत्त्याद्ययोगापातात् शुक्तिरजतस्यापि बाध्यत्वेन अवान्तरभेदोऽनर्थकः। अतोऽधिकस्य असत्त्वस्य शशशृङ्गेऽप्यभावेन तद्वद्सत्त्वापाताच्च। ननु जगत् ब्रह्मज्ञानबाध्यं शुक्तिरजतादिकं च तदन्यज्ञानबाध्यमिति चेत्, तावता किमायातम्। फले विशेषाभावात्। तच्चोक्तं ‘ व्याघ्रेणारण्ये नीते का हानिर्वृकेण नीते को लाभ इति। तद्व्यहारकाले तत्सत्त्वं व्यावहारिकत्वमित्यभ्युपगम्यते इति न साधु। ब्रह्मव्यवहारकाले तत्सत्तायाः सद्भावात् ब्रह्मणोऽपि व्यावहारिकत्वं स्यात्। तेन शुक्तिरजतादीनामपि सत्तायाः स्वीकारात् तेषामपि व्यावहारिकत्वं स्यात्। व्यावहारिकेषु पदार्थेषु विद्यमानं भयकम्पादिजनकत्वरूपमर्थक्रियाकारित्वं प्रातिभासिकेषु विद्यते एव। ननु आपणरजतकार्यकरत्व तत्र नास्तीति चेत् तावता किम्। जलविशेषे क्वथिता आढक्यः विक्लित्तिमत्यो भवन्ति, जलान्तरे क्वथितास्तु तथा न भवन्तीत्येतावता जलान्तरस्य अजलत्व भवति अपूपादिनानाविधभक्ष्यविशेषाः गोधूमविशेषैः कर्तु शक्यन्ते न शक्यन्ते च अन्यैरिति अन्येषा गोधूमाना गोधूमत्वानाक्रान्तत्वं भवति। एवं शुक्तिरजतादेरपि स्वस्वोचितार्थक्रियाकारित्वेन व्यावहारिकत्वैव स्यात्। नन्वर्थक्रियाकारित्वादेव ब्रह्मभिन्नं सर्व मिथ्या, तदभावादेव ब्रह्मैव परमार्थः इति चेत्, न; शशविषाणस्यापि ब्रह्मतुल्यत्वेन पारमार्थिकत्वापातात्। अत एव श्रीसत्यध्यानपूज्यपादैः अखण्डब्रह्मशशविषाणयोर्न लेशतोपि वैलक्षण्यमिति डिण्डिमनादः प्रसारितः। किञ्च सर्वमारोपितं तत्तदधिष्ठानज्ञानबाध्यमिति सर्वैरङ्गीकार्यम्। ब्रह्मण्यध्यस्त ब्रह्मज्ञानबाध्य भवतु। तदितरत्र अध्यस्त तत्तदधिष्ठानज्ञानबाध्यं भवतु। तावता न हि एकं व्यवहारिकमपरं प्रातिभासिकं भवितुमर्हति। अवान्तरवैजात्यस्य कल्पकाभावात्। न कोऽपि रज्जुमालाबलीवर्दसूत्रादावारोपितसर्पाणां तत्तदधिष्ठानज्ञाननिवर्त्यानामवान्तरभेदमङगीकरोति। ननु मिथ्यात्वं नाम न सार्वत्रिकात्यन्ताभावप्रतियोगित्वं, किन्तु ब्रह्मज्ञानबाध्यत्वमेव। ब्रह्मज्ञानोत्पत्तिपर्यन्तं तदनुवृत्तेः सर्वमर्थक्रियाकारित्वञ्चोपपद्यते एवेति चेत्, बहुकालाल्पकालावस्थानमात्रेण शुक्त्यादेः शुक्तिरूप्यादेश्च वैलक्षण्यायोगात्। आकाशे तलनैल्यादिज्ञानस्य छत्रकारत्वज्ञानस्य चन्द्रप्रादेशतामतेश्च प्रामाण्यं तथात्वे स्यात् दीर्घकालावस्थायित्वात् तेषाम्। शुक्त्यादावप्येवमवान्तरभेदस्वीकारापत्तेश्च। किञ्च ब्रह्मज्ञानबाध्यत्वं शुक्तिरूप्यादौ नास्ति इति मिथ्यालक्षणस्य अव्याप्तेः ज्ञाननिवर्त्यत्वमात्रं मिथ्यात्वमिति वक्तव्यम्।

ततश्च ज्ञानपदं व्यर्थं स्यात् । व्यावर्त्यस्य अप्रसिद्धेः न हि ब्रह्मान्यत् किञ्चित् ज्ञानान्यानिवर्त्यं त्वन्मते संभवति । तथा चेत्तत्रैव अव्याप्ते । तस्य लक्ष्यत्वं नाङ्गीक्रियते चेत् सदद्वैतभङ्गापात्तिः । उत्तरज्ञाननिवर्त्यपूर्वज्ञानादौ अतिव्याप्तेश्च ।

मुद्गरपातादिनिवर्त्ये च घटादावव्याप्तेश्चाज्ञानत्वेन ज्ञाननिवर्त्यत्वविवक्षायामप्ययं दोषः । अधिष्ठासाक्षात्कारत्वेन निवर्त्ये शुक्तिरजतादौ च ज्ञानत्वेन ज्ञाननिवर्त्यत्वाभावात् साध्याविकलता । ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्यत्वविवक्षायां ज्ञानत्वव्याप्येन स्मृतित्वेन ज्ञानानिवर्त्ये सस्कारे अतिव्याप्तिः । न च संस्कारादेर्न स्मृतित्वेन स्मृतिनिवर्त्यता, कितु योग्योत्तरात्मविशेषगुणत्वेन, अन्यथा इच्छादे संस्काराद्यानिवर्तकत्वापत्तेः इति वाच्यम्; एवमपीच्छाद्यनिवर्त्यस्मृतिमात्रानिवर्त्ये संस्कारे अतिव्याप्त्यनिवारणात्, इच्छाऽनिवर्त्यसंस्कारस्थले संस्कारस्य इव तन्निवर्त्यसंस्कारस्थलेऽपि तस्य सत्त्वावश्यंभावेन तत्र अतिव्याप्तितादवस्थ्याच्च । न च अनुभवत्वव्याप्यधर्मेण तन्निवर्त्यत्वं विवक्षितम्, स्मृतौ च अनुभवत्वव्याप्यधर्मस्य अभावात् न तन्निवर्त्यसंस्कारातिव्याप्तिः इति वाच्यम्; यत्र प्रमोत्तरमुत्पन्नस्य भ्रमस्य प्रमाजन्यस्मृतिप्रर्यन्तं बाधो न जात ,प्रथमप्रमाजानितस्मृतिविषयबाधश्च दृश्यते तत्राव्याप्ते । न च भ्रमोत्तरप्रमानिवर्त्यत्व विवक्षितम् प्रमात्वं च यथार्थज्ञानत्वमेव; न त्वनधिगतत्वगर्भं येन यथार्थस्मृतिविषये अव्याप्तितादवस्थ्यं स्यादिति वाच्यम् । तत्त्वज्ञानसंस्कारनिवर्त्याज्ञानसंस्कारेऽव्याप्ते । न च अज्ञानसंस्कारस्यापि तत्त्वज्ञाननिवर्त्यत्वमेव स्वीक्रियते अतो न तत्र अव्याप्तिरिति वाच्यम् । अज्ञानस्य इव अज्ञानसंस्कारस्य अज्ञानत्वाभावेन ज्ञाननिवर्त्यत्वानुपपत्ते. । ज्ञानाज्ञानयोरेव निवर्त्यनिवर्तकभावसत्त्वात् । न च अज्ञानसंस्कारस्याप्यज्ञानोपादनतया तत्त्वज्ञानेन स्वोपादानाज्ञाननिवृत्तौ स्वस्यापि तद्द्वारा तन्निवर्त्यत्वमविकलमिति वाच्यम् । अज्ञानसंस्कारनिवृत्तौ कर्तव्यायां अज्ञाननिवृत्तेस्तत्त्वज्ञानत्वे मानाभावत् । न च स्वोपादानाज्ञाननिवर्तकज्ञाननिवर्त्यत्वं विवक्षितम्;अतो न संस्कारादावव्याप्तिरिति वाच्यम् । अज्ञानादेरनादेर्योऽध्यासस्तत्र चोपादानासंभवेन अव्याप्तेः । लाघवेन अज्ञानोपादानकत्वे तस्यैव लक्षणत्वापाताच्च । स्यादेतत्—ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वमत्र ज्ञाननिवर्त्यत्वं विवक्षितम् अवस्थितिश्च द्वेधास्वरूपेण,

कारणात्मना च । तथा च मुद्गरपातेन घटस्य स्वरूपेण अवस्थितिविरहेऽपि कारणात्मना अवस्थितिविरहाभावात् ब्रह्मज्ञानप्रयुक्त एव स इति नातीतघटादावव्याप्तिः । अत एव उत्तरज्ञाननिवर्त्ये पूर्वज्ञाने न सिद्धसाधनम् । न वा वियदादौ ब्रह्मज्ञाननाश्यत्वेऽपि तद्वदेव मिथ्यात्वासिद्ध्या अर्थान्तरम् इति चेन्न । यदुक्तं ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं ज्ञाननिवर्त्यत्वमिति तत्र अवस्थितिसामान्यं वा विशेष्यते विरहो वा आद्ये अवस्थितिसामान्यं कारणात्मना अवस्थिति कारणमिति यावत् । ज्ञानप्रयुक्तव्यतिरेकप्रतियोगिकारणकत्वमित्यर्थः स्यात् । तत्र चोत्तरज्ञानप्रयुक्तव्यतिरेकप्रतियोगिपूर्वज्ञानजन्यसंस्कारादौ सिद्धसाधनम्। अनाद्यविद्यादौ च बाधः । कारणशब्देन च अविद्योक्तौ च अविद्याकारणकत्वमेव स्यात् शेषवैय्यर्थ्यात् । अनाद्यविद्यादौ बाधश्च । न द्वितीयः, घटाद्यवस्थितिसामान्यविरहस्य ज्ञानप्रयुक्तत्व न संभवति । विनष्टघटाद्यवस्थितिविशेषद्वयविरहद्वयस्य ज्ञानप्रयुक्तत्वाभावात् । स्वरूपेण अवस्थितिविरहस्य ज्ञानयुप्रक्तत्वाभावात् विशेषाभावातिरिक्तसामान्याभावस्य त्वया अनङ्गीकाराच्च । ज्ञानप्रयुक्तविरहाप्रतियोग्यवस्थायामवस्थात्वस्य अतिप्रसङ्गेन प्रतियोगितानवच्छेदकत्वाच्च । शुक्तिरजतादेरवस्थित्यङ्गीकारे स्वरूपेण निषेधोक्त्ययोगाच्च । रूप्यादेः स्वरूपेणैव निषेध इति त्वदभ्युगतपक्षे रूप्यादेरत्यन्तासत्त्वस्य आपादितत्वेन रूप्याद्यभावोऽपि शशविषाणाद्यभाव इव ज्ञानाप्रयुक्त इति दृष्टान्तस्य साध्यवैकल्यमेव । पक्षे बाधश्च । यच्चोक्तं ज्ञानत्वव्याप्येत्यादि तदपि न; तव मते मननत्वादिना ज्ञानत्वव्याप्यधर्मेण मनननिवर्त्ये अर्थगतसंशयविशेषे अतिव्याप्तेः । तादृशसंशयः निवर्तकत्वेनैव मननस्य सप्रयोजनत्वोक्तेश्च । एतदुपरि लघुचन्द्रिकादिषु कृता अद्वैतसिद्धिमण्डनाभासाः न्यायामृतमाधुरी—न्यायामृतसौरभ—न्यायामृतसौगन्ध्य—द्वैतद्युमण्यादौ साकल्येन पूर्वमेव निरस्ताः । ग्रन्थविस्तरभयात् तदनुवादः नेह प्रतन्यते ।

तस्मात् प्रसक्तानुप्रसक्ताविवेकेन अनित्यत्वमेव मिथ्यात्वमित्युक्तं स्यात् । ततश्च सिद्धसाधनमंशे बाधश्च बाधेताम् अपसिद्धान्तश्च स्यात् ।

किंच मायावादिप्रतिवादिनस्त्रिविधाः श्रुतिस्मृत्यादिबलेन पदार्थव्यवस्थापकाः वैदिकाः; प्राधान्येन हेतुमवलम्ब्य तथा कुर्वाणाः कणादाक्षपादादयो हैतुकाः प्रत्यक्षैकशरणाःचार्वाकादयः पाखण्डाश्चेति । तैः सत्यस्यापि प्रपञ्चस्य विनाशित्वमङ्गीकृतमिति तैः सह तेषां विप्रतिपत्तिश्च न स्यात् । अपि च तद्दर्शनाचार्यैः

"तत्त्वमस्यादिवाक्यार्थसम्यग्धीजन्ममात्रत ।
अविद्यासहकार्येण नासीदस्ति भविष्यति"

इत्यादिना त्रैकालिकनिषेधप्रतियोगित्वरूपस्यैव मिथ्यात्वस्य अङ्गीकारात् अपसिद्धान्तो दुष्परिहरः। ननु अन्यैः ब्रह्मातिरिक्तानां गगनादीनां कतिपय-पदार्थानां नित्यता स्वीकृता। मिथ्यावादिना च आत्मान्यत्वावच्छेदेन तदनित्यता साध्यते। अतो न विप्रतिपत्त्यनुपपत्तिः इति चेत् यो हि आत्मान्यत्वावच्छेदेन नित्यता ब्रूयात् तं प्रति एतादृशं साध्यस्य साधनीयत्वात्। ननु एवं कथं पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादिति केवलव्यतिरेकिणः प्रवृत्तिः। तत्रापि घटादिषु इतर भेदस्य प्रत्यक्षत. सिद्धत्वेऽपि पृथिवीत्वाच्छिन्ने तदभावात् न सिद्धसाधनं साध्याप्रसिद्धि-र्वेति उपपादित तार्किकैः। तत्खण्डनस्याप्येवं कर्तु शक्यत्वात् इति चेत् अनेन स्वपक्षसमर्थनस्य वा तदाक्षेपनिरसनस्य वा अकरणात्। न हि पराङ्गदग्धमिति स्वाङ्गदाहदुःखं कदापि विनिवर्तते। अत एव च प्रेक्षावन्त. विमतिविषयतावच्छेदक-मसत्प्रातिभासिकान्यत्वे सति ब्रह्मान्यत्वादिक बाधसिद्धसाधनादिदोषपरिहाराय पक्षतावच्छेदकमाहुः। किञ्च ब्रह्मान्यत्वावच्छेदेन ज्ञानविनाश्यत्वसाधनं मुद्गरप्रहारा-दिना नाशितेषु घटेषु साध्याभावनिश्चयादंशे बाधितं चेति यत्किञ्चिदेतत्।

## अद्वैतमहाचार्याणां परस्परं विरोधोद्घाटनम्।

मायावादमतप्रक्रियाश्च तन्मतप्रवर्तकाचार्यैः भामतीविवरणवार्तिककारैः चित्सुखानन्दबोधभारतीतीर्थादिभिश्च स्वदर्शनाचार्यभाष्यकाराभ्युपगतसिद्धान्त-दूषणैः दूष्यन्ते। ते सर्वे यथारुचि स्वस्वमनीषोत्प्रेक्षामूलककल्पनया परस्परं प्रतिक्षिपन्ति। तच्चायुक्तम्। वस्तुनो बहुरूपत्वापत्ते.। वस्तुविकल्पस्य सकलतान्त्रिकैरनभ्युपगतत्वात्।

उपायाः शिक्षमाणानां बालानामुपलालना।
असत्ये वर्त्मनि स्थित्वा ततः सत्य समीहते॥

इति कथनं तु अज्ञानां नेत्रेषु धूलीप्रक्षेपमात्रम्। अतः परस्परविरोधेनैव सुन्दोपसुन्दन्यायेन खण्डितानां तेषां खण्डनं मृतमारणतुल्यमेव। तथा हि तेषां विरोधः पारस्परिकः अतीव प्रकटः। केषाञ्चन मते एकजीववादः, केषाञ्चन-मते बहुजीववाद.। केचन चिदाश्रितमज्ञानं वदन्ति। केचन जीवाश्रितमज्ञानं प्रतिपादयन्ति। केचन दृष्टिसृष्टिवादं पुरस्कुर्वन्ति। अपरे च अजातवादम्।

जगदुपादानविषये एवं परस्परं बहुधा विप्रतिपद्यन्ते। तथा हि संक्षेपशारीरकानुसारिणः केचिदेवमाहुः— शुद्धमेवोपादानम्, जन्मादिसूत्रतद्भाष्ययोरुपादानत्वस्य ज्ञेयब्रह्मलक्षणत्वोक्तेः। तथा च 'आत्मन आकाशः संभूतः' इत्यादिकारणवाक्येषु शबलवाचिनामात्मादिशब्दानां शुद्धे लक्षणैवेति। विवरणानुसारिणस्तु 'यः सर्वज्ञः' इत्यादिश्रुतिभ्यः सर्वज्ञः मायाशबलः ईश्वरः एव ब्रह्मोपादानतां प्रतिपद्यते। अत एव भाष्ये 'अन्तस्तद्धर्मोपदेशात्' 'सर्वत्र प्रसिद्धोपदेशात्' इत्याद्यधिकरणेषु "सैवर्क्तत्साम तदुक्त्थं तद्यजुस्तद्ब्रह्म सर्वकर्मा सर्वकाम. सर्वगन्धः सर्वरसः" इत्यादिश्रुत्युक्तं सर्वोपादानत्वप्रयुक्तं सर्वात्मकत्वं जीवव्यावृत्तमीश्वरलिङ्गमित्युपवर्णितम्। अयमर्थः यस्य सर्वोपादनत्वं तस्य सर्वात्मकत्वम्। उपादानोपादेययोस्तादात्म्यात्। यदि प्रतिबिम्बत्वविशिष्टचैतन्यरूपे जीवे बिम्बत्वविशिष्टचैतन्यरूप ईश्वरे च विशेष्यतया अनुस्यूतशुद्धचिद्रूपब्रह्मणः सर्वोपादानत्वं स्यात् तदा तस्यैव सर्वात्मकत्वं स्यात् नेश्वरस्य तन्माभूदिति सार्वात्म्यस्य भाष्ये। जीवव्यावृत्तेश्वरलिङ्गत्वोपन्यासः। एवं चेश्वरगतमपि कारणत्वं तदनुगतमखण्डचैतन्यं शाखाचन्द्रमसमिव तटस्थतया उपलक्षयति इति तस्य ज्ञेयब्रह्मलक्षणत्वोक्तिरिति मन्यन्ते। तदभेदवादिष्वपि केचित्—यद्यपि वियदादिप्रपञ्चस्येश्वर उपादानं तथाप्यन्तःकरणादीनां जीवतादात्म्यप्रतीतेर्जीव एवोपादानम्। अत एव अध्यासभाष्ये अन्तःकरणादीनां जीव एवाध्यासो दर्शितः। जीव एव स्वप्नद्रष्टृवत्स्वस्मिन्नीश्वरत्वादिसर्वकल्पकत्वेन सर्वकारणमित्यपि केचित्। "मायां तु प्रकृतिं विद्यात्" इति श्रुतेः मायाजाड्यस्य घटादिष्वनुगमाच्च माया जगदुपादानं प्रतीयते। कथं ब्रह्मण उपादानत्वम्। अत्राहुःपदार्थतत्त्वनिर्णयकाराः ब्रह्ममायाचेत्युभयमुपादानमित्युभयश्रुत्युपपत्तिः, सत्ताजाड्यरूपोभयधर्मानुगत्युपपत्तिश्च। तत्र ब्रह्मणः विवर्तोपादानत्वम्। अविद्यायाः परिणाम्युपादानत्वम् केचित्तु विवर्तोपादानसाधारणं लक्षणमाहुः। अस्ति च प्रपञ्चस्य सद्रूपेण विवर्तमानेन ब्रह्मणा, जडेन परिणामिना अज्ञानेन च अभेदः। 'सन् घटः' "जडो घटः" इति सामानाधिकरण्यानुभवात्। ननु अनन्यत्वाधिकरणभाष्ये "अनन्यत्वं व्यतिरेकेण अभावः न खलु अनन्यत्वमिति अभेदं ब्रूमः, किंतु भेदं व्यासेधामः" इति भाष्यभामतीनिबन्धानाभ्यां ब्रह्माभेदो निषिध्यते, इदानीं तस्याभ्युपगमो

अपसिद्धान्त इति चेत् तयोर्ब्रह्मसमानसत्ताकाभेदनिषेधे तात्पर्यात् शुक्तिरजतयोरिव प्रातिभासिकाभेदस्य अनिषेधात् ।

संक्षेपशारीरककृतस्तु ब्रह्मैवोपादानम् । कूटस्थस्य स्वतःकारणत्वानुपपत्तेर्मायाद्वारकारणम् । अकारणस्यापि द्वारस्य मृद इव घटे अनुगमदर्शनात् । वाचस्पतिमिश्राणां मते जीवाश्रितमायाविषयीकृतं ब्रह्म स्वत एव जाड्याश्रयप्रपञ्चाकारेण विवर्तते । अतस्तदेव उपादानम् माया सहकारिमात्रम् । न कार्यानुगतं द्वारकारणम् । सिद्धान्तमुक्तावलीकारास्तु मायाशक्तिरेव उपादानम् न ब्रह्म । 'तदेतद्ब्रह्मापूर्वमनपरम्' ' न तस्य कार्यं करणं च विद्यते ' इत्यादि श्रुतिभ्यः । तस्य जगदुपादानमायाधिष्ठानत्वेन उपादानत्वोपचारः । तादृशमेवोपादानत्वं लक्षणत्वेन विवक्षितमिति अभ्युपयान्ति । जीवेश्वरविषयेऽपि मतभेदो बहुलमुपलभ्यते । तथा हि—

तत्त्वविवेककाराणां मते रजस्तमोनभिभूतशुद्धसत्त्वप्रधाना माया, तदभिभूतमलिनसत्त्वा त्वविद्येति भेदः । तथा च मायाप्रतिबिम्बः ईश्वरः, अविद्याप्रतिबिम्बः जीवः । प्रकटार्थविवरणकाराणां मते अनाद्यनिर्वाच्यभूतप्रकृतिचिन्मात्रसंबन्धिन्यां मायायां चित्प्रतिबिम्ब ईश्वरः; तस्या एव परिच्छिन्नानन्तप्रदेशेष्वावरणविक्षेपशक्तिमत्सु अविद्याभिधानेषु चित्प्रतिबिम्बः जीवः; संक्षेपशारीरककृतां मते "कार्योपाधिरयं जीवः, कारणोपाधिरीश्वरः इति श्रुतिमनुसृत्य अविद्यायां चित्प्रतिबिम्ब ईश्वरः, अन्तःकरणे चित्प्रतिबिम्बः जीवः; चित्रदीपकाराणां मते ' जीव ईशो विशुद्धा चित् ' इति चित्त्रैविध्यकल्पनाभावात् यथा घटावच्छिन्नआकाशो घटाकाशः, तदाश्रिते जले प्रतिबिम्बितः साभ्रनक्षत्रः जलाकाशः, अनवच्छिन्नः महाकाशः, महाकाशमध्यवर्तिनि मेघमण्डले वृष्टिलक्षणकार्यानुमेयेषु जलरूपतदवयवेषु तुषाराकारेषु प्रतिबिम्बितः मेघाकाश इति एकस्यापि आकाशस्य चातुर्विध्यम् तथा स्थूलसूक्ष्मदेहद्वयस्य अधिष्ठानतयावर्तमानं तदवच्छिन्नं चैतन्यं कूटवन्निर्विकारत्वेन स्थितं कूटस्थम्, तत्र कल्पिते अन्त.करणे प्रतिबिम्बितं चैतन्यं संसारयोगी जीवः, अनवच्छिन्नं चैतन्यं ब्रह्म, तदाश्रिते मायातमसि स्थितासु सर्वप्राणिनां धीवासनासु प्रतिबिम्बितं चैतन्यमीश्वर इति चैतन्यस्य चातुर्विध्यम्; विवरणानुसारिणां मते बिम्बप्रतिम्बिभावेन जीवेश्वरयोर्विभागः, नोभयोरपि प्रतिबिम्बभावेन, तत्रापि प्रतिबिम्बो जीवः बिम्बस्थानीयः ईश्वरः; तथा सत्येव लौकिकबिम्बप्रतिबिम्ब-

दृष्टान्तेन स्वातन्त्र्यमीश्वरस्य, तत्पारतन्त्र्यं च जीवस्य; अपरेषां मते रूपानुपहितप्रतिबिम्बः न युक्तः इति घटाकाशवदन्तःकरणावच्छिन्नं चैतन्यं जीवस्तदनवच्छिन्नमीश्वरः अन्येषां मते न प्रतिबिम्बो नाप्यवच्छिन्नो जीवः; किंतु कौन्तेयस्यैव राधेयत्ववत् अविकृतस्यैव ब्रह्मणोऽविद्यया जीवभावः व्याधकुलसंवर्धितराजकुमारदृष्टान्तेन 'ब्रह्मैव, स्वाविद्यया संसरति, स्वविद्यया मुच्यते' इति बृहदारण्यकभाष्ये प्रतिपादनात् "**राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते। यथैवात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः**" इतिवार्तिकोक्तेश्च।

अन्ये तु अद्वैतवादे एकजीववादः मुख्यो वेदान्तसिद्धान्तः। इममेव दृष्टिसृष्टिवादमाचक्षते। अस्मिंश्च पक्षे जीव एव स्वाज्ञानवशात् जगदुपादानं निमित्तं च। दृश्यं सर्वं प्रातीतिकम्। देहभेदाच्च जीवभेदभ्रान्तिः। एकस्यैव च स्वकल्पितगुरुशास्त्राद्युपबृंहितश्रवणमननादिदार्ढ्यादात्मसाक्षात्कारे सति मोक्षः। शुकादीनां च मोक्षश्रवणं त्वर्थवादः इत्याहुः।

तेषामयमाशयः उपायानामनादरेण उक्तत्वात् तत्र तात्पर्यं न विद्यते। न तत्र अतीव क्षोदो विधेयः। किंतु उपेयमात्रे अद्वैते तात्पर्यमाकलनीयमिति। सिद्धान्तलेशसंग्रहे प्राचीनैर्व्यवहारसिद्धविषयेष्वात्मैक्यासिद्धौ परं संनह्यद्भिरनादरात्सरणयो नानाविधा दर्शिताः इति विवक्षितवस्तुप्रतिपत्त्युपायतया विरुद्धनानाप्रकारप्रदर्शनमाचार्याणां न दोषाय भवति, किंतु अलंकारायैव कल्पते। प्रतिपत्तॄणां प्रज्ञावैचित्र्येण कस्यचित् प्रतिपत्तुः केनचित् प्रकारेण मुक्तिसाधनब्रह्मात्मैक्यज्ञानलाभात्। तदुक्तं सुरेश्वराचार्यैः

**यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि।**
**सा सैव प्रक्रियेह स्यात् साध्वी सा चानवस्थिता** इति, परिमलेऽपि "अकल्पितवस्तुप्रतिपत्त्युपायतया कल्प्यमानेषु पदार्थेषु विरोधो न दोषावह" इति।

अस्मिन् विषये सिद्धान्तबिन्दौ एवं शङ्कासमाधाने कृते तथा हि—
ननु वस्तुनि विकल्पासंभवात् कथं परस्परविरुद्धमतप्रामाण्यम्। तस्मात् किमत्र हेयं किमुपादेयमिति चेन्न; क एवमाह वस्तुनि विकल्पो न संभवतीति स्थाणुर्वा पुरुषो वा राक्षसो वेत्यादि विकल्पस्य वस्तुन्यपि दर्शनात्। अतात्त्विकी सा कल्पना पुरुषबुद्धिप्रभवा। इयं तु शास्त्रीया जीवेश्वरविभागादिव्यवस्था इति चेत् नूनमतिमेधावी भवान्। अद्वितीयात्मतत्त्वं हि प्रधानं फलवत्त्वादज्ञातत्वाच्च प्रमेयं शास्त्रस्य। जीवेश्वरविभागादिकल्पनास्तु पुरुषबुद्धिप्रभवा अपि शास्त्रेण

अनूद्यन्ते। तत्त्वज्ञानोपयोगित्वात् ‘ फलवत्सन्निधावफलं तदङ्गम् ’ इति न्यायात् भ्रमासिद्धस्यापि श्रुत्या अनुवादसंभवात्। ...... .एवं वेदान्तेषु सर्वत्र एवंविध-विरोधे अयमेव परिहारः इति।

तदेतदतितुच्छम्। विनेयबुद्धिप्रावण्यानुसारेण अद्वितीयब्रह्मप्रतिपत्त्युपाया नानाविधाः संभवेयुरित्यङ्गीकुर्मः। तथापि न तव समीहितसिद्धिः। सूक्ष्मारुन्धतीप्रतिपत्त्यर्थं चक्षुरभिमुखतारकारूपस्थूलारुन्धतीप्रदर्शकवाक्यदृष्टान्तोपन्यासस्तत्र तत्र क्रियमाणः विषम एव। एवमेव सिद्धशब्दप्रतिप्रत्युपायकृत्रिम-शब्दगतविविधप्रकृतिप्रत्ययादिविभागप्रदर्शकानेकव्याकरणदृष्टान्तोऽपि न साधीयान् तथा हि अरुन्धतीस्वरूपे यस्य विप्रतिपत्तिर्नास्ति तस्य स्थूलतारादिप्रदर्शन-मुखैरनेकैरुपायैः सूक्ष्मारुन्धतीप्रदर्शनं क्रियते। यस्य परिनिष्ठितशब्दस्वरूप-सत्तायां न विप्रतिपत्तिः तस्य नानाविधप्रक्रियाप्रदर्शनेन सिद्धशब्दस्य व्युत्पादनं क्रियते। तयोः क्रमेण अरुन्धतीजिज्ञासा वैदिकलौकिकशब्दव्युत्पत्तिजिज्ञासा च वर्तते। यस्य च निर्धर्मकब्रह्मस्वरूपे एव विप्रतिपत्तिः तत् कथममीभिः पर-स्परविरुद्धैः परः सहस्रैरप्युपायैः शक्यं बोधयितुम्। अन्यथा स्थूलतारादि-प्रदर्शनादिना गगनकुसुमस्य प्रतिपत्त्यर्थं प्रयतमानः न केनापि दोषेण दूष्येत।

एकजीववादस्तु भृशं हासास्पदम् यतो हि सर्वत्र चरन्तः सर्वान् व्यवहारान् कुर्वन्तः सकलजीवराशयः शवसहोदरा अभिमताः अस्मिन् पक्षे। स्वयं निर्जीववादं स्वीकृत्य कथं जीवशून्यदेहवादिनं चार्वाकं निराकुर्वन् विद्वद्गोष्ठीषु नापत्रपेत। स्वैरिण्या स्वैरिण्यन्तरस्य निन्दनमपहसनं च जनसमुदायस्य हासास्पदमेव भागवताग्रेसराणां परमपूज्यानां शुकादिमहामुनीनां मोक्षाभावं वदन्तोऽपि कथं पूजार्हाः। सकलैः अधिकारिभिः स्वस्ववर्णाश्रमानुसारेण महाविश्वासपुरस्सरं क्रियमाणाः यजनाध्ययनमननश्रवणदानस्नानादिकाः सर्वे कर्मकलापाः स्वाप्नसमा इति निष्फला इति उद्घोषितमेकजीववादिभिः। अहो औद्धत्यमुत्पथानाम्। अयं स एकजीवः अनादिमायया सुप्तः सृष्ट्यादि-सर्वव्यापारान् करोति, इति पक्षे तत्सृष्टानां सर्वेषामपि वेदवेदान्तसंप्रदाय-प्रवर्तकानां महर्षीणां महाचार्याणां न केवलं सुप्तत्वं किंतु मृततुल्यत्वं प्रसज्येत। तथा च कथमेतैरुक्तानि वचनानि कृतानि च शास्त्राणि प्रमाणपदवीमनुवीरन्। स्रष्टा जीवः निद्रितः सृष्टास्तु इतरे विनिद्राः इत्यपि परिहास्यम्। यतो हि कल्पकजीवस्य मोक्षः कल्पितजीवानामचेतनानामुपदेशाज्जायते इत्युक्तौ

स्यात् । तथा च अन्धश्चारयति, चक्षुष्मांश्चरति; मूको वक्ति वाग्मी शृणोति इति कथितं भवेत् । श्रुतिषु यत् सर्वजीवानां स्वाप्नपदार्थद्रष्टृत्वमुक्तं तदप्येकजीववादे न संभवति । अचेतनस्य स्वप्नद्रष्टृत्वायोगात् । संसारे सर्वत्र स्वस्वात्मभोगार्थं प्रयतमाना दृश्यन्ते । अत एव पारस्परिककलहव्याकुलं जगदिदम् । यदि एक एव जीवः भोक्ता भवेत्, कलहः निर्निबन्धनः स्यात् । किं च एकत्वादेव सर्वभोक्तृत्वमपरिहार्यम् । ततश्च अभक्ष्यभक्षणे यः प्रायश्चित्तविधिः शास्त्रोक्तः स कुञ्जरशौचवत् व्यर्थः स्यात् एकेन देहेन प्रायश्चित्तस्य कृतत्वेऽपि देहान्तरेण पापस्यैव आचीर्यमाणत्वात् । ननु "अनादिमायया सुप्तः यदा जीवः प्रबुध्यते" इत्यत्र जीवः इत्येकवचनश्रवणात् एक एव जीवः स्वीकर्तव्यः इति चेत् न; जात्येकवचनत्वसमाश्रयणसंभवात् । धर्मं चरेति श्रुतौ धर्मपदस्यापि एकवचनान्तत्वात् वेदविहितधर्मनानात्वमपहस्तितं स्यात् । "अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इत्यादिश्रुतिभिः जीवनानात्वस्य स्पष्टं प्रतिपादनात् । सृष्ट्यादिकर्तुः सुप्तत्वे सृष्टजगद्व्यापाराः कथं संभवेयुः । पण्डितैः क्रियमाणाः ग्रन्थनिर्माणखण्डनमण्डनादिव्यापाराः न कदापि संपद्येरन् ।

**" बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ।**
**नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ॥ " इति**

भारतादिवचनैः बहुजीवसत्त्वावगमात् ।

अन्यच्च शुद्धं ब्रह्मैव वा हिरण्यगर्भ एव संसरति इति पक्षद्वयेऽपि वादिराजश्रीपादोक्तरीत्या

**" त्वं चण्डालः पशुर्म्लेच्छः चोरो जारः खरः कपिः ।**
**कुण्डो गोलक इत्याद्या या निन्दा लोकसम्मताः ॥**
**ताः सर्वाः सर्वजीवैक्यवादे स्युर्हि परात्मनि ।**

ये ये लोकविद्विष्टा दोषास्ते सर्वेऽपि ब्रह्मैव कलङ्कयेयुरिति स्पष्टम् । तथा अत्र अपराण्यपि तेषां वचनानि मननीयानि माननीयानि च भवन्ति ।

**ब्रह्मैव हीनयोनीस्ताः प्राप्य स्वेनैव पाप्मना ।**
**संसरेच्चेदियं सर्वा गाली कस्य गले वद ॥**
**अन्धश्च बधिरो मूकः पङ्गुः पण्डो विनासिकः ।**
**इत्याद्या व्यङ्गताहेतोर्या निन्दा लोकसम्मताः ॥**

ताः सर्वाश्च निराकारवादे किं न स्युरीश्वरे ।
विद्याविनयहीनस्त्वं निर्दयो निर्व्रतोऽशुचिः ॥
औदार्यधैर्यशौर्याद्यैर्हीन इत्यादिकाश्चयाः ।
सद्गुणाभावतो निन्दास्तास्तु नैर्गुण्यवादिनाम् ।
मते स्युः ब्रह्मणि परे सर्वाः सर्वस्य सम्मताः ।
या च ग्रामतटाकादेरारामादेः कृतस्य हि ॥
मिथ्यात्वकथनान्निदा मत्सरग्रस्तचेतसाम् ।
सा सर्वा सर्वमिथ्यात्ववादे स्यादेव माधवे ॥
अज्ञोऽसीति तु या निन्दा सा मायाश्रयचोक्तितः ।
भगवत्यच्युते कर्मबद्धत्वोक्त्यां च पापिता ॥
इत्यादीनि ।

## अद्वैतमते ज्ञानोत्तरं भेददर्शनानुपपत्तिः ।

ब्रह्मज्ञानिनःब्रह्मातिरिक्तज्ञानं विलुप्यते । मदन्यः कोऽपि नास्तील्येव तस्य प्रत्ययो भवति । एवं सति किमर्थं स शास्त्रप्रणयने प्रचारे च प्रवर्तते । बद्धानां बन्धविमोचनाय खलु तेन प्रयतितव्यम् । इदं न संभवति । बन्धो मिथ्या, बद्धोऽपि नास्ति इत्येव हि स प्रत्येति । एवं प्रतील्यनन्तरमपि, बद्धानां कृते शास्त्रं रचयाति तत् प्रचाययति इति चेत् कथं न स्वक्रियास्वन्यायस्ववचनविरोधः ।

ननु परमार्थतः अद्वैतमभ्युपगम्यते । तथापि औपधिकभेदवशात् अन्योऽपि जीवोऽस्त्येव-मिथ्याभूतं बन्धादिकमपि वर्तते अतो नोक्तानुपपत्तिः इति न वाच्यम् यतः एकजीववादः एव अद्वैतिनां मुख्यः सिद्धान्तःभवतु । सोऽपि न विकल्पं सहते । तथा हि शास्त्रकर्तुः गुरोर्जीवत्वङगीकार्यमुत तच्छिष्यस्य वा । यदि गुरोर्जीवत्वमङ्गीक्रियते, तर्हि शिष्यस्य जाड्यमङ्गीकार्यं स्यात् । यदि तस्य जाड्यं तदुपदेशार्थं प्रेक्षावतः गुरोः कथं प्रवृत्तिः । यदि गुरुरेव जडःस्यात् तदा तेन शास्त्रप्रणयनं तदुपदेशश्च कथं क्रियेत । यदि अनेकजीवपक्षः स्वीक्रियते मुख्य-पक्षत्यागापत्तेरपसिद्धान्तापत्तेश्च । तत्त्वदपि न एकजीववादप्रतिपादकाविवरण-ग्रन्थस्य "मुख्यं मतमाह" इति अवतरणिका दत्ता । अमुख्यपक्षस्य अङ्गी-कारेऽपि दोषाःस्युरेव । परोक्षतः अपरोक्षतः वा तत्त्वनिश्चयानन्तरं हि तत्प्रति-पादनाय शास्त्रं प्रणेयम् । तत्त्वज्ञानं च भवत् एतादृशमेव स्यात्-यत् ब्रह्मातिरिक्तं सर्वं मिथ्याप्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रातियोगि, यद् दृश्यते तत् नास्त्येव

इति। एतदृशज्ञानवांश्च कथं शास्त्रप्रणयने प्रवर्तेत। न हि सर्पं रज्वारोपितत्वात् मिथ्येति ज्ञात्वा तं हन्तुं दण्डं व्यापारयन्तो दृश्यन्ते यदि विनेयविशेष्यकः संसारविशेषश्यकश्च सत्यत्वनिश्चयोऽनुवर्तते तर्हि भ्रान्तिर्न नष्टा इति वक्तव्यम्। तथा च भ्रान्तस्य वाक्यं कथमुपादेयं स्यान्मुमुक्षुभिः शिष्यैः। ननु गुरुः स्वयम् भ्रान्तोऽपि शिष्याणां भ्रान्तिमपनेतुं प्रयतते तत्र को दोषः। भगवतो व्यासस्य स्वयमभ्रान्तस्यापि संसारिणां भ्रान्तिं दूरीकर्तुं प्रयतमानस्य दृष्टत्वात् इति चेन्न द्वैतमते भ्रान्तानां सत्त्वस्य ज्ञानिभिः प्रतिपन्नत्वात् तेषां भ्रान्त्यपनयनानुकूलव्यापाराः संभाव्यन्ते। अद्वैतसाक्षात्कारानन्तरं तु चिदतिरिक्तं न किमपि प्रतीयते इति विषमोयं दृष्टान्तः।

अन्यच्च अद्वैतशास्त्रप्रवर्तकेन अद्वैतभूषणं द्वैतदूषणं च क्रियते। इदं चोभयविधं कार्यं द्वैताद्वैतज्ञानशून्येन न कर्तुं शक्यते। यदि अद्वैतसाक्षात्कारवतः द्वैताद्वैतविवेको न स्यात्-तदा एकस्य दूषणमपरस्य भूषणं न क्रियेत। यदि च द्वैताद्वैतविवेकः स्यात्तदा भेदज्ञानवत्त्वात् भ्रान्तिमान् स्यात् इत्युभयथा दोष आपद्यते। किञ्च द्वैताद्वैतयोरैक्ये यद्येकं दूष्येत अपरमपि दूष्येत, यद्येकं स्थाप्येत अपरमपि स्थाप्येत। एकदा दूषितस्य पुनः भूषणे च व्याघातः स्यात्। यद्यद्वैती द्वैतिभिः सह अद्वैतं कलयति तर्हि वादिप्रतिवादिभाव एव न संभवति। तैः सह द्वैतमेव कलयति चेत् भ्रान्तिरपरिहार्या स्यात्। ननु भ्रान्तिर्द्विविधा सोपाधिका निरुपाधिका चेति। तत्र सोपाधिका अधिष्ठानविशेषदर्शनाप्रतिबध्या तदनन्तरमपि अनुवर्तमानत्वात्। यथा वंशोरगभ्रान्तिःशंखपीतिमभ्रान्तिः सवितृसुषिरादिभ्रान्तिर्वा। एषा शब्दानुमानाभ्यामधिष्ठानयथार्थज्ञाने जातेऽपि भिन्नेन्द्रियेण जायमानतत्प्रत्यक्षे जागरूकेऽपि, दोषवशान्न निवर्तते प्रत्युत अनुवर्तते एव। तथा च सोपाधिकभ्रमस्थले तत्तदिन्द्रियजन्यानाहार्याप्रामाण्यज्ञानानास्कन्दि विरोधिप्रत्यक्षमेव तथाविधभ्रमनिवर्तकं दृष्टम्-अत एव अधिष्ठानासाधारणधर्मस्य वंशत्वस्य भिन्नेन्द्रियेण प्रत्यक्षे जातेऽपि चाक्षुषोरगभ्रान्तिर्न निवर्तते। दोषनिवृत्तौ तु तादृशप्रत्यक्षेण निवर्तते। ननु अद्वैततत्त्वोपदेशकस्य गुरोः ब्रह्मपरोक्षे ज्ञाने जातेऽपि भ्रान्तिरनुवर्तते। ततश्च सर्वोऽपि हानोपादानादिर्व्यवहारः शास्त्रप्रणयनं शास्त्रोपदेशः वादिप्रतिवादिभवः दूषणभूषणादिकं सर्वं संपद्यते को दोष इति चेत् न, भ्रमः कथमनुवर्तेत। उक्तविधज्ञानस्यैव तन्निवर्तकत्वात्। भ्रान्तावनुवर्तमानायामपि प्रपञ्चविषयिणी

प्रवृत्तिर्वा निवृत्तिर्वा अवश्यं निवर्तते इति वक्तव्यम् । परोक्षरूपाधिष्ठानतत्त्वज्ञानस्य भ्रान्त्यनिवर्तकत्वेऽपि प्रवृत्तिनिवृत्तिप्रतिबन्धकत्वावश्यंभावात् । अन्यथा, मण्डूकवसाक्तनयनस्य चाक्षुषसर्पभ्रमो जायते । तदानीं वंशत्वरूपासाधारणधर्मेण वंशज्ञाने जातेऽपि शाब्दे आनुमानिके त्वाचे वा सर्पाभावज्ञाने जातेऽपि अनुभवासिद्धा सर्पभ्रमजन्यभयकम्पादिनिवृत्तिर्न स्यात् दण्डादिकमुद्यम्य तदुपघाताय प्रवृत्तिश्च स्यात् । तथाचाद्वैतकालानले.

**कवलकवलिताक्षः शङ्खगं पीतिमानं कलयति चिरकालं सादरं लोचनाभ्याम् । विरहमपि तदानीं तत्र तस्यानुमिन्वन् क्षिपति न जलधारां तस्यसंक्षालनार्थम् ।**

## स्वप्नस्य भगवत्सृष्टत्वं सत्यत्वं तदधीनतिरोधानकत्वम् ।

स्वप्नो भगवदधीनः इति द्वैतिनां सिद्धान्तः । तन्नाभ्युपगच्छन्ति अद्वैतिनः यथोक्तमनन्त कृष्णशास्त्रिणाऽद्वैततत्त्वसुधायां सन्ध्याधिकरणे । " स्वप्ने न पारमार्थिकी सृष्टिः किन्तु शुक्त्यादिवन्मायामात्रम् । इयान् विशेषः—शुक्तिरूप्यादौ तत्तत्पूर्वदृष्टानुभवजनितसंस्कारसहकृता, तत्सदृशपुरोवर्त्यवच्छिन्नचैतन्याभिन्नप्रमातृचैतन्याश्रिता तूलाविद्या तत्तद्विषयाकारेण तत्तदाकारवृत्त्याकारेण च परिणमते साक्षिभास्यानां वृत्तिनिरपेक्षतामते तत्र विषयमात्राकारेण परिणमते;स्वप्ने तु सदृशपूर्वदृष्टानुभवजनितसंस्कारसहकृता प्रमातृचैतन्यमात्राश्रिता तूलाविद्या तत्तदात्मना जागर इव परिणमते । तत्र सूत्रे मायामात्रमित्यत्र मायापदं तूलाविद्यापरम् । मात्रपदसमभिव्याहारात् । तेन च जागरोपादानमायातो व्यावृत्तिर्लभ्यते । सा हि रथादीनां न साक्षादेवोपादानम्, किन्तु तत्तदवान्तरोपादानदारुमृत्तन्तुभावमनापन्ना स्वयमेव । अत एव जागरे शुक्तिरजतादीनामपि मायामात्रत्वम् । अयमेव न्यायः स्वाप्नेऽपि इति तदसारम्—तन्मते सृष्टित्वावच्छिन्नस्य अपारमार्मिकत्वात् स्वप्ने न पारमार्थिकी सृष्टिः इति कथनमनुचितम् स्वाप्नसृष्टेः मायाकार्यत्वात् मायामात्रत्वप्रतिपादनं न साधु । शुक्तिरूप्यस्यापि मायाकार्यत्वात् मायामात्रत्वं नास्ति । ब्रह्मातिरिक्तस्य सर्वस्यापि प्रपञ्चस्य मायाकार्यत्वरूपमायामात्रत्वस्य सत्त्वात् केवलं स्वाप्नपदार्थानां शुक्तिरूप्यादेश्च तत्कथनं न युक्तम् । ननु जाग्रत्पदार्थानां मायामात्रत्वं नास्ति तेषां मायामात्रोपादानकत्वाभावात् इति न वाच्यम् उपादानत्वं परिणामित्वान्नान्यत् । मायैव तत्तत्प्रापञ्चिकपदार्थाकारेण परिणमते इति हि तन्मतम् । अतः प्रपञ्चस्य प्रापञ्चिकपदार्थानाञ्च

मायोपादानकत्वमेवेति मायामात्रत्वमव्याहतम् । ननु व्यावहारिकेषु पदार्थेषु ब्रह्मणोऽपि उपादानत्वं अस्माभिरङ्गीक्रियते इति चेत् तावता किम्, भवदङ्गीकृतत्वमात्रेण निर्विकारस्य ब्राह्मणः उपादानत्वं न संभवति। उपादानत्वे तस्य परिणामित्वापातात् । ननु माया परिणाम्युपादानकरणं ब्रह्म विवर्तोपादानकारणमिति ब्रह्ममायोभयोपादानकत्वाज्जगतः न मायामात्रोपादानकत्वमिति चेत् न " **मायामात्रमिदं द्वैतमद्वैतं परमार्थत** " इति द्वैतत्वावच्छिन्नस्य मायामात्रत्वप्रतिपादनेन उपदर्शितवैशम्यायोगात् । स्वाप्नरथादीनां माया साक्षादुपादानं न तु तत्तदवान्तरोपादानदारुमृत्तन्तु-भावमापन्ना इति मायामात्रोपादानकत्वं संगच्छते इति चेन्न जगतः माया-मात्रत्वस्य प्रमाणेनोक्तत्वात् तस्मिन्नपि तत्तदवान्तरोपादानदारुमृत्तन्तुभावाना-मपन्नमायामात्रोपादानकत्वस्य अवश्यमभ्ङ्गीकार्यत्वात् । प्रत्यक्षविरोधःस्या-दिति चेन्न श्रुतिप्रतिपादिते विषये प्रत्यक्षविरोधस्याकिञ्चित्करत्वात् । अन्यथा तत्त्वमस्यादि महावाक्यप्रतिपादिते जीवब्रह्माभेदरूपविषये प्रत्यक्षविरोधः वज्रायितः स्यात् । ननु तत्त्वमस्यादिमहावाक्यानि श्रुतिशिरोभागगतानि वाक्यानि तैः सह प्रत्यक्षविरोधे प्रत्यक्षं परित्यज्यते मायामात्रमिति वाक्यं तु न श्रुतिः अपि तु गौडपादकारिका, तया विरोधे प्रत्यक्षं न परित्यक्तुं शक्यते इति चेत् न माण्डूक्योपनिषद्व्याख्याभूतानां गौडपादकारिकाणां व्याख्ये-योपनिषत्समानार्थकत्वे व्याख्येयोपनिषद्विरोधावश्यंभावः प्रत्यक्षस्य । व्याख्येयोपनिषदसमानार्थकत्वे कारिकाणां, तासां श्रुत्यव्याख्यानत्वेन अनुपा-देयत्वप्रसङ्गात् । विष्णुसहस्रनामभाष्ये शंकराचार्यैः " ओमित्येदक्षरमिदं सर्वं इत्युपक्रम्य ॐकारो विदितो येन स मुनिर्नेतरो जनः इत्यनन्तरंमाण्डोक्यो-पनिषत् " इत्युक्तत्वेन मायामात्रमित्यादीनां न गौडपादकारिकात्वं किंतु उपनिषत्त्वमेवेति वस्तुस्थितिः । तुष्यतु दुर्जनः इति न्यायेन अस्य वाक्यस्य गौडपादाचार्यकृतत्वाङ्गीकारेऽपि स्वदर्शनाचार्योक्तसिद्धान्तपरित्यागात अपसिद्धान्तो दुष्परिहरः । ' इयान् विशेषः ' इत्युपक्रम्योक्ता बालमनोहरा प्रक्रिया न श्रुतिसम्मता नापि स्मृतिषु प्रतिपादिता अत एव केवलं स्वमनी-षोत्प्रेक्षितत्वात् अप्रामाणिकी ।

ननु स्वाप्नपदार्थानां मायामात्रत्वाभावे सत्यत्वं वक्तव्यम् । सत्यत्वे च ते नित्याः अनित्याः वा। उभयथापि पूर्वोत्तरकालं दर्शनप्रसङ्गः । न च तदा

ते दृश्यन्ते। अतः प्रातीतिकत्वमवश्यमभ्युपेयम् शुक्तिरजतादिवत् । प्रतीतिकाले एव सृष्टिः तदवसानसमये एव तेषां निरोधः अतो न दोष इति चेन्न ।

प्रमाणाभावात्, उपादानानिमित्तानामभावाच्च। किञ्च स्वाप्नपदार्थं शरीरे स्थित्वैव पश्यति निर्गत्य वा । नाद्यः मेरुमन्दरादिदर्शनायोगात्। न द्वितीयः। कुरुषु सुप्तस्य पाञ्चालान् पश्यतस्तत्रैव प्रबोधे शरीरप्रवेशोऽस्य पश्चादेवेति प्राप्तेः। किञ्च हेमन्ते सुप्तस्य वसन्तप्रतीतिस्तावदस्ति। न च वसन्तसत्ता तदास्ति प्रतीतिकारणमपि नास्ति। इन्द्रियवृत्तीनामुपरतत्वान्मनसो बाह्यार्थेष्वस्वातन्त्र्यात् । यदि चैते विषया द्रष्टुर्भिन्नास्तदा समीपस्थैर्दृश्येरन्। बाह्यार्थत्वात् अथ न ततोऽतिरिक्तास्तर्ह्यागतं कल्पितत्वमेव। परमार्थतः करितुरगादिभावाभावात् । तत्काल एव सृष्टिनिरोधपक्षे च प्रागुत्तरकालं मृत्पिण्डकपालादीनि दृश्येरन्। न च दृश्यन्ते। अतः प्रातीतिकत्वात् मरुमरीचिकाजलादिवन्न स्वप्नविषयस्येश्वराधीनत्वामिति न तस्य महामाहिमत्वमनेन सिध्यति इति तन्न। यदुक्तं स्वाप्नस्य प्राक्पश्चाददृष्टेरसत्त्वाद्भगवदधीनत्वायोग इति, तदनुपपन्नम्। प्रागसतामर्थानामेव सृष्टिः स्वप्ने भवति। अनन्तरमेव निरोधश्चाङ्गीक्रियते । न च तत्र प्रमाणं नेतिवाच्यम्। 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति। अथ रथान् रथयोगान् पथः सृजते। स एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' इति प्रमाणस्य जागरुकत्वात्। न हि कर्तुरभावान्न सृष्टिरुपपन्ना इति वाच्यम्। ईश्वरस्यैव स्वाप्नसृष्टिकर्तृत्वेन श्रुतीतावगतेः 'सृजते' इति पदप्रयोगेण स्वाप्नपदार्थानां सत्यत्वं ज्ञाप्यते। अन्यथा अथ 'रथान् रथयोगान् पथः सृजते' इत्यस्य स्थले 'अथ रथान् रथयोगान् पथः पश्यति इति वाक्येनैवालम्। स्वाप्नसृष्टिकर्तृत्वं भगवतः किमर्थं वक्तव्यमिति चेन्न । सर्वस्वातंत्र्यलक्षणो भगवतोऽतिवेलो महिमा, सर्वस्य तदधीनत्वे स्पष्टतया पृथक् पृथक् निश्चिते सति बुद्धौ प्रकटतामाटीकते इति सर्वं भगवदधीनमिति अवश्यं वक्तव्यम् । ननु कर्तृसत्त्वेऽपि उपादानकारणाभावान्न सृष्टिः पारमार्थिकी इति चेन्न। अनाद्यनुभवप्रवाहोत्पन्ना मायाशब्दवाच्या वासनापरपर्यायाः संस्कारा एव उपादानतामश्नुवते । न च संस्काराणां गुणत्वेन उपादानत्वानुपपत्तिः। तेषां मनोवृत्तित्वात् द्रव्यत्वाच्च । संस्काराणां चातीन्द्रियत्वेन त्र्यणुकजन्मविनाशयोरिव प्रागूर्ध्वं चानुपलम्भो न दोषाय। तदैव सृष्टिसंहारकरणमसम्भावितमिति चेन्न परिच्छिन्नशक्तिमतो जीवस्य

असंभावितत्वेऽपि अपरिच्छिन्नशक्तिमतो भगवतो विष्णोः न किमपि असंभावितम् । अथवा यथा जीवः मनोरथे संस्कारयोनीन् अर्थान् मनसा अनुभवति, एवं स्वप्नेऽपीति किमनुपपन्नम् । इयांस्तु विशेषः—मनोरथादौ प्रयत्नपूर्विका पदार्थसृष्टिः । स्वप्ने पुनरीश्वरेच्छाधीनैवेति ।

**"स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता" 'अविद्यमानोप्यवभाति हि द्वयोर्ध्यातुर्धिया स्वप्नमनोरथो यथे' ति** । श्रुतिस्मृतिषु स्वप्नप्रतीतेर्भ्रान्तित्वं कथमुच्यते इति चेत् तत्र सर्वत्र जागरानुभूतपदार्थैरेकत्वज्ञानस्य भ्रान्तित्वमुच्यते । स्वप्ने हि तात्कालिकतयाऽदृष्टचरानेव तनयादीन् दृष्टचरतयाऽनुसन्धत्ते। स्वप्नदृष्टानां गगनादीनां नित्यत्वादिकं घटादीनां मृदाद्युपादानकत्वं बाह्यर्थक्रियाक्षमत्वं च भ्रान्तिविषय इति श्रुतिस्मृतीनामाशयः इत्यवगन्तव्यम् । ननु जाग्रत्वस्यापि संस्कारोऽस्त्येवेति सोपादानत्वसंभवात् कथं तत्प्रतीतिर्भ्रान्तिरित्युच्यते । अन्यथा अर्थप्रतीतिरपि भ्रान्तिः स्यात् अविशेषादिति मैवम् । न हि वयं कारणसामग्रीसंपादनसंभवमात्रेणार्थानां सत्यतामातिष्ठामहे । किंतु बाधाभावेनेति वक्ष्यामः । सामग्र्याभावेनासत्यत्वं ब्रुवाणं प्रति तु तदासिद्धिरावेदिता । अस्ति च जाग्रत्त्वप्रतीतेर्बाधः । स्वाप्न एवायं न जागरानुभूत इति बाधोदयात् । ननु जाग्रत्त्वमात्रस्य असत्त्वात् तत्प्रतीतिरेव भ्रान्तिरिति न युक्तम् । अर्थानामपि केषांचिदसत्त्वेन तत्प्रतीतेरपि भ्रान्तित्वमास्थेयमेव तथा हि स्वप्ने स्वशिरच्छेदादिप्रतीतिरपि वर्तते । न च तदुत्पत्तौ संस्काररूपोपादानकारणमस्ति । तेषामननुभूतत्वेन कथं तद्विषयकाः संस्काराः स्युः । अननुभूतविषयेऽपि यदि संस्कारा अङ्गीक्रियन्ते तर्हि कदाचित् स्मृतिरपि अननुभूतार्थविषयिणी स्यात् । यद्यपि स्वशिरच्छेदादेर्बाधो नास्ति तथापि कारणाभावादसत्त्वमङ्गीकार्यमेवेति चेत् न, संसारस्यानादित्वात् क्वचित्-जन्मान्तरे तस्यानुभवसंभवेन तत्संस्कार उपपद्यते । अत एव 'अदृष्टे चाश्रुते' इत्यादि श्रुतिस्मृतिविरोधोऽपि न । अनुभवं विना संस्कारसत्त्वाभ्युपगमे एव स स्यात् । किंच अत्रापि जन्मनि श्रवणजनितसंस्कारः संभवितुमर्हति । ननु शशविषाणादिप्रतीतौ कथम् 'न हि जन्मान्तरे क्वचिदपि तदनुभवः संभवति' 'धाता यथापूर्वमकल्पय' दिति सर्वकल्पानामेकविधत्वमाम्नायते मैवम् । शशविषाणादिप्रमाऽसंभवेऽपि शब्दादिना तज्ज्ञानसंभवेन संस्कारोपपत्तेः । ननु शब्दादिना शशविषाणादिभ्रमोऽपि यस्य नोत्पन्नः तस्य कथम् । न हि सर्वस्यापि भ्रान्तिरस्तीति नियमः नापि स्वप्ने-

तद्दर्शनं वारयितुं शक्यते इति चेदुच्यते। शशादीनां विषाणादीनां चोपादानासंभवेन असत्त्वं वक्तुं न शक्यते सर्वेषां तेषामनुभूतत्त्वसंभवेन तद्विषयकसंस्कारोपपत्तेः। शशत्वविषाणित्वादिसामानाधिकरण्यं न दृष्टमिति चेत्-, माभूत् यद्यपि शशत्वविषाणित्वादीनां सामानाधिकरण्यं शशविषाणादिसंबन्धविशेषो जागरे नानुभूतस्तथापि विविक्ततया शशत्वादिकमनुभूयते एवेति तत्संस्कारसंभवेन न शशादीनामसत्त्वं वक्तव्यम्।

ननु भवेदेषा कल्पनाप्रामाणिकी यदि स्वाप्नार्थानां वासनोपादानकत्वे प्रमाणं स्यात् इति चेत् उच्यते। वासनामात्रोपादानकत्वादेव हि बाह्यार्थक्रियासामर्थ्यलक्षणा स्पष्टता या जागरोपलब्धेषु पदार्थेषु अनुभूयते सा स्वाप्नार्थेषु नानुभूयते। अयमर्थः। स्वाप्नाः पदार्था नासन्ताः बाधाभावात्। नाप्यनादिनित्याः। पूर्वोत्तरमुपलम्भापातात्। न च उत्पत्तिर्वर्तते सा च निरुपादाना इति मनोरमम्। ततश्च उपादानेन केनचिद्भवितव्यम्। न च ते बाह्यमृदाद्युपादानकाः बाह्यार्थक्रियासामर्थ्यविधुरत्वात् विमतो घटो न बाह्यमृदाद्युपादानको बाह्यमृदाद्युपादानकार्यक्रियाऽकारित्वात् पटवदिति प्रयोगसंभवात्। न चोपादानान्तरमस्ति। ततः परिशेषाद्वासनोपादनका एवेति वक्तव्यम्। एवमेव परिशेषात् भगवत्कर्तृकत्वं तात्कालिकोत्पत्तिविनाशालित्वं स्वाप्नपदार्थानां साधयितु शक्यते एव। अत्र भाष्योक्त आगमोऽपि प्रमाणम्—तथाहि

**मनोगतांस्तु संस्कारान् स्वेच्छया परमेश्वरः।**
**प्रदशयति जीवाय स स्वप्न इति गीयते॥**
**यदन्यथात्वं जाग्रत्त्वं सा भ्रान्तिस्तत्र तत्कृता।**
**अनभिव्यक्तरूपत्वान्नान्यसाधनजं भवेत्॥**

ननु स्वाप्नानां पदार्थानां बाह्योपादानाजन्यत्वान्न सत्त्वं संभवति इति वाच्यम्। आन्तरमनउपादानकज्ञानादीनां बाह्योपादानाजन्यत्वेऽपि सत्त्वदर्शनाद्व्यभिचारः। अतिसूक्ष्मतरविलक्षणस्वाप्नतुरगादीनामपि स्वोचितातिसूक्ष्मतत्तत्संस्कारोपादानजन्यत्वमात्रेणापि सत्त्वसंभवान्न काचिदनुपपत्तिः।

अत्राहुः वादिराजश्रीमच्चरणाः तत्त्वप्रकाशिकागुर्वर्थदीपिकायाम्—"अत्राहुर्मायावादिनः मायामात्रपदेन स्वाप्नपदार्थानां मिथ्यात्वमेव सूत्रकृता

प्रतिज्ञातमिति । तदतीव हास्यम् । 'कात्स्न्येनानभिव्यक्तस्वरूपत्वा' दिति हेतौ सस्वरूपत्वमनुपलम्भबाधपरिहाराय कात्स्न्येनानभिव्यक्तत्वापरपर्यायमतिसूक्ष्मत्वं च वदन् सूत्रकारस्तद्विरुद्धं निस्स्वरूपत्वरूपं मिथ्यात्वं कथं प्राक् प्रतिजानीयात् । 'सन्ध्येसृष्टि' रिति प्राक् सृष्टिकथनात् उपरि सूचकश्चेति सत्त्वे युक्तिकथनाच्च न मध्ये मिथ्यात्वं सिषाधयिषितम् । न हि कश्चित् शुक्तौ रजतं पश्यतीतिवद्रजतं सृजतीति ब्रूते । यदि चाद्यसूत्रस्यैव विश्वतोमुखत्वादिपूर्वपक्षसूत्रता तर्हि सूत्रलक्षणाभावेन सूत्रत्वमेव न स्यात् । श्रुत्युपबृंहितसूत्रस्य पूर्वपक्षतायां श्रुत्युपोद्बलितं भवदैक्यं च न सिद्धान्तः स्यात् अपि चोक्तविधया मायामात्रमितिसूत्रे हेतुविरोधेन मिथ्यात्वे तात्पर्याभावे किंबलेन अस्य पूर्वपक्षता कल्प्यते । किं च परानुकूलसूत्रस्य त्वया पूर्वपक्षत्वकल्पने सोऽपि त्वदनुकूलसूत्रस्य पूर्वपक्षतां कुतो न कल्पयेत् । अतो ब्राह्मणे वध्यावध्यविभागवत्सूत्रेषु नायं विभागः प्रेक्षावतां कर्तुमुचितः । कस्तर्हि सूत्रार्थ इति चेद् ब्रूमस्तावत्तवानर्थभूतमर्थम् । त्वं च समाहितः शृणु । 'सन्ध्ये सृष्टि' रिति प्राथमिके सूत्रे 'न तत्रे' ति रथादीनां कारणीभूतं प्रागभावं प्रागुक्त्वा 'अथ रथादीन् सृजते' इति सयुक्तिकं सृष्टिकथकश्रुत्युपस्कारेण असिध्यादिदोषरहितरूप्दत्वाख्यहेतुना सन्ध्यस्य सत्त्वं स्वसिद्धान्ततया प्राक् प्रसाध्य सन्ध्यं न मिथ्या मिथ्यात्वोपयुक्तमायाशून्यत्वात् सस्वरूपत्वाच्चब्रह्मवदिति परपक्षप्रातिक्षेपं च हृदि निधाय सस्वरूपत्वेनैव हेतुना पूर्वोक्तब्रह्मनिदर्शनेनैव सन्ध्ये पुनराद्यहेतोरासिद्धिं परिजिहीर्षुः मायाया अमात्रं मात्रयापि शून्यमिति साध्यनिरूपणं कृतवानिति पदसंपदैव लभ्यस्य पूर्वोत्तरसूत्राणामत्रैवोक्तहेतोश्चानुकूलस्य सकलजनमनोरञ्जनस्याप्यर्थस्य संभवात् । अयमर्थः। मिथ्यात्ववादिन एवानर्थो न तु सत्यत्ववादिनामस्माकम् अत एवैकयोक्त्या बह्वर्थलाभाय मायामात्रमित्युक्तम् अन्यथा वासनानिर्मितमित्यवक्ष्यत् । अपि चानन्तानन्तजीवेषु प्रतिशरीरं प्रतिदिनमतिसूक्ष्मतरकरितुरगदेहगेहयोषिदन्नपरमान्नादिविचित्रस्वोपभोग्यपदार्थसर्जनेन सुखहेतौ महामहिम्नि स्वोपकारके परमात्मनि स्यादेव विवेकिनां भक्त्युद्रेकः । मिथ्यासृष्टित्वे तु कुहकतया विप्रलम्भके मायाविनीव विवेकिनामनादर एव स्यात् । न भक्तिः । एवं च भक्तिपादानुगुण्यं चास्मदुक्तार्थे एवार्थे न परोत्प्रेक्षितकुत्सितार्थे । सुप्तावप्युपादानाविद्यायाः सत्त्वेन च ब्रह्मचैतन्यस्य च सत्त्वेन केवलं मायामयीयं भ्रान्तिस्तदापि कुतो नाऽभूत् । 'मनो-

गतांस्तु संस्कारान्' इति परमाप्ततमेनैव सूत्रकृता अन्यत्रोक्तमनोगतसंस्कारोपादानकत्वस्यैव मायामात्रशब्दार्थत्वे तु मनस उपरतत्वान्न सुप्तौ तत्प्रसङ्गः। चक्षुरादीनां प्रतिबुद्धत्वेन तत्तदर्थप्रतीतिप्रतिरुद्धत्वान्न जाग्रतीति सर्वसामञ्जस्यसंभवाच्च। अतो यत्किञ्चिदेतत् भावबोधकारास्तु सूत्रक्रमसार्थक्यमेवमाहुः "सूत्रक्रमस्तु प्रथमसूत्रे स्वाप्नपदार्थानां सत्त्वसिद्ध्यर्थं सृष्टिनिरोधोक्तिः। सृष्टिनिरोधयोः कर्तृसापेक्षत्वात् द्वितीये तदुक्तिः तृतीये सृष्टिहेतुभूतोपादानाद्युक्तिः। तृतीयसूत्रेण 'अनभिव्यक्तस्वरूपत्वात्' इति बाह्योपादानकत्वाभावोक्त्यैव प्रतिपक्षानुमानोत्थानात्। चतुर्थे— तस्य बाधाप्रयोजकत्वोक्तिरिति सत्यनाथश्रीमच्चरणैरधिकरणार्थसंग्रहः सुविशदं कृतः अभिनवचन्द्रिकायाम्। ईश्वराधीन एव स्वप्नविषयः सत्यत्वात्। न च प्रागुत्तरकालमुपलम्भप्रसङ्गः। तत्काल एव सृष्टिनिरोधाङ्गीकारात्। न च तत्र प्रमाणाभावः—"अथ रथान् रथयोगान् पथः सृजते' इति श्रुतेः। न च कर्तुरभावात् सृष्ट्ययोगः। 'य एषु सुप्तेषु जागर्ति' 'एतस्माद्यत्र पुत्रो जायते' इति श्रुतिभ्यामीश्वरस्यैव कर्तृत्वाङ्गीकारात्। न चोपादाननिमित्ताभावः' मनोगतांश्च संस्कारा' निति श्रुतिबलेन वासनाया उपादानत्वेन ईश्वरेच्छायाश्च निमित्तत्वेन अङ्गीकारात्। एतेन उत्कण्ठकोलाहलाः प्रत्युक्ताः। वासनामयानां मेर्वादीनां मनसैव दर्शनसभवात्। बाह्यकारणाभावात्, प्राक्मृत्पिण्डादीनाम्, ऊर्ध्वं कपालादीनां च प्रतितेरप्रसङ्गात्। ननु यदि न स्वप्नविषया बाह्यार्थजन्याः तर्हि सत्त्वं न प्राप्नोति शुक्तिरजतादिवत् इति चेत्, न शुभाशुभकारणत्वेन सत्त्वस्यैव निश्चितत्त्वात्। 'यदा कर्मसु काम्येषु' इति, 'पुरुषं कृष्णं कृष्णदन्तं पश्यति' इति श्रुतिभ्याम् अन्वयव्यतिरेकसध्रीचीनप्रत्यक्षेण च, कारणत्वस्य सिद्धेः" इति।

यदुक्तमद्वैततत्त्वसुधायां 'तत्र च जागरभ्रम इव विनैव ईश्वरसृष्टत्वं पारमार्थिकत्वं च विना निर्वाहात् किमितीश्वरसृष्टत्वं स्वाप्नानां स्वीकर्तव्यमिति तदविचारप्रलपितम्। द्वैतिभिर्जागरभ्रमस्यापि ईश्वरसृष्टत्वं पारमार्थिकत्वमवश्यमङ्गीक्रियते "देहयोगाद्वासोऽपि" इति सूत्रे देहयोगेन वासो जाग्रदपि तत एव इति भाष्यात् ईश्वरसृष्टत्वादेव पारमार्थिकत्वमपि। यदप्युक्तं 'यदि श्रुतिप्रामाण्यात्, तर्हि जागरवदेव ईश्वरसृष्टानामेव स्मरणमात्रं स्वप्न इत्येतावन्मात्रमङ्गीक्रियताम् किमिति वासनापरिणामत्वमपि स्वाप्नानाम्' इत्यपि अतीव हास्यम्। न हि द्वैतिभिरद्वैतिभिर्वा जागरस्य स्मरणमात्रत्वमङ्गीक्रियते। यदि च

जागरपदार्थानां स्मरणमात्रत्वमङ्गीक्रियते कथं तेषां व्यावहारिकी सत्ता कथंतरामर्थक्रियाकारित्वम् ।

यच्चाप्युक्तं " न हि द्वैते अद्वैते वा कारणात्मातिरिक्तः प्रागभावो नाम कश्चिदस्ती" ति तदप्यचारु अद्वैते यथाकथमप्यास्ताम्। द्वैते प्रागभावस्य अतिरिक्तत्त्वस्वीकारात् ।

**प्राक्प्रध्वंससदात्वेन त्रिविधोऽभाव इष्यते ।**

इति अल्पिष्ठं सरलतमं तत्त्वसङ्ख्यानं ग्रन्थमप्यजानतो सुधाखण्डनप्रवृत्तिर्दुःसाहसमेव । कात्स्न्र्येन अनभिव्यक्तस्वरूपत्वमीश्वरसृष्टत्वं च व्याहतमित्यपि निन्द्यम् । ईश्वरसृष्टानां सत्यभूतानां परस्सहस्रपदार्थानां कात्स्न्र्येनानभिव्यक्तस्वरूपत्वस्य द्वैतिभिरद्वैतिभिश्च स्वीकारात् । ब्रह्मणोऽपि कात्स्न्र्येनानभिव्यक्तस्वरूपत्वान्मायामात्रत्वं स्यात् ।

स्वाप्नानां वासनापरिणामत्वे तस्या मृदो घटादाविव अनुवेधापत्तिः इत्यापादनमसत् । स्वाप्नानामविद्यापरिणामित्वे अविद्यानुविद्धतया भानप्रसङ्गात् जागरे प्रतीयमानानां घटादीनां शुक्तिरजतादीनामपि अविद्यानुविद्धतया प्रतीतिप्रसङ्गात् च 'सर्वथा तत्तत्पुरुषमात्रानुभाव्यानां स्वाप्नानामीश्वरसृष्टत्वं न क्षोदक्षमम्' इत्यप्यसारम् । बुद्धिर्ज्ञानमसंमोह इत्यादिना " **भवन्तिभावाभूतानां मत्त एव पृथग्विधाः** " तत्तत्पुरुषानुभाव्यानां ज्ञानसुखदुःखादीनां इति ईश्वरनिमित्तकत्वोक्तेः । सात्विकानामीश्वरसृज्यत्वमुपपद्यते न राजसतामसानामित्यपि न—

**ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।**
**मत्त एवेति तान् विद्धि नत्वहं तेषु ते मयि ॥**

इति राजसतामसानामपि ईश्वरसृज्यत्वोक्तेः । 'अर्थक्रियाकारित्वमसतोप्यविशिष्टम्; स्वाप्नानां चरमधातुविसर्गादीनां प्रसिद्धत्वात्' इत्यपि न साधु । अर्थक्रियारित्वं च अर्थक्रियाजनकत्वं जनकत्वं च कारणत्वरूपम्—कार्याव्यवहितपूर्वक्षणवृत्तित्वं च कारणत्वम्-तच्च असतो न सम्भवति ।

'कुतो वा ईश्वरसृष्टत्वाविशेषे जागरात् स्वाप्नानां वैधर्म्यम् । इति न साधु कुतो वा अविद्यासृष्टत्वाविशेषे जागरस्थेभ्यः स्वाप्नानां वैधर्म्यमित्यपि वक्तुं शक्यत्वात् ।

'तत्त्वे चेश्वरसृष्टेषु केषांचन तत्तज्जीवमात्रानुभाव्यत्वमिति वैषम्यं निर्निमित्तं स्यात्' इत्यप्यसत् ईश्वरसृष्टत्वेन उभाभ्यामङ्गीकृतानां सुखादिपदार्थानां तत्तज्जीवमात्रानुभाव्यत्वस्य दर्शनात् ।

"वासना हिं मनोविकारो धर्मः इति मनस एव स्वाप्नाश्रयत्वं स्यात् । जाग्रदाद्यवस्था तु जीवस्य, इति जीवस्य कथमवस्थात्रयभाक्त्वम्' इत्यसत् कूटस्थत्वेन निर्विकारत्वेन असंङ्गत्वेन च प्रसिद्धचैतन्यस्वरूपस्य जीवस्य त्वन्मतेऽपि कथमवस्थात्रयभाक्त्वम्—देहेन्द्रियादिगतावस्थात्रयस्वामित्वाभिमानेन तथा इति चेत् तदेवोत्तरमत्रापि प्रतिसन्धीयताम् । यदप्युक्तम् तत्रैव "इदमेवात्र पृच्छ्यते—किंवा अत्र ईश्वरस्य कृत्यम्? वासना परिणाममात्रेण तूलाविद्यापरिणामतामात्रेण निर्वाहात्" इति तत् प्रलापमात्रम् जागरेऽपि ईश्वरस्य किं कृत्यमित्यपि सुवचत्वात्—इष्टापत्तौ नास्तिकमतप्रवेशापत्तेः ।

"मायापदेन वासनालक्षणासंभवः" इत्युपक्रम्य यद् बहु असंबद्धतयोक्तं तन्न संस्काराणां त्वद्रीत्या साक्षात् वा परंपरया वा मायाकार्यत्वात् कारणवाचकमायापदस्य वासनापरपर्यायसंस्कारलक्षकत्वसंभवात् । 'गोभिः श्रीणीत मत्सरम्' इत्यत्र च गोपदस्य गव्यपयोलक्षकत्वाङ्गीकारात् । मायापदस्य प्रज्ञा—इच्छावाचकत्वे प्रमाणं प्रदर्शितमेवाकरे—मात्रशब्दस्य व्युत्पत्तेः प्रमाणे नैवोक्तत्वात् का तत्र कथंता ।

"अन्यथा परम्परया कुलालादिसृष्टानामपीश्वरसृष्टत्वाविशेषात् जीवसृष्टिकथैव लुप्यते"—इति यदुक्तं तदपि न "**भवन्ति भावाभूतानां मत्त एव पृथग्विधाः**" "**अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा**" इत्यादि उक्तवन्तं गीताचार्यं गीताव्याख्यातारं भवदाचार्यं च पृच्छ ।

स्वाप्नानामविद्योपादानकत्वाङ्गीकारेऽपि तत्तत्पुरुषानुभाव्यस्वाप्नानामुपपत्त्यर्थं विविधाः संस्कारा अवश्यमास्थेया एवेति स्वाप्नानां वासनामयत्वे उक्ते को दोषः ।

यदुक्तं सत्त्वस्य कारणतावच्छेदकत्वमस्माभिरपि नाङ्गीक्रियते इति तन्न सत एव वह्नेर्धूमकारणत्वमित्युक्ते वह्नित्वस्यैव कारणतावच्छेदकत्वमुक्तं भवति न सत्त्वस्य । सत्त्वस्य तु कारणताव्यापकत्वमेव व्यापकाभावे च व्याप्याभावः सिद्ध एवेति नासतः कारणत्वम् ।

सूचकश्चेति सूत्रस्य द्वैतमते एव स्वारस्यमित्युपपादितमस्माभिरधस्तात् ।

'तर्हि ज्ञाननाशेऽपि स्वाप्नगजादीनां जागरेप्यनुवृत्तिरिति वर्णनं सुधाया व्याहतमितिकथनं साहसमात्रम् । स्वाप्नगजादीनामनुवृत्तिःकुत्रापि नाङ्गीकृता सुधायाम् । अनुभवानुसारेण क्वचिद् स्पष्टत्वं बाह्यार्थक्रियाकारित्वमाङ्गीकृतम् : उत्सर्गतस्तु बाह्यार्थक्रियाजनकत्वाभाव. इत्येतत्सूचयितुं कात्स्न्येन इति पदं सूत्रे प्रयुक्तमित्यपि केचित् ।

यच्चाप्युक्तं "स्वाप्नोऽपीश्वरसृष्टत्वेन यद्यर्थक्रियाकारीईश्वरेच्छया, तर्हि कथं कात्स्न्येनाभिव्यक्तस्वरूपत्वेन तस्य मनोविकारतोपपादनम्" इति न सम्यक् - मनोविकाराणामपि ईश्वरसृष्टत्वे विरोधाभावात् प्रमाणस्य उपन्यस्तत्वाच्च । का तत्र कथन्ता ।

"पराभिध्यानात्तु तिरोहितं ततोह्यस्य बन्धविपर्ययौ" 'देहयोगाद्वासोऽपि' इत्यनयोः सूत्रयोः सामञ्जस्येन योजनं द्वैतमते एव नाद्वैतमते ।

ननु स्वप्नतिरोधानं न ईश्वराधीनम् तस्य बाह्याज्ञानजन्यत्वेन अज्ञाननाशे सन्तत्यनुत्पादसंभवात् तथा च ज्ञानेन अज्ञाननाशद्वारा स्वप्नतिरोधानसंभवात् न तस्य ईश्वराधीनत्वमिति पूर्वपक्षे प्राप्ते ज्ञानाज्ञानयोरचेतनत्वेन स्वातन्त्र्याभावात् तदधीनयोः अपि बन्धमोक्षयोर्भगवदधीनत्वावगमात् बाह्यज्ञानाधीनस्य स्पप्ननिरोधस्य भगवदधीनत्वप्रतिपादनं श्रुतिपन्नत्वादुपपद्यते ।

एवमेव न जागरणं भगवदधीनम् तस्यकालाधीनत्वात् । न चाचेतनत्वात्तदधीनत्वानुपपत्तिः । कालाधीनत्वस्य अनुभवसिद्धत्वेन अचेतनत्वानुमानस्य बाधितविषयत्वात् । न चानुभवो भ्रमः बाधकाभावात् । अतो जाग्रदवस्थाया भगवदधीनत्वाभाव इति पूर्वपक्षे प्राप्ते जाग्रदवस्थाऽपि भगवदधीनैव । स एव जागरिते स्थापयति स स्वप्ने स प्रभुस्तुराषाट इति श्रुतेः । अत एवाचेनत्वानुमानमपि कालाधीनत्वानिवर्तकम्, श्रुतिविरोधेन प्रत्यक्षस्य अप्रामाण्यात् । कालस्य निमित्ततामात्रविषयकं प्रत्यक्षं बाधाभवात् प्रमाणमेव । अतो हरेः जाग्रत्प्रवर्तकत्वेन महामहिमत्वं प्रतिपादनं युक्तम् ।

यद्वा भवत्ववस्थान्तराणां भगवदधीनत्वं न जाग्रदवस्थायाः, किंतु जीवाधीनैव सा । तत्र जीवस्य देहादिकं प्रति स्वातन्त्र्यप्रतीतिदर्शनात् ।

नचेयं भ्रान्तिः। जीवस्य चेतनत्वेन पूर्वोक्तन्यायस्य अबाधकत्वात् बाधकान्तराभावाच्चेति पूर्वपक्षोत्थानेनैतदारम्भवैय्यर्थ्यम्। अत एवसूत्रे " जाग्रत् " इत्यवे वक्तव्ये देहयोगाद्वास इत्युक्तम्। व्याख्यातं च भाष्ये देहयोगेनेति। विवृतं टीकायां देहाभिमानिनेति। एतदेवाभिप्रेत्योक्तं न्यायविवरणे '**चेतनान्तरस्य अस्वातन्त्र्या**' दिति। अतएव स्वातन्त्र्याभिमानस्य भ्रमत्वोपपादनाय जीवस्यापि भगवदधीनत्वप्रतिपादकस्य स एव जागरिते स्थापयति इति विशेषप्रमाणस्योक्तिरिति। अत्र षट्प्रश्नोपनिषद् विशषतोऽवधेया भवति तथाहि— " अत्रैष देवः स्वप्ने महिमानमनुभवति। यत् दृष्टं दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुश्रृणोति। देशदिगन्तरेभ्यश्च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति दृष्टं चादृष्टं च श्रुतं चाश्रुतं च अनुभूतं चानुभूतं च सच्चासच्च सर्वं पश्यति सर्वः पश्यति"। इति प्र. उ. ४-५ तथैव अत्रत्यशांकरभाष्यमपि विशेषतो मननीयम्।

" कथं महिमानमनुभवतीत्युच्यते। यन्मित्रं पुत्रादि वा पूर्वं दृष्टं तद्वासनावासितः पुत्रमित्रादिवासनासमुद्भूतं पुत्रं मित्रमिव वा अविद्यया पश्यतीत्येवं मन्यते। तथा श्रुतमर्थं तद्वासनया अनुश्रृणोतीव।......तथा दृष्टं च अस्मिन् जन्मनि अदृष्टं च जन्मान्तरदृष्टमित्यर्थः अत्यन्तादृष्टे वासनानुपपत्तेः। सच्च परमार्थोदकादि। असच्च मरीच्युदकादि "।.......इति।

## अथनिर्गुणत्ववादभङ्गः।

" सर्वेषामपिकारणवाक्यानां गुणोपसंहारन्यायेन निर्विशेषतात्पर्यमात्रकत्वे तात्पर्यमिति तु विशेषः " इति अद्वैततत्त्वसुधा तत्तुच्छम् — निर्विशेषे शब्दमात्रस्य अप्रवृत्तेः, कुतः ओंकारस्य, कुतस्तरां वेदवाक्यानां, कुतस्तमां सर्वेषां कारणवाक्यानां तत्र तात्पर्यकल्पना? ननु निर्गुणं ब्रह्म श्रुत्या बोध्यते— साक्षी चेता केवलो निर्गुणश्चेति श्रुतेरिति चेन्न, तयैव श्रुत्या ब्रह्मणि साक्षित्वचेतृत्व-केवलत्वनिर्गुणत्वरूपधर्माणां बोधनात्। '**बृहन्तो ह्यस्मिन् गुणाः**' इति श्रुत्या '**ब्रह्मेशानादिभिर्देवैः समेतैर्यद्गुणांशकः। नावसापयितुंशक्यो व्याचक्षाणैश्च सर्वदा**' इति स्मृत्याच, ब्रह्म धर्मवत्, पदार्थत्वादित्यनुमानेन च समानसत्ताकधर्मवत्तया ब्रह्म सिध्यति। न च सगुणप्रकरणस्थाया श्रुते. उपास्तिविधिविषयविशेषणसमर्पकत्वेन तत्परत्वाभावः। वेदभागानां सर्वेषामपि सविशेषब्रह्मप्रतिपादकत्वस्यैवौचित्यात् निर्विशेषब्रह्मप्रातिपादकत्वासंभवाच्च। ननु प्रत्यक्षादि-

प्रमाणान्तरैः प्राप्तानां धर्माणामनुवादमात्रं क्रियते तत्र तात्पर्यं नास्त्येव इति चेन्न; सत्यकामत्वादीनां प्रमाणान्तरैरप्राप्तत्वात् । न च प्रमाणान्तरैरप्राप्तत्वादपूर्वत्वेऽपि अन्यशेषत्वात्तत्र तात्पर्यं नास्तीति चेन्न, '**सत्यं ज्ञानमनन्तं ब्रह्म**' इत्यादि वाक्य-घटकानामपि शब्दानां ज्ञानार्थत्वेन अन्यशेष-भूतेषु सत्यत्वादिषु तात्पर्याभावेन ब्रह्मणः असत्यत्वाद्यापातात् । अपि च निर्गुणप्रकरणस्थैरपि वाक्यैर्गुणा ब्रह्मणि बोध्यन्ते, निर्गुणप्रकरणस्थानां वाक्यानामनुपासनार्थत्वात् तत्प्रतिपादितानां गुणानां नान्यशेषत्वं संभवति । ननु तत्रत्यवाक्यै-रपि अद्वितीयब्रह्मप्रतिपत्त्यनुकूलनिषेधापेक्षितविषयसमर्पणात् अन्यथासिद्धिरिति चेन्न, पूर्वपक्षसिद्धान्तभावसूचक-यत्तन्नेत्यादिपदाभावेन निषेधार्थमनुवाद इत्यस्य प्रकृते असंगतत्वात् । अस्यैवार्थस्य वक्तव्यत्वे 'ब्रह्मणि न किमप्यस्ति' इत्येता-दृशेनैव वाक्येन भाव्यम् । ननु '**नेह नानास्ति किञ्चन**' इत्येव वाक्यं वर्तते इति चेन्न, तस्य वाक्यस्य उपक्रमादितात्पर्यग्राहकलिङ्गैरन्यपरत्वाध्यवसायात् । अन्यच्च, श्रुतिप्राप्तस्य श्रुत्या निषेधे सुन्दोपसुन्दन्यायेन परस्परं विरुध्यमानयोः श्रुत्योः न कुत्रापि तात्पर्यं सिध्येत् । ननु सगुणत्वस्य सविशेषत्वस्य वा श्रुति-प्राप्तत्वमेव नास्ति, न हि श्रुतिप्राप्तत्वं श्रुतिप्रसक्तत्वम्; अतिप्रसङ्गात्, तत्प्रमितत्वस्य च प्रकृते अभावादिति चेन्न, सगुणवाक्यानामतत्त्वावेदकत्वसिद्धेः प्राक् सगुणत्वस्य अप्रमितत्वासिद्धेः । सगुणवाक्यस्य अतत्त्वावेदकत्वे, वेदत्वाविशेषात्, निर्गुण-वाक्यस्यापि तत् स्यात् । अथवा सगुणवाक्यानां बहुत्वात् तेषामेव तत्त्वावेदकत्वं, निर्गुणवाक्यानामल्पीयसामेव अतत्त्वावेदकत्वं भवतु '**त्यज्येदेकं कुलस्यार्थे**' इति न्यायात् सधर्मकत्वे ब्रह्मणः अनुमानान्यपि भवन्ति । ब्रह्म धर्मिसत्तासमानसत्ताक-धर्मवत्, उक्तसत्ताकभावरूपधर्मवद्वा, यावत्स्वरूपमनुवर्तमानधर्मवद्वा, तादृशा-भावरूपधर्मवद्वा, स्वज्ञानाबाध्यधर्मवद्वा, पदार्थत्वात्, भावत्वात्, घटवत् । ब्रह्म स्वज्ञानाबाध्यप्रकारवत् स्वारोपितव्यावर्तकस्वज्ञानाबाध्यप्रकारवद्वा, अधिष्ठानत्वात्, शुक्तिवत् । ब्रह्म स्वज्ञानाबाध्यदुःखव्यावर्तकधर्मवत्, दुःखानात्मकत्वात् घटवत् । ब्रह्म स्वज्ञानबाध्यप्रकारविशेष्यम् सन्दिग्धत्वात्, विचार्यत्वात्, निर्णेतव्यत्वाद्वा, स्थाणुवत् । ब्रह्म वेदान्ततात्पर्यगोचरप्रकारवत्, वेदान्तविचारविषयत्वात्, तदेवं यथा कर्मकाण्डविचारविषयो धर्मः ।

ईश्वरः सदावाप्तसमस्तकल्याणगुणः, सदा तत् प्रेप्सुत्वे सति यो यत्प्रेप्सुत्वे सति यत्र शक्त स तदा तद्वान्, यथा चैत्रः । ईश्वरः तत्रशक्तत्वात् सदात्यक्त-समस्तदोषः, सदा तज्जिहासुत्वे सति तत्त्यागे शक्तत्वात्, यश्चैवं स तथा, यथा चैत्र इत्यादीनि । नन्वत्र धर्मिपदस्य स्वपदस्य च यत्किंचिद्धर्म्यादिपरत्वे घटादि-समसत्ताककल्पितधर्मिपरत्वेन सिद्धसाधनम्, ब्रह्मपरत्वे साध्याप्रासिद्धिः; घटत्वादि-धर्मे ब्रह्मसमानसत्ताकत्वादेरप्रसिद्धे; मैवम् । दृष्टान्ते साध्यानिरूपणे घटादे-र्धर्म्यादित्वात् । धर्म्यादिपदानां समभिव्याहृतपरत्वात् । न चानुमाने शब्दमहिमा नोपयुज्यते इति वाच्यम् । स्वार्थानुमाने तथात्वेऽपि परार्थानुमाने न्यायवाक्यरूपे तदुपयोगात् । त्वयाऽपि अस्य न्यायस्य बहुषु स्थलेषु अनुसरणात् । एषामनुमाना-नामुपरि ये ये दोषाभासाः उद्भाव्यन्ते ते सर्वेऽपि तरङ्गिणीकण्टकोद्धार—न्यायामृत-माधुरीन्यायामृतसौरभ— न्यायामृतसौगन्ध्य— अद्वैतकालानल—द्वैतद्युमण्यादिग्रन्थेषु पराकृताः इति प्रेक्षावतामपरोक्षम् ।

ननु सगुणश्रुतिरपरब्रह्मविषया — निर्धर्मकश्रुतिविरोधेन विषयभेदस्याव-श्यकत्वात् इति चेन्न सगुणातिरिक्तस्य परब्रह्मणोऽद्याप्यसिद्धेः । अन्यच्च वाक्यं निर्धर्मकबोधकमिति व्याहतम् । वाक्यस्य किञ्चिद्धर्मपुरस्कारेण उपस्थितमुद्दिश्य किञ्चिद्धर्मविधायकत्वस्वाभाव्यात् । एतेन अन्तराधिकरणे कल्पतरुकाद्भिरुक्तं—

**" निर्विशेष पर ब्रह्म साक्षात्कर्तुमनीश्वराः ।**
**ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥**

**वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ।**
**तदेवाविर्भवेत् साक्षात् अपेतोपाधिकल्पनम् " ॥**

इति तत् सर्वमप्रामाणिकत्वादत्यन्तमुपेक्ष्यम् । श्रुतिस्मृतिसूत्रेषु कुत्रापि निर्गुणस्य अनुक्तेः वक्तुमशक्यत्वाच्च । प्रत्युत सधर्मकस्य सगुणस्यैव सर्वत्रोक्तत्वात् । '**परः पराणामि**' ति स्मृत्या सगुणब्रह्मणः परादपि परत्वमुक्तं तत् कथमपि तस्य अपरत्व कल्पयितुं न शक्यते । सगुणब्रह्मणः कृष्णस्य अर्जुनेन '**परं ब्रह्म परंधामे**' इत्यादिना परब्रह्मत्वं प्रतिपाद्य स्वप्रतिपादितस्य प्रामाणिकत्वसमर्थनाय "**आहुस्त्वामृषयः सर्वे**" "**सर्वमेतदृतं मन्ये**" इत्याद्युक्तम् । न च जडापेक्षया पर किञ्चिज्ज्ञ, तदपेक्षया सर्वज्ञस्य, क्षुद्रापेक्षया अपरस्यापि परत्वांयुक्तामिति वाच्यम्, संकोच—कल्पकस्य अद्याप्यसिद्धेः ।

यदि सर्वज्ञापेक्षया निर्गुणस्य परत्वं मन्यते तर्हि निर्गुणब्रह्मापेक्षयापि शून्यस्य परत्वं मन्यताम्— शून्यज्ञानस्यापि महापुरुषार्थजनकत्वस्य '**असन्नेव स भवति असद्ब्रह्मेति वेद चेत्**' इति श्रुतावुक्तत्वादित्यपि वक्तुं शक्यत्वात् ननु शून्यतापत्तिर्न महापुरुषार्थ. इति चेन्न, निर्गुणब्रह्मतापत्तिरपि कीदृशः पुरुषार्थ इति वक्तव्यम्। निर्गुणब्रह्मतापत्तिः खलु आनन्दरूपतापत्ति, अतस्तस्या महापुरुषार्थत्वमवश्यमङगीकर्तव्यमिति चेन्न; निर्विशेषब्रह्मणि आनन्द-रूपत्वस्याप्यभावात्। कुत इति चेत्, आनन्दपेदन अवाच्यस्य ब्रह्मणः दुःखादिवदानन्दरूपत्वाभावात्। ननु ब्रह्मणः आनन्दपदावाच्यत्वेऽपि तत्पदलक्ष्यत्वं संभवति इति चेन्न, यथा गङगापदलक्ष्यस्य तीरस्य गङ्गात्वाभाव एवमेव आनन्द-पदलक्ष्यस्य ब्रह्मण आनन्दत्वाभावः अनिच्छतापि त्वया अङ्गीकार्यः एव किञ्च निर्विशेष ब्रह्म विशेषाभावादेव शून्यात् व्यावर्तयितुं न शक्यते। अतोपि ब्रह्मता-पत्तिर्नाम शून्यतापत्तिरेव। ब्रह्म इदानीं सगुणं, दशान्तरे कालान्तरे निर्गुण-मित्यप्यतीव असाधु, निर्गुणीभूतस्य मुक्तस्यापि पुनः दशान्तरे कालान्तरे सगु-णत्वापादनसंभवात्। अनेन गुणानामनित्यत्वमात्रसिद्धे। '**सदेव सोम्येदमग्र असीत्**' '**असद्वा इदमग्र आसीत्**' इति श्रुतिवाक्याभ्या ब्रह्म इदानीं सत् दशान्तरे कालान्तरे असत् इत्यापत्तेश्च। दशान्तरे निर्गुणत्ववत् असत्त्वस्य बोधनं नास्ति तत्र असच्छब्दस्य अर्थान्तरपरत्वात् इति चेत्, त्वदभिमत-निर्गुणत्वस्याप्यबोधनात्। "**ज्ञानं नित्यं क्रिया नित्या बलं नित्य परात्मनः**" '**एष नित्यो महिमा ब्राह्मणस्य**' इत्यादिश्रुतिभिः ब्रह्मज्ञानादीनां नित्यत्व-प्रतिपादनाच्च। ननु ज्ञानादीनां स्वरूपत्वाद् गुणत्वासिद्धिः स्वरूपातिरिक्ताना चरमसाक्षात्कारपर्यन्तस्थायितया नित्यत्वोपचार इति चेन्न, स्वरूपभूतस्यापि गुणीभवनं न केनापि दण्डवारितम्। ब्रह्मणोऽपि बहुदीर्घकालपर्यन्तस्थायितया नित्यत्वोपचारः, स्यात्। वस्तुतः शून्यस्यैव '**असद्वा इदमग्र आसीत्**' इति श्रुत्युक्तजगत्प्राक्कालिकत्वरूपहेतुना जगत्पाश्चात्यत्वरयापि ज्ञातुं शक्यत्वेन तस्यैव असत शून्यस्य नित्यत्वं स्यात्।

ननु ब्राह्मणपदस्य 'तदधीते तद्वेद' इतिसूत्र विहिताणन्तरय ब्रह्मवित्प्रति-पादकतया ब्रह्मपरत्वे लक्षणापत्तिरिति न वक्तव्यम्। ब्राह्मणशब्दस्य 'तदधीते तद्वेद' इति सूत्र विहिताणन्तस्य मुख्यवेदनवति ब्रह्मणि मुख्यत्वात्। ब्रह्मविदा "**ब्राह्मणा विविदिषन्ति**" इति बहुवचनान्तेन प्रस्तुततया एकवचनान्तेन

ब्राह्मणस्येत्यनेन परामर्शायोगाच्च । एषणाभावादिरूपमहिम्नस्त्वयापि नित्यत्वाङ्गीकाराच्च । न च सगुणवाक्यानामौपाधिकगुण–विषयकत्वेन स्वाभाविकनिर्धर्मकत्वश्रुतेर्न विरोध इति वाच्यम्, ब्रह्मगुणानामौपाधिकत्वे मानाभावात् अन्तःकरणादिरूपोपाधिसृष्टेः प्रागेव ईक्षितृत्वादिश्रुतेः, तेषामौपाधिकत्वायोगात् । ननु सृष्टेः पूर्वमन्तःकरणाभावेऽपि अविद्यारूपोपाधिना ईक्षितृत्वस्य उपपत्तिर्भवति इति चेन्न, स्वप्रकाशस्य ब्रह्मण अविद्योपाधिसंबन्धायोगात् । अन्यथा सूर्यस्यापि तमस्सम्बन्धापत्तेः । तयोरविरोधकल्पनं तु निर्मूलम् । गुणानामौपाधिकत्वे **‘ स्वाभाविकी ज्ञानबलक्रिया च ’** इति श्रुतिविरोध. । स्वाभाविकशब्दस्य संकोचे मानाभावात् । निर्गुणवाक्यस्यैव संकोचकत्वमित्यपि न, त्वदभिमतनिर्गुणत्वस्य अद्याप्यसिद्धेः । न च सगुणवाक्याना सत्यत्वबोधकत्वमेव नास्ति सत्यत्वस्य अपदार्थत्वात् इति वाच्यम्, नित्यत्वोक्तिसामर्थ्याविषयाबाधलक्षणस्य प्रामाण्यस्यौत्सर्गिकत्वात्, **‘ सत्यः सोस्य महिमा ’** इत्यादिसत्यपदश्रुतेश्च सत्यत्वं सिध्यत्येव । **‘ सत्यः सोस्य महिमा ’** इत्यादौ महिम्नः स्वरूपरूपत्वादविरोध इति चेन्न, स्वरूपस्यापि महिम्नः गुणत्वेन गुणसत्यत्वस्य दुर्निवारत्वात् षष्ठीप्रयोगेण गुणगुणिभावस्य सूचनाच्च । ननु ब्रह्मधर्मेषु ब्रह्मसाक्षात्कारेतरानिवर्त्यत्वगुणयोगेन सत्यपदप्रवृत्तिरुपपाद्यते इति चेन्न, एवमुपपादनस्य सत्तात्रैविध्यसिध्यनन्तरं, संभवात् । अन्यथा **‘ सत्य ज्ञान ’** **‘ तत्त्वमसि ’** इत्यादिश्रुत्युक्तब्रह्मसत्यत्वैक्यादिकमपि तात्त्विकं न स्यात् । श्रुत्योर्विरोधे नैकस्या अतात्त्विकविषकत्वम् । शास्त्रयोर्विरोधे संकोचविकल्पादिना उभयप्रामाण्यस्य पूर्वतन्त्रे व्याकरणे च निर्णीतत्वात् । तथा चोक्तं **“ को हि मीमांसको ब्रूयात् विरोधे वाक्ययोर्मिथः । एकं प्रमाणमितरत्त्वप्रमाण भवेदिति ॥**

ननु तत्र शास्त्रयोः प्रामाण्ये समानकक्ष्यतया एकस्य आत्यन्तिकबाधायोगात् संकोचेन विकल्पेन वा उभयप्रामाण्यमाश्रितम् इह तु समानबलतत्त्वं नास्तीति चेत् न, अत्र प्रमाणाभावात् ।

**‘ मृडमृदगुधकुषक्लिशवदवसः क्त्वा ’**
**‘ रुदविदमुषग्रहिस्वपिप्रच्छः सश्च ’**

इति सूत्रयोः ‘ न क्त्वा सेट् ’ इति निषेधनिषेधकत्वं व्याकरणशास्त्रसिद्धम् । एवमेव सगुणवाक्यानामपि निर्गुणवाक्यबाधकत्वमेव सुवचम् ।

ननु दृष्टान्ते पर्युदासाधिकरणन्यायेन मृडमृदेत्याद्युत्तरावीहितान्यसेदक्क्त्वाप्रत्ययकित्त्वनिषेधपरत्वेनैव एकवाक्यताया वाक्यभेदेन निषेधनिषेधकत्वं न कल्प्यते इति चेत्, अत्रापि पर्युदासाश्रयणे क्रियमाणेऽपि अभीष्टासिद्धेः। ननु नेति नेतीति वीप्सायाः प्रसक्तसर्वनिषेधकतया विशेषपरिशेषायोगेन पर्युदासाश्रयण कर्तुं न शक्यते '**नेति नेति**' इति वीप्सितेन इतिशब्देन सर्वनाम्ना सर्वस्य प्रसक्तस्य निषेधः, अन्यथा वीप्सावैय्यर्थ्यं स्यात् इति चेन्न, उपदेशरूपत्वेनाप्युपपन्नत्वेन वीप्सायाः सकलगुणनिषेधपरत्वाभावात्। ननु '**तरति शोकमात्मवित्**' इत्यत्र शोकपदोपलक्षितसर्वस्य ज्ञाननिवर्त्यत्वं बोध्यते। ज्ञाननिवर्त्येन मिथ्याभूतेन भाव्यम्। सत्यस्यैव च मिथ्याभूताधिष्ठानत्वं सभवति। किञ्च '**स एवेद सर्वमात्मैवेद सर्वं**'मिति श्रुतौ आत्मशब्दवाच्यस्य ब्रह्मणः सार्वात्म्यमुच्यते। भेदे सार्वात्म्यमुक्तमनुपपन्नं स्यात्। गुणगुणिभावः धर्मधर्मिभाव. विशेषणविशेष्यभावश्च भेदमाक्षिपति। भेदस्य सार्वात्म्यविरुद्धत्वेन श्रुतितात्पर्याविषयत्वात् ब्रह्मणः निर्गुणत्व निर्धर्मकत्वं निर्विशेषत्व च अवश्यमङ्गीकर्तव्यमिति चेत् न; गरुडध्यानेन सत्यभूतस्य विषस्य, सेतुदर्शनेन च सत्यभूताया ब्रह्महत्यायाः निवृत्तिदर्शनेन मिथ्याभूतस्यैव ज्ञाननिवर्त्यत्वमिति नास्ति नियमः। '**स एवेद सर्वं**' **मिति** श्रुतौ "सर्वं समाप्नोषि ततोऽसि सर्वः" इति गीतोक्त्यनुसारेण सर्वनियामकत्वं सर्वव्याप्तत्वं वा उच्यते न सार्वात्म्यम्। अन्यच्च उपास्याना गुणाना मिथ्यात्वे "**आत्मेत्येवोपासीत**" इति बृहदारण्यकवाक्ये अद्वैतस्याप्युपास्यत्वेन उक्तत्वात् उपासनाशेषतया अद्वैतासिद्धि स्यात्। ननु '**ह्येतत्सर्वं वेद**' इत्युत्तरवाक्यस्थविदिसमानार्थतया उपास्तिशब्दस्य क्रियावाचकत्वं नाङ्गीक्रियते इति चेत् न, अन्यत्रापि उपास्तिशब्दस्य विदिसमानार्थकतायाः वक्तुं सुकरत्वात्। न च ज्ञानस्य विधिविषयत्वं न संभवति इति चेत् न अत्रापि न संभवति इत्युक्ते किमुत्तरम्?। "**आत्मेत्येवोपासीत**" इत्यत्र विधिश्रुतिसार्थक्याय तस्याः बाह्यविषयात् परावृत्य चित्तस्य प्रत्यगात्मप्रवणतासंपादकत्वमङ्गीक्रियते इति चेत्, इतरोपासनाविधिष्वपि तथैव अङ्गीकारसंभवात्। गुणोपसंहारपादे "**आनन्दादयः प्रधानस्ये**"ति सूत्रे "**आनन्दं ब्रह्मे**"ति श्रुतानामानन्दादीना, "**व्यतिहार**" इति सूत्रे "**तद्योऽह**"मिति श्रुत्युक्तस्य जीवे ईश्वरत्वस्य ईश्वरे जीवत्वस्य वा उपास्यतया उक्तत्वेऽपि आनन्दादेरैक्यस्य च यथा तात्त्विकत्वासिद्धिः, एवमेव सत्यकामत्वादेरपि तात्त्विकत्वमस्तु। आनन्दादिवाक्यसत्यकामादिवाक्ययोर्मानान्तराविरोधे उभयत्र

उपासनाविध्यश्रवणे निर्गुणश्रुतिविरोधे च समानेऽपि आनन्दादयस्तात्त्विकाः सत्यकामत्वादयस्त्वतात्त्विकाः इति कथं व्यवस्था संगच्छते। आनन्दादीना ब्रह्मरूपत्वेन निर्गुणश्रुतिविरोधो नास्तीति चेत्, स एव न्यायः सत्यकामत्वादिष्वप्यनुसन्धीयताम्। ज्ञानबलशक्त्यादीनामपि ब्रह्मरूपत्वे '**ज्ञानात्मको भगवान् बलात्मको भगवान्**' इत्यादिश्रुतीना प्रमाणत्वात्। यथा ईश्वरसाक्षात्कारार्थं सगुणब्रह्मोपासना कार्या तथा अद्वैतसाक्षात्कारार्थं निर्गुणब्रह्मोपासना कार्या इति त्वया उच्यते। ततश्च यथा सगुणत्वं मिथ्या तथा निर्गुणत्वमपि मिथ्या स्यात्। इष्टापात्तिरिति चेत् न निर्गुणत्वस्य मिथ्यात्वे सगुणत्वं स्थापितं भवेत् इति तव महाननर्थः प्रसज्येत। ननु निर्गुणोपासनं यद्यपि भ्रमः तथापि मणिप्रभाया मणिभ्रम इव सम्यक्फलप्रदम्। तदुक्तम्—

**"स्वयंभ्रमोऽपि संवादी यथा सम्यक्फलप्रदः।**
**ब्रह्मतत्त्वोपासनाऽपि तथा मुक्तिफलप्रदा॥**

इति चेत् प्रकृतेपि तथात्वोपपत्तेः। सगुणोपास्तेर्विशिष्टविषयत्वेन भ्रमत्वेऽपि निर्गुणोपास्तेर्निर्विशेषविषयतया भ्रमत्त्वाभावोपपादनं तु निर्मूलत्वादुपेक्ष्यं प्रेक्षावाद्भिः। यथा ऐक्यादेर्विध्याविधिरूपवाक्यद्वयबोधितत्वेन ध्येयत्वज्ञेयत्वे तथा सार्वज्ञादेरुपास्तिविधिविषयस्यापि अविधिरूपायाः वस्तुतत्त्वविषयिकायाः 'यः सर्वज्ञ' इत्यादि श्रुत्योःविषयत्वात् ज्ञेयत्वमप्यस्तु। किंच ब्रह्मणि कर्तृत्वादिधर्मानारोप्य तदुपासना कर्तव्या इति भवन्मतम्। तत्पक्षे ब्रह्मणि कारणवाक्यानां समन्वयः अकर्तव्य एव। न हि नाम्नि ब्रह्मवाक्यानां समन्वयः क्रियते भवता। ननु नाम्नो ब्रह्मविकारत्वात् तत्र न समन्वयः। ब्रह्म तु वस्तुतः अविकारित्वात् मुमुक्षुज्ञेयमिति कारणवाक्यानां तटस्थलक्षणभूतकर्तृत्वादिबोधनद्वारा ब्रह्मण्येव तात्पर्यबोधनसंभवेन समन्वयस्य आवश्यकत्वमिति चेत् न; नाम्नोऽविशेषब्रह्मनिर्विशेषत्वात् तत्रापि समन्वयस्य कर्तव्यतापातात्। सत्यकामत्वादीनामपि निर्गुणत्ववदवश्यं ज्ञेयत्वमङ्गीकार्यम्। "**य आत्मा अपहतपाप्मा**' इत्यारभ्य '**सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः**" इति सत्यकामत्वादीनाम् अपहतपाप्मत्वादिभिःसह जिज्ञास्यत्वश्रवणात्। ननु अपहतपाप्मत्वादीनां स्वरूपतया जिज्ञास्यकोटिप्रवेशेऽपि सत्यकामत्वादीनां स्वरूपबहिर्भावेन जिज्ञास्यत्वं नोक्तमिति चेन्न, सहपठितानां गुणानां केषांचन जिज्ञास्यत्वं केषांचन अजिज्ञास्यत्व-

मिति अर्धजरतीयायोगात् । तत्पदेन प्रक्रान्ताना सर्वेषां विशेषणाना परामर्शस्य असति बाधके न्याय्यत्वात् । न च यश्चित्रगु लम्बकर्णश्चतमानय इत्यादौ योग्यविशेषणस्य लम्बकर्णस्यैव तच्छब्देन परामर्शदर्शनात्, यश्चित्रगुः बहुधनस्तमानय इत्यत्र विशेष्यांशमात्रपरामर्शदर्शनाच्च अत्रापि स्वरुपभूतस्य अपहतपाप्मत्वादेरेव परामर्शः न तु सत्यसंकल्पत्वादीनामिति वाच्यम्, लम्बकर्णबहुधनयोः परामर्शे इव अत्रापि बाधकाभावात्, साधकसत्त्वाच्च । **'एष सर्वेश्वर एष भूताधिपति'** रित्यादि धर्मानुक्त्वा तेषा **'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति'** इत्यादौ मुमुक्षुज्ञेयत्वोक्ते; **य सर्वज्ञः सर्ववित् यस्यैष महिमा भुवि'** इत्युक्त्वा **'तद्विज्ञानेन परिपश्यन्ति धीरा "** इत्यपरोक्षप्रमाविषयत्वरयोक्तेः **"तुरीय सर्वदृक् सदा"** इति तुरीये सार्वज्ञ्यश्रुतेश्च सर्वज्ञत्वादीना तात्त्विकत्वात् **'स विजिज्ञासितव्यः'** इत्यत्र तत्पदेन सत्यकामत्वादीनामपरामर्शायोगात् । केवलमपहतपाप्मत्वादीना जिज्ञास्यत्वे तेषा भूताकाशेऽपि संभवेन दहराकाशस्य ब्रह्मत्वप्रतिपादकदहराधिकरणविरोध अपरिहार्य । ननु चेतनधर्मात्यन्ताभावस्य पाप्मादिविरहस्य अचेतने संभवेऽपि सत्यकामत्वादीनामचेतने संभावयितुमशक्यत्वेन विरोधः परिह्रियते इतिचेन्न, सत्यकामत्वादिधर्माणा प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वेन चेतनेऽप्यसंभावितत्वात् । चेतने आरोपेन संभावितत्वे अचेतनेऽपि असंभावितत्वाभावात् । होममात्रानुवादेन यथा आहवनीयस्य विधानं क्रियते, तथा श्रुत्युक्तमहिमानुवादेन सत्यत्वं विधीयते इति सर्व सार्वज्ञ्यादिकं सत्यमित्यास्थेयम् । तत्रापि निर्गुणश्रुतिविरोधेन स्वरुपमाहिम्न एव सत्यत्वं वक्तव्यमिति वचनं वैय्यात्यमात्रम् । षष्ठ्या उपचरितार्थत्वकल्पनं साहसमात्रम् । ननु ईश्वरमहिमा व्यावहारिकसत्य इत्यङ्गीक्रियते इति चेत् ब्रह्मापि व्यावहारिकसत्यमेवस्यात् इत्युक्ते किमुत्तरम् । ननु **'सत्यस्य सत्यमि'ति** पदस्वारस्यात् ब्रह्मणः पारमार्थिकसत्यत्वं लभ्यते इति चेन्न सत्तात्रैविध्यस्य खण्डितत्वात् । पारमार्थिकसत्यत्वेन ब्रह्मण. सविशेषत्वाच्च । **"पृथगात्मान"** मित्यादिश्रुतिषु **" यो मामशेषदोषोज्झ गुणसर्वस्वबृंहितम् । जानात्यस्मै प्रसन्नोऽहं दद्यां मुक्ति न चान्यथा," " भोक्तार यज्ञतपसां सर्वलोकमहेश्वरम् । सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति "** इत्यादिस्मृतिषु च सविशेषज्ञानादेव मोक्षोक्ते. सप्रकारकज्ञानस्यैव मोचकत्वमवश्यमङ्गीकर्तव्यम् । न च पूर्वोक्तानां प्रमाणानां परममुक्तिसाधननिर्विशेषसाक्षात्कारोपयोगिचित्तशुध्यु-

पायसगुणोपासनाविध्यर्थवादतया चारितार्थ्यमिति वक्तव्यम्, मुक्तिद्वयकल्पनस्य अप्रामाणिकत्वात् गौरवपराहतत्वाच्च। ननु सगुणज्ञानस्य फलान्तरश्रवणात् न परा मुक्तिः फलमिति चेन्न निर्गुणज्ञानस्यापि '**नास्य अब्रह्मवित् कुले भवति**' इति फलान्तरश्रुतेः तस्यापि परा मुक्ति न फलमित्यपि कुतो न वक्तुं शक्यम्। स्तुत्यर्थतया उपपादनमुभयत्र समानम्। '**एकस्य तूभयत्वे संयोगपृथक्त्व**' मिति जैमिनिसूत्रोक्तेन 'एकस्य उभयार्थत्वे संयोगस्य विनियोजकप्रमाणस्य पृथक्त्वमुभयत्वं नियामक' मित्युक्तसंयोगपृथक्त्वन्यायेन उभयफलत्वोक्तिरपि समाना। तथा हि यथा एकस्य खादिरस्य क्रत्वर्थत्वं पुरुषार्थत्वं च "**खादिरो यूपो भवति**" '**खादिरं वीर्यकामस्य यूपं कुर्वीत**' इति वाक्याभ्यां बोध्यते तथा मुक्तेः फलान्तरस्य च वाक्यद्वयेन बोधितत्वात् उभयार्थता।

किंच सगुणज्ञानात् 'पुण्यपापे विधूय' इति सर्वकर्मनिवृत्त्युक्तेः परममुक्तिरेव संभवति। पुण्यपापविधूननदशायामविद्याया अप्यवस्थित्यसंभवात् अन्यथा निर्गुणज्ञानजन्याया मुक्तेरपि अवान्तरत्वमेव स्यात्। '**असन्नेवे**' ति श्रुत्युक्तशून्यताया एव परममुक्तित्वं स्यात्। शून्यतायाः असुखरूपत्वान्नेति चेन्न असुखरूपत्वस्य आनन्दाद् व्यावृत्तत्वरूपस्य ब्रह्मण्यपि त्वया अङ्गीकारात्।

शून्यवादिनाऽपि शून्यस्य आनन्दात्मकत्वमङ्गीकृतम्। कुतः इदं ज्ञायते इति चेत सावधानं शृणु। सच्चिदानन्दरूपत्वं ब्रह्मणः स्वरूपलक्षणमिति अद्वैतिभिः कथ्यते। तत्र ज्ञानानन्दरूपत्वमित्येवास्तु लक्षणम् किं सद्ग्रहणेन इत्याशङ्कायां सत्त्वरहितज्ञानानन्दरूपत्वं शून्येऽपि परेण अङ्गीकृतमिति अतिव्याप्तिर्लक्षणस्य। अतोऽतिव्याप्तिपरिहारार्थं सत्पदमावश्यकमिति अखण्डार्थत्वोपपत्तिप्रकरणे अद्वैत-सिद्धि-लघुचन्द्रिकाभ्यामभ्युपगतम्।

तथा हि अद्वैतसिद्धिः "शून्यवादिभिरपि सत्त्वरहितज्ञानानन्दात्मकत्वस्य ब्रह्मणोऽन्यत्र अङ्गीकारात् मिलितं विना न निर्विचिकित्सब्रह्मसिद्धिरिति मिलितं लक्षणम्" इति।

लघुचान्द्रिका च "शून्यवादस्य विज्ञानवादविशेषरूपत्वात्। तथा च आनन्दोऽपि ज्ञानाकारत्वात् ज्ञानाभिन्न इति ज्ञानात्मकानन्दत्वं तन्मते ब्रह्मभिन्नेऽपीति तद्वारणाय सत्यमिति भावः" इति

अन्यच्च गुणविशेषविधिसन्निहितस्य सामान्यनिषेधकस्य निष्प्रपञ्चवाक्यस्य विहितगुणनिषेधकत्वं न संभवति । विशेषविधायकस्य निषेधकप्रमाणसमकक्षत्वेन सामान्यनिषेधकवाक्यसंकोचस्य अवश्यकरणीयत्वात् । उपासना प्रकरणस्थत्वमात्रेण उपास्यत्वावगतौ उद्गीथोपासनाप्रकरणस्थस्य '**स एषोऽनन्तः**' इति श्रुतानन्तत्वादे भूताकाशे उपासनामात्रार्थत्वमिति सुवचत्वेन आकाशाधिकरणे अनन्तत्वादिलिङ्गैर्ब्रह्मत्वनिर्णयायोगाच्च । सार्वज्ञ्यादीना वाग्धेनुत्वादिवत् प्रातीतिकत्वापत्तेश्च । ननु वाग्धेनुत्वादेर्बुद्धिपूर्वकारोपविषयतया प्रातीतिकत्वेऽपि सत्यकामत्वादेर्बुद्धिपूर्वकारोपाविषयत्वान्न प्रातीतिकत्वमिति चेन्न, निर्विशेषे चैतन्ये उपासनासिध्यर्थं शास्त्रावगतगुणाना बुद्धिपूर्वकारोपस्यैव त्वया वक्तव्यत्वेन तेषा प्रातीतिकत्वस्य दुष्परिहरत्वात् । वस्तुतस्तु असदुपासना न शास्त्रसम्मता ।

'**नाविद्यमानं ब्रुवते वेदा ध्यातुं न वैदिकाः**' '**नच रमन्त्यहो असदुपासनयात्महनः । यदनुशया भ्रमन्त्युरुभये कुशरीरभृत**' इत्यादिस्मृतिवचनैः, '**अचेतनासत्यायोग्यान्यनुपास्यानि, अफलत्वविपर्ययाभ्याम्**' इति संकर्षणसूत्रेणापि तस्याः प्रतिषिद्धत्वात् । '**वाचं धेनुमुपासीत**' '**योषितमग्निं ध्यायीत**' इत्यादौ धेन्वग्निशब्दयोः प्रयोगः गौणः न तु तदर्थयोस्तत्र आरोपः । गौणत्वाङ्गीकारेण अर्थस्य सुवचत्वे आरोपस्य अन्यायत्वात् । एवमेव ' नाम ब्रह्मेत्युपासीत ' इत्यत्र च ' नामाभिमानिनी चोषा तस्यां ब्रह्म हरिं स्मरेत् ' इति स्मृत्यैव प्रतिमायामिव ब्रह्माधिष्ठाने नामादौ ब्रह्मोपासना उक्ता । नामेति प्रथमावचनं ' वसन्तो मारुत ' इतिवत् सप्तम्यर्थे इति । तत्रापि नासदुपासना उक्ता । ननु नाम्नि ब्रह्मारोप एव अङ्गीकर्तव्यः समानविभक्तिकत्वाभावे इतिशब्दानन्वयप्रसङ्गादिति चेन्न, ' नाम्नि ब्रह्म वर्तते ' इत्युपासीत इति रीत्या इतिशब्दान्वयस्य वक्तुं शक्यत्वात् तथा च नामनिरूपिताधेयत्वप्रकारिका ब्रह्मविशेष्यिका उपासना अत्र उक्ता न तु नामविशेष्यकब्रह्मत्वप्रकारिका वा ब्रह्मविशेष्यनामत्वप्रकारिका वा उपासना इति नेयमसदुपासना ।

"**यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीःकलत्रादिषु भौम इज्यधीः**" इत्यस्य भागवतवाक्यस्य देवतात्वारोपनिषेधपरत्वे एव सम्यगुपपत्तिर्भवति । ननु '**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते**' इत्युपास्यस्य ब्रह्मभिन्नत्वमुक्तमिति चेन्न '**अन्यदेव तद्विदिताबथो अविदितादधि**' इति श्रुतौ अश्रौतज्ञानस्य

कार्त्स्न्येन ज्ञानस्य वा निषेध इति '**तदेव ब्रह्म**' इत्यादावपि अश्रौतध्यानस्य ब्रह्मत्वनिषेधे '**तस्याभिध्याना**' दिति श्रुतिविरोधः। विश्वमायानिवृत्तिकथनेन अभिध्यानं क्रममुक्तिसाधनमिति प्रतिपादनं न शोभते। तस्मात्सगुणमेव परब्रह्म तस्य निर्गुणत्वे साधकाभावात्, बाधकसद्भावाच्च तस्मात् सगुणत्वनिर्गुणत्वयोर्विरोधेन समुच्चयायोगात् साध्ये कर्मणीव सिद्धे ब्रह्मणि विकल्पासंभवात् अन्यतरवाक्यस्य प्रतीतार्थप्रच्यावनरूपे बाधे वक्तव्ये निर्गुणवाक्यस्यैव स युक्तः। निर्गुणवाक्यापेक्षया बहूनां प्रबलानां च सगुणवाक्यानां बाधस्य गौरवावहत्वात् अनौत्सर्गिकत्वाच्च। न च बहुत्वं प्राबल्यसपादकं न भवति, 'शतमप्यन्धाना न पश्यति' इति न्यायादिति वक्तव्यम् श्रुतीनामन्धसाम्यकथनस्य पाखण्डसोदरताज्ञापकत्वात्।

निर्गुणवाक्यस्य छागपशुन्यायेन "**त्रैगुण्यवर्जितम्**" '**विना हेयैर्गुणादिभिः**' इति विशेषगुणनिषेधपर्यवसायित्व संभवति। ननु 'नेति नेति' इत्यादिवीप्साबलेन प्रसक्तसर्वधर्मप्रतिषेधः प्रतीयते इति चेन्न, तच्छ्रुतेरर्थान्तरपरत्वस्य समर्थितत्वात्। '**एव धर्मान् पृथक् पश्यन् तानेवानुविधावति**' इति श्रुत्या 'सविशेषणे' इति न्यायेन गुणाना पार्थक्यस्यैव निषेधात् तत्साम्यादन्यत्रापि तथैव निषेधो वक्तव्यः। न च '**सविशेषणे**' इति न्यायस्य विशेष्यबाधावतार एव प्रवृत्तेः विशेष्ये बाधकं च अत्र नास्तीति चेन्न, यः सर्वज्ञः इत्यादिपरः सहस्रश्रुतिभिर्बाधस्य समर्थितत्वात्। '**अन्तस्तद्धर्मोपदेशात्**' '**अन्तर्याम्यधिदैवादिषु तध्दर्मव्यपदेशात्**' '**विवक्षितगुणोपपत्तेश्च**' '**सर्वधर्मोपपत्तेश्च**' इत्यादिबहुषु सूत्रेषु धर्माणा तत्तदधिकरणसिद्धान्तसाधकतया उपन्यस्तत्वात् सगुणत्वसिद्धिरवश्यं भाविनी। आरोपितधर्माणां साध्यसाधकत्वे अङ्गीक्रियमाणे बाष्पारोपितधूमस्यापि वह्निसाधकत्वं स्यात्। अहिंसाग्नीषोमीयवाक्ययोरिव सगुणनिर्गुणवाक्ययोरपि भिन्नविषयतया अविरोधे सुसंपादेऽपि सगुणवाक्यस्य अतत्वावेदकत्वकथनं सौगतसौहृदशालिनामेव शोभते।

किंच ब्रह्मणो निर्धर्मकत्वे तस्य मीमांसाविषयत्वानुपपत्तिः। तथा शास्त्रविषयत्वानुपपत्तिश्च स्यात्। तदुक्तमनुव्याख्याने

**सर्वधर्मोज्झितस्यास्य किं शास्त्रेणाधिगम्यते।**
**मिथ्याधर्मविधातुश्च वेदस्यैवाप्रमाणता॥**

स्वरूप तावत् स्वप्रकाशत्वान्न शास्त्रप्रातिपाद्यम् प्रकाशमानार्थप्रतिपादकत्वे शास्त्रस्य अशास्त्रत्वापत्तेः। यद्वा स्वप्रकाशत्वमवेद्यत्वं परस्याभिमतम्। तथा च अवेद्यस्य शास्त्रप्रतिपाद्यत्ववचनं कथं न व्याहतम्। न च फलाव्याप्यत्वमवेद्यत्वं न तु वृत्यव्याप्यत्वमिति न व्याघात इति वाच्यम्। अद्वैत्यभ्युपेतफलस्य अप्रामाणिकत्वेन घटादेरपि फलाव्याप्यत्त्वरूपावेद्यत्वप्रसङ्गात्। किंच संसर्गस्य वा भेदस्य वा संसर्गभेदयोरुभयोरपि वा वाक्यार्थत्वेन ब्रह्मणो धर्माभावादेव संसर्गादीनामसंभवात् न तस्य शास्त्रसमधिगम्यत्वं संभवति।

अन्यच्च संसर्गभेदयोरेव वाक्यार्थत्वमवश्यमङ्गीकर्तव्यम्। अत्र तटस्थ शङ्कते ननु सर्वे वाक्येषु पदार्थाना ससर्गस्यैव उत्सर्गतः प्रतीयमानत्वात् तस्य वाक्यार्थत्वमङ्गीक्रियता कामम् व्यवच्छेदात्मनो भेदस्य तत् किमर्थमङ्गीकर्तव्यम्। तस्य सर्वत्र वाक्ये उत्सर्गतः अप्रतीयमानत्वात् किंतु क्वचिदेव विशेषणवशात् तस्य प्रतीतेः। यथा 'इन्द्रियार्थसन्निकर्षोत्पन्नज्ञानं प्रत्यक्षमि'ति प्रत्यक्षलक्षणे असति ज्ञानपदे ज्ञानस्य सुखादेश्च प्राप्तौ उपात्तस्य ज्ञानपदस्य प्राप्तज्ञानविधायकत्वानुपपत्त्या सुखादिव्यवच्छेदमात्रं प्रत्यायकत्वं वक्तव्यम्। वस्तुतस्तु तत्रापि अर्थाद् गम्यमानतया न व्यवच्छेदः वाक्यार्थो भवितुमर्हति। यश्चार्थादर्थो न स चोदनार्थ इति न्यायात्। अत व्यवच्छेदापरपर्यायो भेदो न वाक्यार्थ। अत एव न्यायामृते असंसर्गत्वादित्येव हेतुकृतमितिचेत् सत्यमेवं वस्तुगतिः। तथापि दिङ्नागप्रभृतिभिर्वादिभिः आर्थिकस्यापि भेदस्य वाक्यार्थत्वाभ्युपगमेन तन्मतमाश्रित्य एवमुच्यते अथवा संसर्गवद्भेदस्यापि वाक्यार्थत्वे न किंचित् बाधकम्। तथा हि भेद एव तावत्सर्ववेदार्थः। "**सर्वे वेदा हरेर्भेद सर्वस्माद् ज्ञापयन्ति हि**" अत्र एतावान् विशेष अवगन्तव्यः। भेदशब्द भावसाधनः करणसाधनश्च। तत्र भावसाधनेन अन्योन्याभावः अभिधीयते। करणसाधनेन स्वातन्त्र्यादिरूपः असाधारणधर्म। ततश्च स्वातन्त्र्यादिरूपासाधारणधर्मप्रतिपादक वेदभागः धर्मधर्मिसंसर्गप्रातिपादक इति तत्र संसर्ग एव वाक्यार्थ। नेति नेत्यादिरपरो वेदभागस्तु भेदमेव प्रति पादयतीति तत्र स एव वाक्यार्थः तेन वेदार्थस्य संसर्गभेदान्यतरत्वनियत्या ब्रह्मणो वेदवाक्यार्थत्वं वदता परेण तस्य संसर्गभेदान्यतरस्वरूपत्वमङ्गीकर्तव्यम्। न च तच्छक्यम्। तस्य संसर्गरूपताया वा व्यावृत्तिरूपताया वा तेन अनभ्युपगमात्।

प्राञ्चस्तु वाक्यार्थः संसर्गः भेदः भेदससर्गो वा । राज्ञः पुरुष इत्यत्र स्वविशेषस्य स्वामिविशेषेण स्वामिविशेषस्य स्वविशेषेण सम्बन्ध प्रतिपाद्यते । स्वान्तरेभ्यः स्वामिविशेषस्य वा स्वाम्यन्तरेभ्यः स्वविशेषस्य वा व्यावृत्तिः अर्थसिद्धैव । न हि अव्यावर्त्यमानयो संबन्ध्यन्तरैः संसर्गो घटते इति संसर्गवाक्यार्थ मन्वाना मतम् । भेद वाक्यार्थ मन्यमानानां तु व्यावृत्तिरेव सर्वत्र उच्यते । संसर्गस्तु आर्थिकः । न हि अन्यस्मात् व्यावृत्तस्य सम्बन्ध्यन्तरेण असम्बद्धस्य अवस्थानं सम्भवति इति हि तन्मतम् । उभयं वाक्यार्थ मन्यमानाना तु संसर्गभेदावुभावपि सर्वत्र अभिधीयेते इति मतम् । अत्र कस्यापि मते ब्रह्मणः वाक्यार्थत्वं न सभवतीति न तस्य मीमांसाविषयत्वं शास्त्रविषयत्व वा संभवति । संसर्गस्य वा भेदस्य वा वाक्यार्थत्वे अवश्यमङ्गीकार्ये ब्रह्मणि धर्मसबन्धः स्वेतरभेदश्च प्रतीयते इति अनिच्छताऽपि अङ्गीकार्यमिति तत्त्वम् ।

ननु ब्रह्मणः निर्धर्मकत्वेऽपि जिज्ञास्यता संभवति इति चेन्न विचारो हि जिज्ञासा नाम । स च धर्मनिर्णय । धर्मनिर्णयश्च व्याप्यदर्शनरूप । कथमसौ शशविषाणवन्निर्धर्मके स्यात् । अङ्गीकारे च व्याघातः कथं न स्यात् । किञ्च अनुमानविचारापरपर्यायाया जिज्ञासाया वस्तुस्वरूपज्ञानमात्रं प्रयोजनम् । तस्य प्रागेव सिद्धत्वात् । असिद्धौ वा आश्रयासिद्धस्य अनुमानस्य अनुत्थानात् ।

किं नाम इदमिति स्वरूपानुवादेन इत्थमिति व्यापकधर्मविशिष्टधार्मिज्ञानम् । धूमानुमानादौ तथा दर्शनात् । आरोपिताभ्यां व्याप्यव्यापकाभ्यां तत्संभव इति चेन्न स्वरूपासिद्धिबाधप्रसङ्गात् । ननु यद्यपि न ब्रह्मनिष्ठेन केनचिद्धर्मेण तत्र धर्मान्तरं विधित्सितम्, तथापि कस्यचित् व्यापकभूतधर्मस्य निवृत्त्या व्याप्यभूतधर्मान्तरस्य भ्रान्तिप्रसक्तस्य अन्यत्र सतो निवृत्तिर्ज्ञाप्यते । यथोक्तं '**सिद्धं तु निवर्तकत्वा**'**दिति** । तदर्थस्तु मीमांसाशास्त्रस्य ब्रह्मप्रतिपादकत्वं सिद्धम् । तत्र भ्रान्तिप्रसक्तान्यधर्मनिवर्तकत्वात् इति चेन्न, न खलु निराधारया कस्यचिद्धर्मस्य निवृत्त्या निराधारैव धर्मान्तरव्यावृत्तिः अनुमातुं शक्या । एवंविधानुमानप्रवृत्तेरलौकिकत्वात् । अतो ब्रह्मनिष्ठयैव व्यावृत्त्या ब्रह्मनिष्ठैव व्यावृत्तिः बोधनीया इति वाच्यम् । यदि च अस्य धर्मः न स्यात् व्यावृत्तिमत्ताऽपि न स्यात् । ननु ब्रह्मणि व्यावृत्तिमत्तारूपः धर्मः अङ्गीक्रियते न तु विधिरूपसूत्रकारणैव अदृश्यत्वादिगुणानां ब्रह्मण्येव प्रतिपादनात् । " अभावरूपधर्मा नाद्वैतं घ्नन्ति " इति वार्तिक-

कारैरुक्तत्वाच्च इति चेन्न, यथा श्रुतिसिद्धत्वाददृश्यत्वादयो अभावरूपधर्मा अङ्गीक्रियन्ते एवमेव भावरूपा धर्मा अपि तत एव अङ्गीकर्तव्या । अथ तदङ्गीकारे 'नेहनानास्ति' इत्यादि श्रुतिविरोध इत्युच्यते चेत्, स अदृश्यत्वाद्यङ्गीकारेऽपि समानः । अतोऽर्धजरतीयस्य अप्रामाणिकत्वात् सर्वज्ञत्वादयोऽपि स्वीकार्याः । अदृश्यत्वादयो वापि त्याज्याः । अभावरूपधर्माङ्गीकारे अभावाधिकरणत्वरूपधर्मस्य अवश्यमङ्गीकार्यत्वाच्च । ननु सर्वज्ञत्वादय सर्वनिरूप्यत्वात् सर्वापेक्षाः, वियदादिक च सर्व भ्रान्तिसिद्धमसत्यमेव; असत्यसापेक्षास्तु कथं परमार्थतो ब्रह्मधर्मतया स्वीकर्तुं शक्यन्ते इति चेन्न, यथा सर्वज्ञत्वादयः असत्यसर्वसापेक्षत्वान्नाङ्गीक्रियन्ते तथा अदृश्यत्वादयोऽपि असत्यदृश्यसापेक्षत्वात् नाङ्गीकर्तव्या एव । विषयतया अन्यापेक्षत्वं प्रतियोगितया अन्यापेक्षत्वमिति वैषम्यमकिञ्चित्करम् । किञ्च परापेक्षत्वात् यदि सर्वज्ञत्वादिकं ब्रह्मणो नाङ्गीक्रियते तर्हि सत्ताऽपि नाङ्गीकार्या । तस्यापि देशकालस पेक्षत्वात् यथोक्तमनुव्याख्याने

**देशकालानपेक्षा हि न सत्ता क्वापि दृश्यते ।**

ननु देशकालसापेक्षत्व नाम देशकालसम्बद्धत्वं वा देशकालजन्यत्वं वा । नाद्यः,सम्बन्धमात्रेण परापेक्षाऽसिद्धेः । न हि गगन घटेन संयुक्तमित्येतावता तदपेक्षं स्यात् । न द्वितीयः । अनादिनित्यत्वादिति चेत् एवं तर्हि सार्वज्ञादेरपि नान्यापेक्षता । न हि सर्वेण सह विषयविषयिभावसम्बन्धमात्रेण सर्वापेक्षत्वं भवति । सौरप्रकाशस्यापि घटापेक्षता प्रसङ्गात् । न हि सर्वज्ञत्व सर्वेण जन्यते । नित्यत्वात्तस्य । ननु उत्पत्तौ सार्वज्ञ्यादेः सर्वापेक्षताभावेऽपि ज्ञप्तौ सा अस्त्येव। विदिते एव सर्वस्मिन् सार्वज्ञ्यादि विज्ञायते नाविदिते इति चेत्, सत्ताऽपि माभूदुत्पत्तौ परापेक्षा । ज्ञप्तौ तु भवत्येव । यदि कश्चिद् वैयात्यात् क्वचिद्देशकालप्रतीत्यनपेक्षाऽपि सत्ता दृश्यते इति ब्रूयात् तदा व्याघातः स्यात् ।

सत्ताप्रतीतौ अवर्जनीयतया देशकालौ दृश्येते न तु तदपेक्षा इति चेन्न अभूत्, भवति, भविष्यतीत्यादिप्रतीतिमवधूय सत्तायाः अप्रातिभासात् ।

किंच ब्रह्मणः सच्चिदानन्दरूपत्वमङ्गीकृत्य तस्मिन् यदि सत्त्वादिकं नाङ्गीक्रियते तर्हि व्याहतिः स्यादेव । युक्तमुक्तं युक्तिमल्लिकायाम्—

**किं व्याहति पुरंध्रीणां पाणिग्रहणमस्तिते ।**
**विप्रः स्यात् विप्रता नैव गोमान् स्यात् गौर्नकाचन ।**
**धनी नैव धनं चेति कोनुन्मत्तो वदेद्वद ॥**

ननु सदादिशब्दाना असदादिव्यावृत्तत्वं वा अनृतादिधर्मनिवृत्तिर्वा अर्थ, सत्यादिपदानामनृतादिधर्मनिवृत्तिपरत्वादिति भाष्योक्ते इति चेत् न असदादिव्यावृत्तत्वं वा अनृतादि धर्मनिवृत्तिरूपत्वं वा ब्रह्मणि आगतम् तथा च तस्य निर्धर्मकत्वभङ्गः ननु अभावरूपधर्मा ब्रह्मणि अङ्गीक्रियन्ते तेषामद्वैताविघातुकत्वादिति चेन्न दत्तोत्तरत्वात् भावस्यापि रूपत्वात् अभावरूपत्वमस्त्येव तस्य अभावाभावरूपत्वात् । ननु '**नेहनानास्ति**' इति श्रुत्या ब्रह्मणि अभावरूपधर्मः प्रतिपाद्यते इति तस्य प्रामाणिकत्वादङ्गीक्रियते इति चेत् परः सहस्रश्रुतिभिः प्रतिपाद्यमाना गुणा किमर्थं नाङ्गीक्रियन्ते तेषामपि प्रामाणिकत्वाविशेषात् । किञ्च सत्यादिपदलक्ष्येऽपि यदि असत्यादिव्यावृत्तिः स्यात्, गङ्गापदलक्ष्येऽपि तीरे अगङ्गाव्यावृत्तिः स्यात् । तथा च तीरेऽपि मज्जनं सफलं स्यात् । यथोक्तं युक्तिमल्लिकायाम्

**" यदि सत्यादिपदतो लक्ष्ये ब्रह्मणि केवलम् ।**
**व्यावृत्तिः स्यादसत्यादेस्तेन सार्थक्यमिष्यते ॥**
**तर्हि गङ्गापदाल्लक्ष्ये तीरेऽपि न्यायसाम्यतः ।**
**व्यावृत्तिः स्यादगङ्गायास्तीरेस्यान्मज्जनं सदा " इति ॥**

सूत्रकारस्तु कण्ठत एव ब्रह्मणि गुणानभिधत्ते । तथाहि ब्रह्मणि गुणप्रतिपादकानि सूत्राणि । " अन्तस्तद्धर्मोपदेशात् " " विवक्षितगुणोपपत्तेश्च " " सुखविशिष्टाभिधानादेव च " अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् " अदृश्यत्वादिगुणको धर्मोक्तेः " " धर्मोपपत्तेश्च " " आत्मनि चैवं विचित्राश्च हि " " सर्वोपेता च तद्दर्शनात् " " सर्वधर्मोपपत्तश्च " इत्यादीनि ॥

**इति निर्गुणत्ववादभङ्गः ।**

## स्मृतिप्रामाण्यसमर्थनम् ।

स्मृतिरपि प्रमाणमेव । तथा हि तस्य मानससाक्षात्काररूपत्वात् । बाह्येन्द्रियनिरपेक्षं मन एव स्मरणरूपसाक्षात्कारं जनयति । 'स्वातन्त्र्येण स्मरणसाधनं मन' इत्युक्तं पद्धतौ । तथा च स्मृतेः फलरूपप्रत्यक्षेऽन्तर्भावः मनसश्च

करणप्रत्यक्षेऽन्तर्भावः। ननु स्मृतेर्याथार्थ्यमेव नास्ति कुतस्तत्साधनत्वेन मनसः अनुप्रमाणता कुतस्तरा च प्रत्यक्षप्रमाणता। स्मृतिकाले तद्देशकालवैशिष्ट्यरूप-पूर्वावस्थाया अभावेन अविद्यमानविषयकत्वात्स्मृतेरयथार्थत्वमेव युक्तमितिचेन्न ज्ञानोल्लिखितदेशकालयोर्विपयासत्त्वमेव ज्ञानायाथार्थत्वे तन्त्र न तु उल्लिखितस्य विषयस्य ज्ञानकालेऽसत्त्वम्। स्मृत्युल्लिखितदेशकालयोश्च स्मृतिविषयः सन्निति न स्मृतेरयाथार्थ्यम्। उक्तं च पद्धतौ यतो ज्ञानकाले वस्तुनस्तथात्वं याथार्थ्योपयुक्तं न भवति। किन्तु यद्देशकालसम्बन्धितया यद्वस्तु ज्ञानेन यादृशं गृह्यते तद्देशकाल-योस्तस्य तथात्वम्। स्मृतिश्च तत्र तदा असौ तादृश इति गृण्हाति। न च तत्र तदाऽसौ न तादृशः इति। ननु स्मृतेः प्रमात्वे तस्याश्च संस्कारमात्रजन्यत्वात् संस्कारस्य प्रमाणान्तरतापात्तिरिति चेन्न मनस एव तत्कारणत्वेन संस्कारस्य व्यापारमात्रत्वात्। ततश्च संस्कारसहकृतं मनोऽननुभूतामपि निवृत्तपूर्वावस्थां विपयीकुर्वत्स्मरण जनयेदिति न कोपि क्षुद्रोपद्रव वर्तमानमात्रविषयाण्यपीन्द्रियाणि सहकारिसामर्थ्यात् कालान्तरसम्बन्धितामापि गोचरयन्ति। यथा संस्कार सहकृतानि सोऽयमित्यतीतवर्तमानत्वविशिष्टप्रत्यभिज्ञासाधनानि। अनुभवबलेनैव इत्थं सहकारिसामर्थ्यकल्पनान्नातिप्रसङ्गः। ननु ज्ञानसामान्यं प्रति मनसः कारणत्वेन तत्र च विवादाभावेन मनोजन्यत्वोक्तिरयुक्तेति विशेषकारणमेव वक्तव्यमिति चेत्, चाक्षुषत्वाच्छिन्नं प्रति चक्षुष इव प्रत्यक्षत्वव्याप्यमानसत्वावच्छिन्नं प्रति मनस एव विशेषतः कारणत्वाङ्गीकारात्। किं च स्मृत्यैवहि सर्वेषा जनानां कृताकृतप्रत्यवेक्षणादिसिद्धिः। स्मृत्यैव कवय काव्यानि कवयन्ति स्मृत्यैव शब्दानुमानयोः प्रवृत्तिः। शाब्दबोधकारणीभूता उपस्थितिः परामर्शकारणीभूतं व्याप्त्यनुसन्धानं च स्मृनिरूपे एव। स्मृतेः अप्रमाणत्वे तयोरपि अप्रामाण्यं स्यात्। प्रत्यक्षस्य प्रयोजनशून्यत्वं स्यात्। प्रमाणत्वेन व्यवहाराभावात्स्मृतिः न प्रमाण-मिति चेत्, पामरव्यवहाराभावस्य अकिञ्चित्करत्वात्। परीक्षकैः स्मृतिः प्रमाण-त्वेन न व्यवह्रियते इति चेन्न तेषा परीक्षकत्वे विगानात् सर्वपरीक्षकव्यवहारा-भावस्यचासिद्धेः।

मानमनोहरादौ वागीश्वरादिस्तत्प्रामाण्यस्य समर्थितत्वाच्च। कतिपयपरी-क्षकव्यवहाराभावस्य च अतिप्रसञ्जकत्वात् अप्रयोजकत्वाच्च। अक्षपादादिव्यवहा-रस्य च अस्माकमसम्मतत्वात्।

स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम् ।
प्रमाणमिति विज्ञेयं धर्माद्यर्थे बुभूषुभिः

इति श्रुतिरपि स्मृते प्रामाण्यं व्यवस्थापयति । ननु अत्र स्मृतिशब्दः न प्रकृतस्मृतिपर किंतु मानवादिग्रन्थपरः इति चेन्न, मानवादिस्मृतिग्रन्थानां प्रामाण्यस्यापि वेदार्थज्ञानजन्यसंस्कारजन्यप्रकृतस्मृतिप्रामाण्यायत्तत्वात् । स्मृतेः अप्रामाण्ये स्मृतिमूलकग्रन्थाना प्रामाण्यासंभवाच्च । तथा च "स्मृतेश्च" "स्मरन्ति च" इतिब्रह्मसूत्रेषु स्मृतीनां प्रमाणत्वेन उपन्यासस्य असङ्गतत्वापत्तेश्च इत्यलं पल्लवितेन एतेन । अद्वैततत्त्वसुधाकारस्य स्मृतेरप्रामाण्यवचनं निरस्तं वेदितव्यम् ।

**जीवेश्वरभेद समर्थनम् । जीवेश्वरभेदे प्रत्यक्ष प्रमाणम् ।**

ननु जीवेश्वरभेदः कथमङ्गीकारार्ह — तद् ग्राहकप्रमाणाभावादिति चेन्न, नाहमीश्वरः इति प्रत्यक्षस्यैव प्रमाणत्वात् । इदं प्रत्यक्षं भ्रमरूपमिति नाङ्गीकर्तुं शक्यते—बाधकाभात् । ईश्वरातिरिक्तस्य कस्यापि कदापि कथञ्चिदपि 'अहमीश्वरः सर्वज्ञः' इति प्रतीत्यनुत्पत्तेः । ननु आत्मनः चक्षुराद्यविषयत्वात् नेदं प्रत्यक्षं चक्षुरादिकरणकम् । मनोजन्यमपि न; तस्य केवलं प्रमाणान्तरसहकारित्वात् । अतः प्रमाणाजन्यत्वात् 'नाहमीश्वरः' इति प्रत्यक्षं भ्रान्त्यात्मकमेवेति चेत्, न मनोजन्यमिति वा साक्षिजन्यमिति वा ब्रूम. । ननु मनः प्रमाणान्तरसहकार्येव, न स्वातन्त्र्येण प्रमाणमित्युक्तमिति चेत्, सत्यमुक्तं दुरुक्तं तत् । सार्वजनीनायाः सुखाद्युपलब्धे· त्वयापि चक्षुरादिबहिरिन्द्रियाजन्यत्वाभ्युपगमात् मनोजन्यत्वं साक्षिजन्यत्वंवाऽकामेनापि अङ्गीकार्यम् । ननु नाहमीश्वर इत्यत्र प्रतियोगित्वेन भासमानस्य ईश्वरस्य अप्रत्यक्षत्वात् कथं तत्प्रतियोगिकभेदः प्रत्यक्षः प्रत्यक्षविषयाभावप्रतियोगिनः प्रत्यक्षत्वनियमात् इति न वाच्यम्, अभावप्रत्यक्षे तु प्रतियोगिप्रत्यक्षस्याप्रयोजकत्वात् पार्थिवपरमाणौ जलत्वाभावस्य अप्रत्यक्षत्वात् । जले पार्थिवपरमाणुत्वाभावस्य प्रत्यक्षत्वाच्च । स्तम्भः पिशाचो न भवति इति भेदप्रत्यक्षस्य प्रतियोगिप्रत्यक्षनिरपेक्षतायाः सकलतान्त्रिकसम्मतत्वाच्च । अपि च यत्सत्ता यदनुपलब्धिविरोधिनी तत्र तदभावः प्रत्यक्ष इति वक्तव्यम् । जीवेश्वराभेदः अस्ति चेत्, प्रत्यक्षः स्यादिति उपलब्धि· प्रतियोगिसत्त्वप्रसञ्जनेन प्रसञ्जयितुं शक्यते । अतः तदभावः प्रत्यक्षः । न च अस्यां प्रतीतौ भासमान· भेदः औपाधिक एवेति वाच्यम् । "नाहमीश्वर" इत्यत्र अहमिति प्रतीतिः न शरीरादिविशिष्टविषयिका अपि तु शुद्धात्मविषयिकैवेति न तद्बोध्यो भेदः औपाधिक । भेदविद्याविलासे उक्तम् ज्ञानसुखाद्याश्रयत्वेनोपलभ्यमानस्य अहमर्थस्य अनात्मत्वे प्रमाणाभावात् । न च अहं-

कारोऽनात्मा दृश्यत्वात् इत्यनुमान मानमिति वाच्यम् । अहंकारशब्देन अहंकारतत्त्वान्तःकरणगर्कोक्तौ सिद्धसाधनात् । चेतन्यमात्रोक्तौ च बाधात् । अन्तःकरणविशिष्टचैतन्योक्तावपि सिद्धसाधन विशिष्टस्य पदार्थान्तरत्वात् अपदार्थान्तरत्वे त्वशतो बाधसिद्धसाधनापत्तिः । एतेन अन्तःकरणधर्मातिरिक्ताहमनुभवविशेष्यस्य पक्षत्त्वमित्यपास्तम् । चैतन्यातिरिक्तस्य अहमनुभवविशेष्यत्वे प्रमाणाभावात् प्रत्युत " चिन्मात्रोऽहं सदाशिवः " " अहमात्मा गुडाकेशः " " त्वा ज्ञप्तिमात्रं पुरुषं भजाम्यहम् " इत्यादि श्रुतिस्मृतिभिः चैतन्यमात्रस्येव अहमर्थत्वावेदनेन च बाधतादवस्थ्यात् । दृश्यत्व च न तावद्वृत्तिविषयत्वम्, ब्रह्मणि व्यभिचारात् । नापि चिद्विषयत्व ज्ञाततया साक्षिविषये ब्रह्मणि व्यभिचारतादवस्थ्यात् । नापि साक्षिचिद्विषयत्वं तत्, अहं सुखीत्यादिसाक्षिरूपज्ञानस्य सुखतदाश्रयाहमर्थचिद्विषयत्वेन उक्तदोषानिस्तारात् । ब्रह्मणश्चरमवृत्तिप्रतिबिम्बितचैतन्यविषयत्वाच्च । अन्यथा तदज्ञानानिवृत्तिप्रसङ्गः । समानविषयकयोरेव तयोर्निवर्त्यनिवर्तकभावात् । अन्यथाऽतिप्रसङ्गात् । अनुकूलतर्काभावेनाप्रयोजकत्वाच्च । ' क्वचिद्वृत्तेरज्ञान निवर्तकत्वं क्वचित् वृत्तिप्रतिबिम्बितचैतन्यस्येति कल्पनमप्रामाणिकं गौरवपराहतंचेति विभावनीयम् । ननु अहमर्थो न आत्मा **तस्य आत्मनः पृथगुपदेशात् । ' अथातोऽहकारादेश. ' ' अथात आत्मादेशः '** इतिपृथगुपदेशान्यथानुपपत्या अहमर्थस्य अनात्मत्वं निश्चीयते । तत्र आत्मशब्देन परमात्मग्रहणं कर्तुं न शक्यते **' यो वै भूमा तत्सुख ' मिति** भूमानमुपक्रम्य **' स एव अधस्तादिति '** तस्यापि पार्थक्येनोपदेशात् इति चेत् न; भूमाहकारात्मनां त्रयाणामपि सर्वगतत्वोपदेशेन जीवाहंकारयोरतदयोगेन जीवाहंकारपरत्वाभावात् । न च स एवेदं सर्वमिति वाक्यशेषात् अत्र सार्वात्म्यस्यैव प्रतिपादनं न सर्वगतत्वस्येति वाच्यम, सप्तमीपञ्चमीप्रथमान्तेभ्यो दिग्देशकालेष्वस्तातिरिति विहितस्य अस्तातिप्रत्ययस्य नानार्थकत्वात् ।

न च वाक्यशेषात्सार्वात्म्यनिर्णयः सर्वाभेदस्य अद्वैतिनाप्यनङ्गीकारात् । सर्वस्य ब्रह्माभेदो नाम सर्वस्य ब्रह्मव्यतिरेकेण असत्त्वमिति स्वीकारे मुख्यार्थहानि । " ब्राह्मणोऽस्य मुखमासीत् " " राजा राष्ट्र " मित्यादिवत् तज्जन्यत्वतदधीनत्वाद्यर्थोपादानेन इतरप्रमाणाविरोधेन स्वारस्येन व्याख्यानकरणस्य शक्यत्वात् । तस्माज्जीवेश्वरभेदः न औपाधिकः किन्तु स्वाभाविक एव । इति तद्विषये प्रत्यक्षं प्रमाणमिति सिद्धम् । एवमेव जीवप्रातियोगिकेश्वरधर्मिको भेदः प्रत्यक्ष एव, तस्य

अस्मदादिप्रत्यक्षाविषयत्वेऽपि ईश्वरप्रत्यक्षविषयत्वात् । न च ईश्वरस्य तादृशप्रत्यक्षे प्रमाणाभावः '**उत्तम पुरुषस्त्वन्य परमात्मेत्युदाहृतः "तान्यह वेद सर्वाणि न त्व वेत्थ परतप" "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" "अव्यक्तं व्यक्तिमापन्न मन्यन्ते मामबुद्धय । पर भावमजानन्तो ममाव्ययमनुत्तमम्**" इत्यादिवचनानां तत्साधकत्वात् । एवं जीवानां परस्परभेदोऽपि साधयितु शक्यते—नाहं देवदत्त इति यज्ञदत्तप्रत्ययस्य जागरूकत्वात् ।

## जीवब्रह्मभेदे अनुमानमपि प्रमाणम् ।

तथाहि—जडातिरिक्तोऽहमितिप्रतीयमानोर्थः ब्रह्मधर्मिकभेदप्रतियोगी तत्प्रतियोगिकभेदवान् वा परिच्छिन्नत्वादसर्वज्ञत्वाद्वा घटवत् । न चारोपितभेदमादाय सिद्धसाधनम् । ह्रदादावप्यारोपितवह्निसत्त्वेन बाधोच्छेदापत्तेः सिद्धसाधनतापत्तेश्च यद्वा ब्रह्म स्वज्ञानाबाध्यजीवप्रतियोगिकभेदवत्, पदार्थत्वात्, घटवत् ।

यद्वा जीवेश्वराभेदः पारमार्थिकः अनिषेध्यत्वेन प्रमाविषयत्वात् ब्रह्मवत् । न चासिद्धिः, "नान्योऽतोऽस्ति द्रष्टा" इत्यादि श्रुतिभिः भेदो निषिध्यते इति वाच्यम् एवमादिश्रुतीना ईश्वरसमानद्रष्ट्रन्तरनिषेधपरत्वात् ।

यद्वा जीवः न ब्रह्माभिन्नः परिच्छिन्नत्वात् घटवत् । एतेन अन्तःकरणातिरिक्तोऽहमिति प्रतीयमानो जीवो न परस्माद्भिद्यते चेतनत्वात्, पदार्थत्वाद्वा ब्रह्मवदिति परास्तम् । प्रत्यक्षविरोधाद्युक्तदूषणगणग्रासात् ।

ननु नाहमीश्वर इति प्रत्यक्षं स्वीक्रियते एव । अहमर्थस्य जीवत्वाङ्गीकारे अपि न बाधकम् । जीवानुयोगिकेश्वरप्रतियोगिकभेदोऽपि अङ्गीक्रियते—विशिष्टयोः अभेदानङ्गीकारात् उपलक्षितयोरेव अस्माभिः अभेदाङ्गीकारात् इति चेन्न, गोत्वाश्वत्वविवक्षामात्रेण गोत्वाश्वत्वोपलक्षितयोः गवाश्वयोरपि अभेदः स्यात् । इष्टापत्तिरिति चेत् सर्वत्र व्यवहारविप्लवः स्यात् गोत्वाश्वत्वयो यावदाश्रयभावित्वात् तदुपलक्षितत्वं तदभावकाले तद्व्यावर्त्यमानत्वरूपं गवाश्वयोः न संभवति अतः उपलक्षितयोस्तयोः अभेदापादनं न संभवति इति चेत् जीवत्वेश्वरत्वयोरपि नित्यत्वे यावदाश्रयभावित्वात् तदुपलक्षितत्वं जीवेश्वरचैतन्यस्वरूपयोरपि न संभवति । उपलक्षितत्वाङ्गीकारेऽपि भेद एव सिद्ध्यति । तदुपलक्षितत्वं नाम तद्बोध्यव्यावृत्तिशालित्वं व्यावृत्ति भेद इत्यनर्थान्तरम् । विशेषणतापन्ना यः यादृशी व्यावृत्ति-

बुद्धिं जनयति उपलक्षणतापन्न सः तादृशीं व्यावृत्तिबुद्धिं जनयत्येव । तथा हि— काकपिकवन्तौ यज्ञदत्तदेवदत्तगृहौ इत्यत्र काकपिकविशेषणवत्तादशायां यज्ञदत्तदेवदत्तगृहयोः यादृश पारस्परिकव्यावृत्तिज्ञानं काकपिकविशेषणाभ्यां जन्यते तदेव तदुपलक्षणवत्तादशायामपि ताभ्यामेव जन्यते ।

किंच अर्थापत्तिरूपानुमानविशेषेणापि जीवेश्वरभेदः साधयितुं शक्यते । भेदं विना संसारित्वासंसारित्वादिव्यवस्थानुपपत्तेः । न च कल्पितभेदस्तदुपपादकः भेदकल्पनाया अद्याप्यसिद्धेः ।

एवं जीवानां परस्परभेदेऽपि अनुमानं प्रमाणम् । तथा हि देवदत्तात्मा यज्ञदत्तात्मप्रतियोगिकानौपाधिकभेदवान्, तद्दुःखाननुसन्धानवत्त्वात् घटवत् । नचाप्रयोजको हेतु । विपक्षे हेत्वच्छित्तिरेव बाधिका । चैत्रो मैत्रप्रतियोगिकतात्विकभेदवान् तदनुभूतसर्वाननुभावितृत्वात् घटवत् विमतं सुरभिधूमरहितम्, चन्दनप्रभववह्निनरहितत्वात् इत्यादाविव विशेषणसार्थक्योपपत्ते । विमतो बन्धध्वंसः स्वप्रतियोगितावच्छेदकावच्छिन्नाधारप्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदवन्निष्ठ. बन्ध-ध्वंसत्वात् । संमतवत् ।

जीवः स्वज्ञानाबाध्यजीवप्रतियोगिकभेदवान् पदार्थत्वात् घटवत् । सर्वत्राप्यनौपाधिकभेदाभावे सुखदुःखानुसन्धानानुसन्धानादिव्यवस्थानुपपत्तेर्नाप्रयोजकत्वम् । न चौपाधिकभेदेन व्यवस्थोपपत्तिः करचरणाद्युपाधिभेदेऽपि बाल्युवादिशरीरभेदेऽपि च तद्गतसुखदुःखानुसन्धानदर्शनात् ।

ननु देवदत्तसुखदुःखानुसन्धानं यज्ञदत्तस्य आत्मन आपाद्यते उत यज्ञदत्तदेहस्य, नाद्य इष्टापत्ते. सिद्धान्ते आत्मभेदाभावेन तदनुसन्धानस्यैव तदीयत्वात् । नापि देहस्य तदापाद्यम् जडत्वात् इति चेत् न । देवदत्तशरीरेणापि तज्ज्ञानात् प्रवृत्तिप्रसङ्गात् ।

एवमेव औपाधिकभेदेन व्यवस्था उपपद्यते इति न युक्तम् । उपाधिभेदव्यतिरिक्तौपाधिकभेदस्य अप्रतीतेरसम्भवाच्च । स्वाभाविकप्रदेशाविशेषाभावे परिच्छिन्नोपाधिसम्बन्धस्य अयोगात् । एतेन अवच्छेदकभेदप्रयुक्तावच्छिन्नभेद एव व्यवस्थानियामक इत्यपि निरस्तम् ।

उपर्युक्तानि सर्वाणि अनुमानानि " **नान्योऽतोऽस्ति द्रष्टा** " " **एको देवः सर्वभूतेषु गूढः** " इत्यादि श्रुत्या " **आकाशमेक हि यथा घटादिषु**

**पृथग्भवेत् । तथाप्येकोप्यनेकः स्यात् जलाधारेष्विवांशुमान् "** इति याज्ञवल्क्यवचनेन **" ममान्तरात्मा तव च ये चान्ये देहसंस्थिताः । सर्वेषां साक्षिभूतोसौ न ग्राह्यः केनचित् क्वचित् । "**

इत्यादि भारतवचनेन च बाध्यन्ते इति प्रत्युक्तम् । श्रुतेरर्थान्तरस्य वक्ष्यमाणत्वात् । '**एकोदेव**' इतिश्रुतौ भारतवचने च जीवभेदं सिद्धवत्कृत्वा अन्तर्याम्यैक्यमेव प्रतिपाद्यते इत्यतः त्वदभिमतं न सेत्स्यति । याज्ञवल्क्यवचनस्यापि '**एक एव तु भूतात्मा**' इत्यादिवत्परमात्मविषयकत्वात् । एतेन, न चाभेदश्रुत्यप्रामाण्यप्रसङ्गे विपक्षे बाधकः इत्यपि निरस्तम् । अर्थान्तरत्वेऽपि तत्प्रामाण्यस्य अहानेः ।

## श्रुतिस्मृतीनां जीवेश्वरभेद एव तात्पर्यसमर्थनम्

यद्यपि द्वासुपर्णादिपरःशतश्रुतयो भेदं प्रतिपादयन्ति, तथापि तेषा भेदे तात्पर्यं नास्ति प्रत्यक्षसिद्धभेदानुवादित्वात्तासाम् इति चेन्न; त्वन्मते अहमर्थविशिष्ट एव भेदानुभवेन निरुपाध्यात्मनि भेदस्य प्रत्यक्षेण अगृहीतत्वात् तब्दोधकत्वेन श्रुतीनामनुवादित्ववर्णनं न युक्तियुक्तम् । न च प्रत्यक्षसिद्धातिरिक्तभेदविषयकत्वे प्रमाणाभावः । अनन्तानां श्रुतीनामनुवादित्वे नैरर्थक्यापातात्, विषयान्तरकल्पनेन नैरर्थक्यपरिहारस्य प्राज्ञसंमतत्वात् ।

'तुष्यतु दुर्जनः' इति न्यायेनेदमुक्तम् । अस्मद्रीत्या भेदश्रुतीनामनुवादित्वेऽपि न दोषः । तस्य याथार्थ्यरूपप्रामाण्याविरोधित्वात् । यत्तन्नेत्यादिनिषेधलिङ्गाभावेन अधिकविधानार्थमनुवादित्वमिति किं न स्यात् । नैकविधविधेयानां विधानदर्शनाच्च । विधानार्थमनुवादित्वेऽनुवादकपदानां स्वार्थपरत्वाक्षतेश्च । किंच प्रतिजीवं भेदस्य प्रत्यक्षासिद्धत्वेऽपि जीवत्वावच्छिन्ने तदसिद्ध्यभावात् श्रुतेरननुवादित्वमुपपद्यते । किञ्च औपनिषदस्य ब्रह्मणः प्रमाणान्तरेण अप्राप्ततया तद्धर्मिकस्य तत्प्रातियोगिकस्य वा भेदस्य कथं शास्त्रनिरपेक्षप्रत्यक्षेण प्राप्ति । न च श्रुत्यर्थज्ञानशून्यानामपि भेदप्रतीतेः न शास्त्रसापेक्षत्वमिति वाच्यम् । प्रतियोग्युपस्थितिं विना तत्प्रतियोगिकभेदप्रतीतेरसम्भवात् सत्यम्; तथापि, भवतु भेदप्रत्यक्षं '**यः सर्वज्ञः सर्ववि**'दित्यादि प्रातियोगिग्राहकश्रुतिसापेक्षं भेदश्रुतिसापेक्षत्वस्य अनुपयोगात् इति चेन्न, यत् प्रमाणं यद्विषये यदुपजीव्यैव प्रवर्तते, तस्य तद्विषये तस्य तज्जातीयस्य वा अनुवादत्वानापादक-

त्वात् । अन्यथा तवापि ‘ तत्त्वमसि ’ इत्यादिमहावाक्यानामनुत्वादित्वेमेव स्यात् । श्रुत्या तत्पदार्थस्य ब्रह्मत्वावगत्यनन्तरं ‘ **अहमस्मी** ’ ति तदर्थब्रह्माभेदस्य प्रत्यक्ष-सिद्धत्वात् तस्माच्छ्रुतेरननुवादित्वेन भेदे एव तात्पर्यमुपवर्णनीयम् । भेदस्य श्रुति-तात्पर्यविषयत्वेनैव तात्त्विकत्वसिद्धेश्च । न च तात्त्विकत्वसिद्धिं विना तात्पर्य-विषयत्वं न सिध्द्यति इति चेन्न, ब्रह्मणोऽपि श्रुतितात्पर्यविषयत्वासिद्धेः प्राक् तात्त्विकत्वासिद्ध्या तत्त्वावेदकश्रुतीना ब्रह्मणि तात्पर्य न सिद्ध्येत् । ननु भेदस्य निषिद्धत्वेन कथं तात्त्विकत्वनिश्चयः तदभावे च कथं श्रुतितात्पर्यविषयत्वमिति चेत् ‘ नेति नेति,’ ‘ असद्वा इदमग्र आसी ’ दित्यादि श्रुतिः ब्रह्मणोऽपि निषिद्धत्वप्रतीतेः ।

ननु भेदज्ञानान्महापुरुषार्थाप्रतिपादनेन प्रत्युत “ **उदरमन्तरं कुरुते अथ तस्य भयं भवति,** ” “ **मृत्यो. समृत्युमाप्नोति य इह नानेव पश्यति** ” इति भेदज्ञानस्य अनर्थहेतुत्वप्रतिपादनेन च श्रुतीनां भेदपरत्वं न संभवति ।

“ अथ येन्यथातो विदुरन्यराजानस्तेऽक्षय्यलोकाभवन्तिं,” “ **अथ योऽन्यां देवतामुपास्ते अन्योसावन्योहमस्मीति न स वेद यथा पशुः** ” इत्यादिना भेदस्य निन्दितत्वाच्च । ‘ **नान्योऽतोऽस्ति द्रष्टा** ’ इत्यादिना भेदाभावस्य प्रतिपादितत्वाच्च । भेदं प्रतिषिद्ध्य “ **एष ते आत्मान्त-र्याम्यमृतः** ” इत्यभेदप्रतिपादनाच्च । अत्र सर्वत्र ईश्वरनानात्वस्य अप्रसक्तत्वान्न निषेधो युक्तः इति चेत् तदेतत्सर्वमापातरमणीयम् । “ **पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति** ” “ **जुष्ट यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः** ” इत्यादिश्रुत्या “ **यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् । स सर्वविद् भजति मां सर्वभावेन भारत** ” इत्यादिस्मृत्या च भेदज्ञानस्य महापुरुषार्थहेतुत्वावगमात् । पूर्वोदाहृतवाक्यपर्यालोचनया च उपर्युक्त-प्रमाणयोः जीवेश्वरभेदपरत्वस्यैव न्याय्यत्वाच्च । ऐक्यमात्रस्य प्रतिपिपादयिषितत्वे, चशब्दपृथक्शब्दयोर्वैय्यर्थ्याच्च । न च ‘ **उदरमन्तर कुरुते** ’ इत्यस्यां श्रुतौ भेदज्ञानस्य अनर्थहेतुत्वं प्रतिपाद्यते इति वाच्यम् उदरम् अल्पमेव, मिथ्या-भूतमेव, अन्तरं भेदं करोति–भेद बुद्धि करोति, तस्य भयं भवतीति मिथ्याभूतभेद-दर्शिन एव भयप्रतिपादनात् । “ **य इह नानेव पश्यति** ” इत्यस्यापि नानेव अलीकं अल्पं वा भेदं यः पश्यति तस्य मृत्युभयप्रदर्शनात् । वस्तुतस्तु

एतदादिवाक्यजातं परमात्मनि स्वगतस्वप्रातियोगिकभेददर्शीनिन्दापरमिति न ततः परस्येष्टसिद्धिः। पूर्ववाक्येषु परमेश्वरस्यैव प्रस्तुतत्वात्। '**अथ येन्यथातो विदु**' रित्यस्यापि '**स एवेद सर्वम्**' '**अहमेवेदं सर्वम्**' '**आत्मैवेद सर्व**' मिति सामानाधिकरण्यानिर्देशलब्धं यत्सर्वनियामकत्वसर्वकारणत्वादि, अतोन्यथा तद्विरुद्धाकारेण ये जानते तन्मात्रनिन्दापरत्वाच्च। '**अथ योन्यां देवता**' **मिति** श्रुतिरपि योऽन्यो जीवः अन्यां विलक्षणां देवतामुपास्ते किमिति अन्योऽसौ परमात्माहमस्मीति 'न स वेद यथा पशु' रिति जीवपराभेदोपासना विनिन्दति इति न त्वदनुकूलम्। न च व्यवहितान्वयो दोषः सन्निधानात् योग्यतायाः प्रबलत्वात्।

यद्वा '**अन्योसावन्योहमस्मी**' त्येवोपासनाप्रकारः। सा चोपासना परदेवताविषयिण्येव कार्या। यस्तु परदेवतान्यां देवतामुपास्ते, न स वेद यथा पशुः तथा च प्रमाणम् "वासुदेवं परित्यज्य योऽन्यं देवमुपासते। तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः" इति। न चैवं 'नान्योतोऽस्ति द्रष्टा' इत्यादिना भेदं प्रतिषिध्य '**एष ते आत्मा अन्तर्याम्यमृत**' इत्यभेदप्रतिपादन कथमुपपद्यताम्—एषोन्तर्यामी ते आत्मा स्वरूपमिति तदर्थप्रतीतिरिति वाच्यम्। 'सदा-पश्यन्ति सूरयः' इत्यादिद्रष्टृनेकत्वप्रतिपादकश्रुतिविरोधेन द्रष्टृसामान्यभेदनिषेध-परत्वायोगात्। अत इत्यनेन प्रकृतं सर्वनियन्तारं परामृश्य 'अतोऽन्यो द्रष्टा नास्ति इत्युक्ते अस्मिन् ग्रामे अयमेव सर्वनियामकः नान्यः पुरुषोऽस्ति इत्यादावन्यशब्दस्य प्रकृतसदृशान्यपरतया व्युत्पन्नत्वेनेहापि सर्वनियामकद्रष्ट्रन्तरनिषेधस्यैव उचितत्वाच्च।

"**एष ते आत्मान्तर्याम्यमृतः**" इत्यत्र पृथिव्यादिनियामकत्वेन प्रस्तुत आत्मा ते अन्तर्यामी इत्यर्थः। तथा च सूत्रम् "शारीरश्चोभयेऽपि भेदेनैनमधीयते" इति। गुरुचरणास्तु—अद्वैतभाष्यकारैः एतत्सूत्रव्याख्यानावसरे अस्याः श्रुतेर्भेद-परत्वमुक्तमिति सुनिपुणं प्रतिपादयन्ति। तदनुसारेण अपसिद्धान्तोऽपि तदन्यथा-व्याख्यानकर्तुर्गले पतति।

अत एव साधु सत्यं चोक्तं श्रीमदानन्दतीर्थभगवत्पूज्यपादैः "**न चाभेदे कश्चिदागमः, सन्ति च भेदे सर्वागमाः**" इति

# भेदसामान्यस्य दुर्निरूपत्ववादभङ्गः ।

तत्र तावत् एवं खलु अद्वैती तत्र तत्र प्रत्यवतिष्ठते । भेद. न प्रमाणगोचरः । न च प्रत्यक्षप्रमाणेनैव स प्रमीयते इति वाच्यम् । अन्योन्याश्रयादिदोषगणग्रासात् । तथा हि भेदः सन् द्विष्ठो वा स्यात् एकनिष्ठ' अपरनिरूप्यो वा स्यात् । आद्ये प्रत्यक्षप्रतीतौ भासमानः भेदः घटपटौ भिन्नौ इति घटपटविशेषणतया वा प्रतीयेत घटपटयोर्भेद इति घटपटविशेष्यतया वा प्रतीयेत । भेद इत्येव कुत्राप्यप्रतीते. । द्वितीये तु घटात् पटो भिन्न इति वा घटात् पटस्य भेद इति वा घटप्रतियोगिकतया पटधर्मिकतया भेदग्रहो वक्तव्य । तत्रोभयत्राप्यन्योन्याश्रयत्वम् । विशेष्ययोर्घटपटयोर्ज्ञाने सति हि तद्विशेषणतया भेदो ज्ञातव्य । न हि चैत्रस्य अप्रत्यक्षत्वे दण्डः तद्विशेषणतया अध्यक्षीकर्तुं शक्यते । भेदज्ञानं च विना विशेष्यज्ञानं न संभवति । न हि अज्ञाते भेदे घटपटौ इति द्वित्वविशिष्टार्थज्ञानं संभवति । एवं भेदरूपविशेष्यज्ञाने तद्विशेषणतया द्वित्वावच्छिन्नघटपटज्ञानम् । द्वित्वप्रतीतेर्भेदज्ञानकार्यत्वात् । द्वित्वावच्छिन्नघटपटज्ञाने च भेदज्ञानम्, ससंबन्धिकपदार्थप्रतीतेःसंबन्धितावच्छेदकप्रकारकसंबन्धिज्ञानकार्यत्वात् इत्यन्योन्याश्रयत्वम्। तथा धर्मिप्रतियोगिज्ञाने भेदज्ञानम्, तस्य तज्जन्यत्वात् । भेदज्ञाने सत्येव धर्मिप्रतियोगिनो ज्ञानम् । न हि भेदग्रहमन्तरेण धर्मिप्रतियोगिभावः ज्ञातुं शक्यते । तथात्वे घटात् घटस्य भेद इत्यपि प्रतीतिः स्यात् । न च परस्पराश्रयोत्पत्तिकानि कार्याणि कदाप्युत्पत्तुमर्हन्ति । किं च प्रत्यक्षं भेदमेव विषयीकुर्यात् उत वस्त्वपि । नाद्य. । भेद इत्येवाप्रतीते' । द्वितीयेऽपि किं भेदपूर्वं वस्तु गोचरयेत् उत वस्तुपूर्वं भेदं युगपदुभयं वा । नाद्यः । भेद इत्येव अप्रतीतेरिति दत्तोत्तरत्वात् । बुद्धेर्विरम्य व्यापारायोगाच्च । अत एव न द्वितीयः । नापि तृतीय. । भेदप्रतीतिर्वस्तुप्रतीतिपूर्वकत्वेन यौगपद्यायोगात् किंच पटो भिन्न इति विशेषणविशेष्यभावप्रतीतिस्तावद्वर्तते । सा च भेदप्रतीत्यधीना इति दण्डी चैत्र इत्यादौ दृष्टचरा इति भेदप्रतीतिपरम्परया अनवस्था स्यात् । किं च किमयं भेदो भिन्नमेव धर्मिणं परिरभते उताभिन्नम् । नाद्यः । अनन्तभेदाभ्युपगमप्रसङ्गात् । अन्यथा आत्माश्रयाद्यापातात् । सन्तु अनन्ताः भेदाः किं नश्छिन्नामिति चेत् न, ते अनन्ता अपि भेदाः किं क्रमेण धर्मिणं परिरभन्ते उत युगपत् नाद्य. । क्रमेण परिरभमाणानन्तभेदसंबन्धाय धर्मिणोऽनादिनित्यतापातात् । न च भेदानन्त्यं प्रामाणिकं येन तदङ्गीकारः स्यात् । न द्वितीयः, भिन्ने भेदस्थितिरिति पक्षक्षते । भेदसंबन्धं विना

भिन्नत्ववाचोयुक्तेरयुक्तत्वात् । न द्वितीयः । विरोधादेव। किंच भेदः किं स्वरूपं धर्मो वा । नाद्यः ।

**सापेक्षत्वात्सावधेश्च तत्त्वेऽद्वैतप्रसङ्गत ।**
**एकाभावादसंदेहान्न रूपं वस्तुनो भिदा ॥**

किं च भेदस्य घटस्वरूपत्वे घटभेदशब्दयोः पर्यायत्वं, ततश्च अन्यतरशब्दपरिहारेण अन्यतरप्रयोग स्यात् । न द्वितीय । अनवस्थापातात् । तस्माद्भेदस्वरूपस्य विचारासहत्वेन तत्प्रत्यक्षस्य असंभवात् अविद्याविलसित एवायं भेद. इति । एवंवादी प्रष्टव्य । किं भेदस्य दर्शनमेव निराक्रियते, उत तस्य कारणजन्यत्वम् । अथ निर्दोषकारणजन्यत्वम् । नाद्यः । यदि भेदो दृश्येत तदा अन्योन्याश्रयत्वादिक स्यात् इत्यापादने भेददर्शनस्य उभयसंमतत्वेन विपर्ययापर्यवसानात् । भेदभ्रमनिरासाय वेदान्तश्रवणाद्ययोगाच्च । न द्वितीय । तत् किमजन्यतया स्यात् उत अतत्कारणजन्यतया वा । नाद्य. भेदप्रतीतेर्नित्यत्वापत्त्या तवैव अनर्थापातात् । न द्वितीयः । तदुत्पादकस्यैव तत्कारणत्वेन व्याघातात् । तृतीयेऽपि किं तर्केण सदोषत्वाध्यवसाय. अथवा स्फुटतरबाधकवशात् । नाद्य । वेदान्तवाक्यजन्यज्ञानविषयस्य ऐक्यस्यापि अविश्वसनीयता पातात् । त्वदुक्ततर्काणा ऐक्येऽपि प्रसरसंभवात् । कश्चात्र भेद प्रत्यक्षे दोषः । अविद्येति चेत् तर्हि सैव वेदान्तानामपि मूलमिति तत्रापि प्रद्वेषः स्यात् । न द्वितीयः । निरवकाशस्य तस्य अभावात् । तत्त्वमसीत्यादेरर्थान्तरपरत्वात् । किं च त्वया कल्प्यमानबाधकज्ञानं किं भेदविषयकमुताभेदविपयकं यद्वा यत्किंचिदुदासीनविपयकम् । निरालम्बनबाधासंभवात् । नाद्य । अस्मदभिमतासिद्धेः । द्वितीयेऽपि अभेद. किं भेदाभाव उत भेदविरोधी यद्वा भेदान्यः । पक्षत्रयेऽपि भेदः अङ्गीकर्तव्यः एव । भेदाभावादिविषयकेण बाधकप्रत्ययेन स्वविषयस्य प्रतियोगिविलक्षणतयैव ग्राह्यत्वात् । नापि तृतीय । उदासीनविषयकस्य प्रत्ययस्य बाधकत्वायोगात् । किं च बाधकज्ञानं भवत् नायं भेद इति वा, नास्त्यत्र भेद इति वा, अन्यदेव भेदरूपेण प्रत्यभात् इति वा भवेत्। तदेतत् त्रयमपि भेदावगाहीति कथं तद्बाधकं भवेत् । ननु तथापि अन्योन्याश्रयत्वादयः दोषाः कथं परिह्रियन्ते इति चेत् सावधानमनाः शृणु । भेदः धर्मिस्वरूपमेव तेन धर्मिप्रतीतिरेव भेदप्रतीतिरिति प्रतीतिद्वयाभावान्नान्योन्याश्रयत्वम् । यदुक्तं प्रत्यक्षं किं भेदमेव विषयीकुर्यादित्यादि तत्र युगपदुभयं

विषयीकरोतीति वदामः। न च भेदप्रतीतेर्वस्तुप्रतीतिपूर्वकत्वात् यौगपद्यायोगः। भेदस्य वस्तुस्वरूपत्वेन वस्तुप्रतीतिरेव भेदप्रतीतिरित्यङ्गीकारात्। अन्यथा बिम्बप्रतिबिम्बयोरभेदग्राहि प्रत्यक्षं जीवब्रह्मणोरभेदग्राहि श्रुत्यादिकं च किमभेदमेव विषयीकुर्यादुत वस्त्वपि इति प्रश्नकरणसंभवात्। यदप्युक्तं पटो भिन्न इत्यादि तदप्यसारम् भेदस्य धर्मिस्वरूपत्वादेव अनवस्थादोषभीत्यभावात। न च तथात्वे विशेषणविशेष्यभावः कथमुपपद्यतामिति चेत् सविशेषाभेदाङ्गीकारेण दोषाभावात्। अन्यथा जीवाभिन्नं ब्रह्मेत्यादावपि विशेषणविशेष्यभावानुपपत्ति। यदुक्तं भेदो भिन्नमेव धर्मिणं परिरभते इत्यादि तदपि तुच्छम्। भेदस्य धर्मिस्वरूपत्वेन धर्मिणं परिरभ्यैव भेदस्य जातत्वाङ्गीकारात्। ननु धर्मिणा सहैव धर्मोत्पत्त्यङ्गीकारे गुणिना सह गुणोत्पत्तिरङ्गीकार्या स्यात् तथा चोत्पन्न द्रव्य क्षणमगुणमाक्रियाकं च तिष्ठति इति न्यायस्य का गति गुणेष्वपि धर्मन्यायस्य प्रसरात् इति चेन्न; नैयायिकं प्रत्येव एवमापादनसंभवात्। वय तु ब्रूमः त्वदुक्तन्यायस्य अधोगतिरेवेति। गुणगुणिनोः विषाणद्वयवत् युगपदुत्पत्त्यङ्गीकारात्। गुणवदुपादानमेव गुणवदुपादेयात्मना परिणमते इत्यङ्गीकाराच्च। ननु भेदस्य वस्तुस्वरूपत्वे कि प्रमाणमिति चेत् प्रत्यक्षमेवेति ब्रूमः। यदा यदा घटादेः स्वरूपमनुभूयते तदा तदा घटादिकमघटादिव्यावृत्ततयैवानुभूयते न तु अघटादिसर्वात्मकतया इति तु सर्वानुभवसिद्धम्। व्यावृत्तिरेव भेदः। तेन अघटादिसर्वभेदो घटादिस्वरूपमितिज्ञायते। अयमत्र प्रयोगः संभवति। विमतो भेदो घटस्वरूपं घटप्रतीतौ नियमेन प्रतीयमानत्वात्। नियमग्रहणात् घटपटाविति समूहालम्बनज्ञानविषये पटे न व्यभिचारः। ननु अत्र व्याप्ति न सभवति। न च यज्ज्ञाने यन्नियमेन उपलभ्यते ततत्स्वरूपमिति व्याप्ति संभवतीति वाच्यम् दण्डिज्ञानादौ अवश्यं भासमानदण्डादौ दण्डयादिस्वरूपत्वाभावेन व्यभिचारादिति चेन्न यत्र घटप्रतीतावेव नियमेन प्रतीयमानत्वं तत्र घटस्वरूपत्वम् यथा घटस्वरूपे इति विशेषव्याप्तेरेवाश्रयात्। यद्वा घटभेदावन्योन्याभिन्नौ नियमेन अन्यतरप्रतीतावन्यतरस्य प्रतीयमानत्वात्। ययोरन्यतरस्य प्रतीतौ अन्यतरस्य प्रतीतिनियमः तावभिन्नौ। यथा संप्रतिपन्ने घटघटत्वे इति प्रयोगसंभवात्। दण्डिप्रतीतौ दण्डस्य स्फुरणनियमेऽपि दण्डप्रतीतौ दण्डिनः स्फुरणनियमाभावात् न व्यभिचारः। ननु भेदः न धर्मिस्वरूप तत्प्रतीतावपि कदाचिदप्रतीयमानत्वात्। यो यत्प्रतीतावपि न प्रतीयते नासौ तत्स्वरूपम्। यथा घटप्रतीतावप्रतीयमानः पटः न घटस्वरूपमिति सत्प्रतिपक्षात् इति चेन्न;

असति प्रतिबन्धके संशयादर्शनेन सर्वव्यावृत्तमेव वस्तु ज्ञायते इत्यवश्यमङ्गीकार्यत्वात् । यदि सर्वस्य स्वरूपं सर्वव्यावृत्ततया नानुभूयते तदा सर्वपदार्थान्तर्गतात्मस्वरूपं प्रतीयमानं घटादिसर्वव्यावृत्तत्वेन न प्रतीयेत तथा च अहमिति अनुभूयमानः अहं वा अन्यो वा इति संशयविषयः स्यात् । समानधर्मदर्शनादेः संशयकारणस्य सत्त्वात् । प्रतिबन्धकीभूतव्यावृत्तिज्ञानस्य अभावात् । तस्मादुक्तसंशयकारणस्य सत्त्वेऽपि व्यावृत्तिज्ञानरूपप्रतिबन्धकस्य सत्त्वान्न तथा संशयादिकमिति वक्तव्यम् । तथा च सिद्धं वस्तुप्रतीतिरेवभेदमवगाहते इति ।

ननु कथं भेद' वस्तु प्रतीताविव प्रतीयते । प्रतीत्यभावे पूर्वोक्तसंशयाद्यापत्तिरिति चेन्न, पूर्वं वस्तुप्रतीतिः पश्चाद्भेदप्रतीतिरित्यङ्गीकारात् । न चैतद् युक्तम् । निर्विकल्पकः प्रत्ययः वस्तुमात्रं गोचरयति । भेदस्तु वस्तुदर्शनोत्तरं प्रतियोगिस्मरणे सत्यवभासते । यथा गवि गवयसादृश्यं भूतले घटाभावश्च । तथा च पाश्चात्यभेददर्शनेन संशयादिकं प्रतिबध्यते इति चेन्न, पूर्वं वस्तुप्रतीतिः पश्चाद्भेदप्रतीतिरित्यत्र प्रमाणाभावात् । निर्विकल्पकस्य अप्रामाणिकत्वात् । न तावत्तत्र प्रत्यक्षप्रमाणम्, तस्य अतीन्द्रियत्वाभ्युगमात् । नापि हानादिव्यवहाररूपकार्येण तदनुमानम्, हानादिव्यवहारस्य सविकल्पकसाध्यत्वात् । नापि प्राथमिकं गौरिति प्रत्यक्षजन्यविशेषणज्ञानजन्यम्, जन्यविशिष्टज्ञानत्वात् अनुमितिवत् इत्यनुमानं मानम् दृष्टान्तस्य साध्यविकलत्वात् । न चानुमितौ साध्यप्रासिद्धेर्हेतुत्वेन तत्र विशेषणज्ञानजन्यत्वं सिद्धमेवेति वाच्यम्, व्याप्त्यादिज्ञानसत्त्वे साध्यप्रासिद्धिविलम्बेन अनुमितिविलम्बाभावेन तत्र तस्या अहेतुत्वात् । न च साध्यप्रसिध्द्भावे व्याप्तिग्रह एव न संभवतीति वाच्यम्, तर्हि तस्या साध्यप्रसिद्धेरनुमितिजनकीभूतव्याप्तिग्रहजनकत्वेन अन्यथासिद्धतया अनुमितावजनकत्वापातात् । नापि ज्ञानत्वं निष्प्रकारकत्वसमानाधिकरणम्—सकलज्ञानवृत्तित्वात् व्यतिरेकेण इच्छात्ववत् । इत्यनुमानं मानम् ( अत्र अप्रमात्वे व्यभिचारवारणाय सकलपदम् ) अप्रयोजकत्वात् । इच्छात्वव्यवहारत्व—अनुमितित्वादिकं पक्षीकृत्यापि प्रयोगसम्भवेन निष्प्रकारकेच्छादिसिद्धिप्रसङ्गाच्च । नापि चक्षुः चाक्षुषसविकल्पकातिरिक्तज्ञानकारणम् ज्ञानकारणत्वात्, घ्राणवदित्यनुमान मानम् । अप्रयोजकत्वात् । अनेन निर्विकल्पकसिद्धौ तदातिरिक्तेतिविशेषणदानेन सविकल्पकानिर्विकल्पकातिरिक्तज्ञानसिद्धिः स्यात् । एवं तदतिरिक्तज्ञानासिद्धिरपि स्यादित्यतिप्रसङ्गाच्च नापि

जागराद्यसविकल्पकं प्रत्यक्षं जन्यविशेषणज्ञानजन्यम्, जन्यविशिष्टज्ञानत्वात् दण्डीतिप्रत्यक्षवदित्यनुमानं मानम् । दृष्टान्तस्य साध्यवैकल्यात् । दण्डपुरुषयोर्युगपदिन्द्रियसन्निकर्षे असंसर्गाग्रहे च सति विनैव पूर्वदण्डज्ञानं दण्डीति ज्ञानोत्पत्तिसंभवेन विशिष्टज्ञाने विशेषणज्ञानस्य कारणत्वानङ्गीकरात् तस्मान्नानुमानं प्रकृते मानम् । आगमस्तु अस्मिन्विषये नोपलभ्यते । इदमत्र सारम् । यदि भेदो वस्तु प्रतीतौ न प्रतीयेत तदा अस्य अमुना भेद इति सविकल्पकज्ञानमपि न जायेत । तादृशव्यवहारश्च नोत्पद्येत । अस्य अमुना इति धर्मिप्रतियोगितया वस्तुद्वयमुद्दिश्य भेदो ज्ञायते । न च अगृहीतभेदं तथा उद्देष्टुं शक्यते । एकस्मिन्नपि वस्तुनि तत्प्रसङ्गात् । भेदसत्तामात्रेण तदुपपत्तिरिति चेन्न दूरस्थवृक्षयोरभेदाप्रत्ययापातात् । दोषादभेदप्रत्यय इति चेन्न भेदसत्तामात्रस्य तदुपपादकत्वे दोषस्य अकिंचित्करत्वात् । धर्मिप्रतीतौ यदि भेदो न प्रतीयते तर्हि कदापि तस्य प्रतीतिः न स्यात् इति संशयप्रसङ्गो दुर्वार एव । एतेन निर्विकल्पके ज्ञाने भेदस्य भेदिनोश्च युगपदङ्गुलित्रयवदवभासान्न संशयाद्यवकाशः इत्यपि निरस्तम् । निर्विकल्पकस्यैव शशविषाणायितत्वात् । भेदस्य भेदिसंबन्धितानवगतौ तद्विषयकसंशयादिप्रतिबन्धानुपपत्तेश्च । अन्यथा संशयोच्छेदप्रसङ्गात् ।

यदुक्तं—सर्वस्य स्वरूपं सर्वव्यावृत्ततया न अनुभूयतेति चेत् किमहमन्यो वा इति संशय स्यादिति तन्न रुचिरम् । इष्टापत्त्या समाधानसंभवात् इति चेन्न, अप्रामाणिकाङ्गीकारस्य प्रेक्षावतामनुचितत्वात् । घटादिरूपवस्तुदर्शनेन तत्साक्षात्कारित्वेन स्वस्य प्रत्यक्षत एव सिद्धत्वेन तस्मात् दृष्टात् घटादेः द्रष्टुः स्वस्य च भेदनिश्चय एव भवतीति तादृश संशयः अप्रसिद्ध । न च सर्वव्यावृत्त सर्वस्य स्वरूपं सर्वैरनुभूयते चेत् सर्वस्य सर्वज्ञता स्यात् प्रतियोगिज्ञानस्य व्यावृत्तिज्ञाने कारणत्वेन सर्वव्यावृत्तिज्ञाने सर्वज्ञतायाः दुर्वारत्वात् इति वाच्यम् सामान्यतः सर्वव्यावृत्त्यनुभवे हि प्रतियोगिभूतस्य सर्वस्यापि सामान्यत एव ज्ञानं कारणं न तु विशेषत. । सामान्यतः सर्वज्ञानं च प्राणिमात्रसुलभम् । अन्यथा सर्वोपसंहारवती व्याप्ति अगतिका स्यात् । सर्वशब्दप्रयोगश्च अनुपपन्नः स्यात् । सर्वज्ञानं नास्तीति निषेधोऽपि कर्तुं न शक्येत । 'सर्वं खल्विदं ब्रह्म' इति वाक्यात् शाब्दबोधोऽपि न स्यात् । इदमत्र तत्त्वम् । यदा विशिष्य यत्प्रतियोगि विषयकं ज्ञानं जननीयं तदा विशिष्य तज्ज्ञानमपेक्ष्यते ।

यदुक्तं भेदो वस्तुस्वरुपं वस्तुप्रतीतावेव प्रतीयमानत्वात् इति तदयुक्तम् । तथात्वे सन्देहाभावप्रसङ्गात् । धर्मिज्ञानस्य संशयादिहेतुत्वात् तज्ज्ञानेनैव तदभिन्नस्य भेदस्यापि ग्रहणात् । भेदज्ञानस्य संशयादि विरोधित्वात् इति चेन्न संशयादेरन्यथोपपादनात् । तथा हि एक एव खलु एकस्य भेदः । अनेकत्वे प्रमाणाभावात् । न च निरूपकभेदेन निरूप्यभेदस्याप्यनेकत्वमेवेति वाच्यम् । असंख्यविषयनिरूप्यस्यापि ईश्वरज्ञानस्य एकत्वदर्शनात् । स च भेदो वस्तुप्रतीतौ प्रतीयते एव । तत्र च भेदे घटप्रतियोगिकत्वं पटप्रतियोगिकत्वमित्यादयोऽनन्ता धर्माः सन्त्येव । तत्र भेदनिष्ठो यत्प्रतियोगिकत्वादिधर्मः सादृश्यादिवशान्न प्रतीयते तत्र संशयादिकमुत्पद्यते इति न तत्रापि भेदस्य अप्रतीतिः । अतः संशयादेरन्यथोपपत्तेर्न तदर्थं धर्मिप्रतीतौ भेदाप्रतीतिरङ्गीकार्या यया भेदस्य अस्वरूपत्वमनुमीयेत । ननु संशयादिस्थलेऽपि पदार्थस्वरूपं कुतश्चित् व्यावृत्तमेव प्रतीयते इति कुतोऽङ्गीकार्यमिति चेन्न तदनङ्गीकारे इदं सर्वं भवति न वा इत्येव संशयःस्यात् न तु स्थाणुर्वा पुरुषो वेति । समानधर्मदर्शनादिरूपसामग्रीसद्भावात् व्यावृत्तिज्ञानरूपप्रतिबन्धकाभावाच्च ।

ननु तथापि भेदः न वस्तुस्वरूपम् । अस्य भेद इति विशेष्यत्वेन प्रतीयमानत्वात् । यो यद्विशेष्यतया प्रतीयते नासौ तत्स्वरूपम् । यथा कम्बलो ब्राह्मणस्य इत्यत्र कम्बलः इति चेन्न घटस्य स्वरूपमित्यत्र व्यभिचारात् । घटस्य स्वरूपं घटविशेष्यतया प्रतीयमानमपि न ततोन्यत् । यदि तत्र भेदातिरिक्तं किमपि विशेष्यप्रतीतिनिमित्तमुच्यते तर्हि अत्रापि विशेषोऽस्तीत्यन्यथासिद्धिः । यदि वा तत्र व्यपदेशमात्रं न प्रतीतिरित्यभिधीयते तदा सममत्रापि । तथा च स्वरूपासिद्धो हेतुः । अनयैव दिशा पटो भिन्न इति विशेषणतया प्रतीतिरपि न भेदस्य वस्तुस्वरूपत्वाभावसाधिका विशेषेण अन्यथा सिद्धत्वात् ।

ननु भेदस्य धर्मिस्वरुपत्वेन धर्मिज्ञानापेक्षया अन्योन्याश्रयाभावेऽपि प्रतियोगिज्ञानापेक्षया अन्योन्याश्रयस्तु स्यादेव । तथाहि प्रतियोगिभूतसर्वस्य ज्ञाने हि पुरोवर्तिवस्तुनिष्ठव्यावृत्तिज्ञानं, प्रति योगिज्ञानस्य तत्र कारणत्वात् । सर्वस्य प्रतियोगित्वज्ञानं च भेदज्ञाने सति, धर्मिणः सकाशाद्भेदेन प्रतीतस्यैव सर्वस्य प्रतियोगित्वात् । अप्रतीतभेदस्यैव प्रतियोगित्वे तु स्वस्यापि तत्प्रसङ्गात् । न च धर्मिस्वरूपत्वमिवप्रतियोगिस्वरूपत्वमपि भेदस्याङ्गीक्रियते, तथासति अद्वैतप्रसङ्गात् इति चेन्न यदा वस्तु अन्यस्मात् व्यावृत्तमित्यनुभूयते तदा प्रतियोगिभूतमन्यदपि वस्तुना

सहैवानुभूयते । एवं च प्रतियोगिना सहैव व्यावृत्तिप्रतीतेः । प्रतीतिद्वयाभावान्नान्योन्याश्रयः ।

ननु घटादिज्ञानं चाक्षुषं, प्रतियोगिभूतसर्वपदार्थज्ञानं च साक्षिरूपम्, तथा च कथं साक्षिसिद्धेन सर्वपदार्थेन सह घटादिप्रतीतिरिति चेन्न यथा अरतीति वर्तमान. कालः वस्तुना सहैव अनुभूयते एवमन्यस्माद् व्यावृत्तमित्यत्र अन्यदपि सामान्यत सहैवानुभूयते । कालस्य साक्षिसिद्धत्वमन्यत्र उपपादितमनुसन्धेयम् । यथोक्तमनुव्याख्याने **तदेतदिति सर्वं च दृश्यं वा स्मृतिगोचरम् साक्षिसिद्धेन कालेव खचित ह्येव वर्तते । इति** ।

ननु एवं सामान्येन भेदप्रतीतावन्योन्याश्रयः नास्तीति अभ्युपगम्यते, तथापि विशेषतः भेदप्रतीतावन्योन्याश्रयः स्यादेव । सा हि घटात् पटो भिन्न इत्युत्पद्येत । तथा च पटाद्घटस्य भेदप्रतीतौ घटात् पटस्य भेदप्रतीतिः । धर्मिण सकाशाद् भेदेन प्रतीतस्यैव प्रतियोगित्वात् । अप्रतीतभेदस्यैव प्रतियोगित्वे तु स्वस्यापि तत्प्रसङ्गः इति चेत् न प्रत्येतव्यभेदाधिकरणभूतपटप्रतियोगिकभेदवत्वेन ज्ञातस्य न प्रतियोगित्वं येन उक्तरीत्या अन्योन्याश्रय स्यात् किंतु यथा गोर्गवयसादृश्यज्ञानाभावेऽपि वस्तुतः गवयसादृश्यवतो गोत्वादिना प्रतीतिमात्रेण गवयविसदृशत्वेन अप्रतीतिमात्रेण वा गवयगतसादृश्यप्रतियोगित्वम्, एवमिहापि वस्तुतः प्रत्येतव्यभेदाधिकरणप्रातियोगिकभेदवतो घटादेर्घटत्वादिना प्रतीतिमात्रेण प्रतियोगित्वोपपत्तेः ।

ननु घटत्वादिना प्रतीतिमात्रेण प्रातियोगित्वे पटाभिन्नतया ज्ञातस्यापि घटादेः पटधर्मिकभेदप्रातियोगित्वं स्यादिति चेन्न तदा घटत्वादिना ज्ञानमोषात् । अथवा पटैक्येन अज्ञातस्य घटादेः घटत्वादिना ज्ञानमात्रेण प्रतियोगित्वमुपपद्यते इत्यदोष । अन्यथा जीवस्य ब्रह्मणा अभेदे ज्ञाते ब्रह्मणा जीवाभेदधीरिति तवाप्यन्ययोन्याश्रयः दुर्वारः स्यात् ।

ननु तथापि भेदस्य धर्मिस्वरूपत्वं न युज्यते । भेदधार्मिणो सापेक्षत्वनिरपेक्षत्वलक्षणविरुद्धधर्माधिकरणत्वात् । विरुद्धधर्माधिकरणयोरभेदासंभवात् इति चेन्न त्वयापि सापेक्षत्वनिरपेक्षत्वरूपविरुद्धधर्माधिकरणयोः अभेदस्य अङ्गीकर्तव्यात् । तथा हि ब्रह्म नास्ति असदिति वा केनचिदुक्ते ब्रह्म अस्ति सदिति वा त्वया साधनीयम् । तथा च ब्रह्मसत्ता अस्तीत्यादिवर्तमानकालसा-

पेक्षतया अनुभूयते । तथा च ब्रह्मसत्तायाः कालसापेक्षत्वेऽपि तन्निरपेक्षब्रह्मैक्यं त्वया अङ्गीक्रियते एव । सत्तायाः ब्रह्मान्यत्वे अद्वैतभङ्गप्रसङ्गस्य वज्रलेपायितत्वात् । मिथ्यात्वे अस्तिब्रह्मेतिचेद्वेद इत्यादिश्रुतीनामतत्त्वावेदकत्वप्रसङ्गात् । ननु सत्ता न सापेक्षा इति चेन्न विद्यमानता हि वर्तमानकालम्बन्धः सम्बन्धस्य च सम्बन्धि-सापेक्षत्त्वमनुभवसाक्षिकम् ।

किञ्च भेद धार्मिस्वरूपयोरभेदे सत्यपि सापेक्षत्वाविक स युज्यते एव । सविशेषाभेदाङ्गीकारात् । यथोक्तं टीकाकार । ‘ अधिकश्चात्र सविशेषभेदाङ्गी-कारेण परिहार ’ इति

ननु तथापि न “ भेदस्य धार्मिस्वरूपत्वं युज्यते । एकस्यैव भेदस्य सयोग-वत् भिन्नाविमौ भिन्ना इमे इत्यनेकाश्रितत्वप्रतीतेः । तथा च भेदस्य धर्मिस्वरुपत्वे घटपटयोरपि भेदं प्रति धर्मित्वात् घटाभिन्नभेदाभिन्नत्वेन पटस्यापि घटाभिन्नत्वं स्यात् इति चेन्न एकस्यैव भेदस्य अनेकाश्रितत्वानङ्गीकारात् । चैत्रमैत्रौ भिन्नौ इत्यत्र चैत्राद् मैत्रस्य भेदः, मैत्रात् चैत्रस्य भेदः इति भेदद्वयमेव प्रतीयते । मुख-चन्द्रौ आल्हादकौ इत्यत्र यथा आल्हादकत्वद्वयं प्रतीयते एवमेव अत्रापि भेदद्वयं प्रतीयते इत्यवश्यं वक्तव्यम् । अनयोर्भेद इत्यत्रापि घटपटादिधर्मिकं भेदद्वयमेव प्रतीयते घटपटयो रूपमितिवत् । इमौ संयुक्तौ अनयोः संयोग. इत्यत्राप्येवमेव-एकवचनव्यवहारस्तु विप्राणां भोजनमितिवत् समुदायापेक्षया उपपन्नम् । किंच भेदो हि अन्योन्याभावः । तस्य च अनेकाश्रितत्वमसंभवि । ननु तथापि पृथक्त्व-रूपो भेदः भवत्येव अनेकाश्रित इति चेन्न घटात् पटःपृथक् इति प्रतीतस्य पृथ-क्त्वस्य परेणापि द्विष्ठत्वानङ्गीकारात् ।

ननु प्रतियोगिनिरूप्यभेदस्य वस्तुस्वरूपत्वे प्रतियोगिनोऽपि वस्तुस्वरूपत्वं स्यात् । निरूपितस्य यद् भवति तन्निरूपकस्यापि भवति इतिन्यायात् इति चेन्न प्रतियोगिन उपलक्षणमात्रत्वेन धर्मिण्यन्तर्भावाभावात् अन्यथा अज्ञाननिवृत्तेः पुरुषार्थ-त्वेन अज्ञानस्यापि तदापत्तेः । किंच निरूपितस्य यद्भवति तन्निरूपकस्यापि भवति इति नियमो नाङ्गीकर्तुं शक्य. । लम्बकर्णमानयेत्यादौ तथा दृष्टमिति चेन्न चित्रगुमानय इत्यादौ अन्यथाऽपि दृष्टत्वात् ।

ननु तथापि न भेदस्य धर्मिस्वरूपत्वम् । तथात्वे घटभेदशब्दयोः पर्याय-त्वापत्त्या घटो भिन्न इत्यादिसहप्रयोगाभावप्रसङ्गात् इति चेन्न अभिन्नानामपि

तथा व्यवहारदर्शनात् । यथा ज्ञानानन्दैक्यानां ब्रह्मस्वरूपत्वेऽपि ब्रह्मज्ञानानन्दाद्वितीय शब्दानामपर्यायत्वेन विज्ञानमानन्दं ब्रह्म एकमेवाद्वितीयमित्यादिव्यवहारविशेषस्तथाभेदस्य घटस्वरूपत्वेऽपि घटभेदशब्दयोरपर्यायत्वेन व्यवहारः उपपद्यते । वस्तुतस्तु अस्मन्मते सविशेषाभेदाङ्गीकारेण घटभेदशब्दयोरपर्यायत्वं युज्यते । न चैव त्वया वक्तुं शक्यते । विशेषानङ्गीकारात् । ननु विज्ञानानन्दादिशब्दाना ज्ञानत्वादिविशिष्टवाचकत्वात् तद्वाच्याना भेदोऽस्त्येव । अतः न तेषां पर्यायत्वम् । न चैवं निर्भेदार्थनिष्ठत्वरूपाखण्डार्थत्वहानिः । लक्षणया ब्रह्मस्वरूपपरत्वाङ्गीकारात् । ततश्च विशेषाङ्गीकारोऽस्माकमनावश्यकः इति चेन्न अनेकशब्दप्रयोगवैय्यर्थ्यात् । किच अत्र अद्वैतवादी प्रष्टव्यः । कि विज्ञानशब्देन लक्षितं ब्रह्मैव आनन्दशब्देन लक्ष्यते तदतिरिक्तं वा । नाद्यः । आनन्दशब्दवैयर्थ्यात् । न द्वितीय. । अखण्डार्थत्वहानेः । न हि धर्मधर्मिभेदासहमखण्डत्वं धर्मिभेदसहम् । ननु विज्ञानशब्देन लक्षितस्यैव आनन्दशब्देन लक्षितत्वेऽपि अज्ञानानन्दादिव्यावृत्तिरूपभिन्नभिन्नप्रयोजनसद्भावान्न पदान्तरवैयर्थ्यमिति चेन्न विज्ञानानन्दादिशब्देन लक्ष्यार्थे ब्रह्मणि ज्ञानत्वादिधर्मानवबोधने अज्ञानादिव्यावृत्तिबोधनस्यापि कर्तुमशक्यत्वात् । तस्मादेकधैवानुद्रष्टव्यमित्यादिश्रुतिविरोधपरिहाराय विज्ञानानन्दैक्याना यथा ब्रह्मणा अत्यन्ताभेदोऽङ्गीक्रियते एवं विज्ञानादिशब्दाना पुनरुक्ते वैयर्थ्यस्य वा परिहाराय विशेषोप्यङ्गीकार्य एव ।

ननु तथापि भेदस्य धर्मिस्वरूपत्वे घट एवास्ति न भेदः भेद एवास्ति न घट इति वा प्राप्त्या एकतरविशेषः स्यात् इति चेन्न त्वयाऽपि ज्ञानानन्दैक्याना परस्परं ब्रह्मणा च अभेदाङ्गीकारात् ब्रह्म वा स्यात्, ज्ञानं वा स्यादित्यन्यतरपरिशेषापादनंमभवात् ।

ननु ज्ञानानन्दादेः परस्परं ब्रह्मणा च अभिन्नत्वे एकतरपरिशेषस्यादिति कोऽर्थः । किं वस्तुभेदो न स्यात् किंतु एकमेवस्यादिति किंवा ज्ञानमिति वा ब्रह्मेति वा व्यवहार स्यात् न तु उभयथेति यद्वा एतयोर्मध्ये एकस्यैव अर्थक्रिया नोभयस्येति वा अथवा द्विवचनप्रयोगो न स्यादिति वा । नाद्यः । इष्टापत्तेः । न द्वितीयः । प्रवृत्तिनिमित्तभेदेन तदुपपत्तेः । न तृतीयः । यथा एकस्यैव दीपस्य शुक्लभास्वररूपवत्वेन प्रकाशकत्वं उष्णस्पर्शवत्वेन दाहकत्वमिति उभयार्थ-

क्रिया उपपद्यते तथा ब्रह्मणः ज्ञानरूपत्वेन आनन्दरूपत्वेन च उभयार्थक्रिया उपपद्यते । न चतुर्थे अर्थप्रकाशकत्वनिरुपाधिकेष्टत्वरूपयोः ज्ञानत्वानन्दत्वरूपयोर्विशेषणयोरनेकत्वेन विज्ञानानन्दावित्यादिद्विवचनप्रयोगोपपत्तिरिति चेत्समं प्रकृतेऽपि ।

ननु विदारणरूपस्य भेदस्य घटस्वरूपत्वे घटस्यापि विदारणं स्यात् । तथा अवयवानामपि भेद इति तत्रापि विदारणं भवेदित्यनेन क्रमेण परमाणोरपि भेद इति तत्रापि विदारणापत्त्या सर्वशून्यतापत्तिः इति चेन्न । विदारणरूपो भेद यस्य यत तं ततो विदारयेत् न तु यं कमपि यतः कुतश्चित् । न हि घटस्वरूपस्य भेदस्य घट एव प्रतियोगी येन स्वस्मिन्नपि विदारण स्यात् । किंतु घटादन्य एव । ततो विदारण नानिष्ट तस्य शून्यतानापादकत्वात् । यत्तूक्तं ब्रह्मानन्धाम् अभेदस्येव भेदस्यापि स्वप्रतियोगिकत्वात् घटादिरूपस्य तस्य स्वभेदत्वरूपं स्वविदारकत्व सिद्धमिति तदसारम् ब्रह्मणोऽपि स्वप्रतियोगिकभेदवत्त्वासिद्ध्या अद्वैतवार्तालोपप्रसङ्गात् ।

अपि च विदारकमपि लवित्रादि स्वयं यत्संबन्धि तदेव विदारयति । न तु स्वात्मानम् । करणसाधनत्वमङ्गीकृत्यैव अयं परिहार उक्तः वस्तुतस्तु न भेदो विदारकः किंतु विदारणम् । भेदशब्दस्य भावसाधनत्वाङ्गीकारात् । भिदिर्विदारणे इति धातुव्याख्यानात् । तथा च घटोपि विदारणं स्यात् । न तु घटस्य विदारणम् । न हि विदारणस्य विदारणं युक्तम् । स्ववृत्तिविरोधात् एवं भेदः विदारणरूपः विभागरूपः इत्यङ्गीकृत्यैव इदमुदितम् । वस्तुतस्तु भेदः न विदारणं नापि विभागः किंतु अन्योन्याभावः । यथा भिन्नो घट इत्युक्ते स्फुटित इति प्रतीतिः जायते । भिन्नं गगनं घटादित्युक्ते अन्यदिति प्रतीतिरुद्भवति । प्रकृते च अन्यत्वमेव प्रकृतं न विभागः । तथा च अन्योन्याभावलक्षणस्य भेदस्य वस्तुस्वरूपत्वमस्माभिः समर्थितम् । भवता विदारणापादनेन शून्यताप्रसञ्जनं जात्युत्तरमेव स्यात् । ननु विभागस्य अन्यत्वस्य च विशेषः कुतोऽवगन्तव्य इति चेन्न विदारणार्थो धातुर्विभागगुणवाचकः । वैशेषिकादिभिरपि विभागो गुण इत्यङ्गीक्रियते अन्यता च अन्योन्याभाव इति सुस्पष्टो भेदस्तयोः । गुणादिप्रक्रिया-मननुमन्यमानं मायावादिनं प्रति **अविदारणेऽपि ह्यास्यस्य विभावोष्ठौ तु तस्य च**

इत्यनुव्याख्यानार्थो बाधनीयः। तथा हि द्वैतिभिः पराजितस्य निरुत्तरतां प्रपन्नस्य मायावादिनः तूष्णींभावावस्थायां तदीययोरोष्ठयोः संयुक्तत्वेन विदारणलक्षण-विभागाभावेऽपि अन्योन्याभावलक्षणभेदस्य सत्त्वेनैव भिन्नावोष्ठाविति प्रयोगः संभवति। एवं च यदभावेऽपि यदस्ति तत् ततोऽन्यत् इति न्यायेन भेदः विभागादर्थान्तरमेवेति वक्तव्यम्। एतेन अनेकत्वैकार्थसमवायिनो भेदस्य घटस्वरूपत्वे घटस्यापि अनेकत्वापत्तिः, अनेकत्वाधारत्वापत्तिः, एकत्वाश्रयत्वाभावापत्तिः, तथा तदवयवानामपि भेदः स्वरूपमेवेति सर्वत्राप्यनेकत्वस्यैवापत्त्या तद्विरुद्धमेकत्वं क्वापि न स्यात् इत्याकारिकाऽपत्ति.। ततश्चैव अनेकत्वस्य एकत्वसमाहाररूपत्वात् तत्कार्यत्वाद्वा एकत्वाभावप्रयोज्या अनेकत्वाभावापत्तिः। ततश्च संख्यारहितस्य द्रव्यस्य शून्यतापत्तिश्च निरस्ता वेदितव्या।

एव तर्हि घटस्य एकत्वं स्यान्नत्वनेकत्वम्। तथा हि भेदघटयोरभिन्नत्वेन भेदो यादृशधर्मविशिष्टः घटेनापि तादृशधर्मविशिष्टेन भाव्यम्। अनेकनिष्ठधर्मत्वं भेदस्य वर्तते। घटस्यापि अनेककपालादिनिष्ठधर्मत्वं स्यात्। न त्वनेकत्वमनेकत्वाधिकरणीभूतधर्मित्वं स्यात्। अस्तु वा घटस्य अनेकत्वाधारत्वम्, तथापि कुतो नैकत्वम्। न हि एकत्वानेकत्वयो. स्वरूपेण विरोधः वर्तते। एकस्मिन्नेव घटे स्वापेक्षया एकत्वमन्यापेक्षया अनेकत्वं दृष्टचरम्। किंतु यद-पेक्षया अनेकत्वं तदपेक्षया एव यदि एकत्वं स्यात् तदा विरोधः स्यात्। तत्र घटस्य अन्यस्मात्—प्रतियोगिन एव भेद इति तदपेक्षयैव अनेकत्वं स्वापेक्षया तु एकत्वमेवेति को विरोध.। अन्यच्च एकत्वानेकत्वयोरभावेऽपि वस्तुनः कुतः शून्यत्वम्। वैशेषिकादीना गुणादिवत् मायावादिना ब्रह्मवदगुणस्यापि सत्त्वोपपत्तेः शून्यवादापत्ति न संभवति। अन्यथा गुणादीनां ब्रह्मणश्च शून्यतापत्तिर्दुवारा स्यात्। एवं भेदस्य धर्मिस्वरूपत्वे बाधकं किञ्चिदपि नास्ति, सन्ति च साधकानि बहूनि।

भेदस्य धर्मिस्वरूपत्वे आगमोऽपि भवति। तथा हि "**सत्यं भेदस्तु वस्तूनां स्वरूप नात्र संशयः**" '**भेदस्तु सर्ववस्तूनां स्वरूपं नैजमव्ययम्**' इत्यादिः। ननु तथापि भेदस्य धर्मिस्वरूपत्वं न युक्तम्। अन्योन्याभावरूपस्य तस्य नित्यत्वमवश्यं स्वीकार्यम्। घटादेश्च धर्मिणः अनित्यत्वं निश्चितम्। तथा च नित्यस्य भेदस्य कथमनित्यघटादिस्वरूपत्वमिति चेत् इदमत्र ज्ञातव्यम्। अस्मिन् विषये स्थूलसूक्ष्मभेदेन द्वयी दृष्टिः संभवति। स्थूला दृष्टिरित्थम्—भेदो नाम अन्योन्याभावः।

स च अन्योन्यतादात्म्यापत्त्यैव निवर्तनीयः। प्रतियोग्यापत्तेरेव अभावविपत्तित्वस्य प्रागभावे दृष्टत्वात्। न च घटपटादीना कदाप्यन्योन्यतादात्म्यं भवितुमर्हति। अतः अनित्यानामपि भेद. नित्य एवेति वक्तव्यम्। इदमुक्तं भवति। अत्यन्तासत्कार्यवादो वा अत्यन्तसत्कार्यवादो वा न सद्भिरादृतः। किंतु सदसत्कार्यवाद एव। प्राक् कारकव्यापारादकार्यरूपस्य उपादानस्य कार्यरूपतापत्तिः जनिरित्यङ्गीकारात्। तत. परिदृश्यमानविशेषरूपापगमेन कार्यस्य उपादानरूपेण पर्यवसानमेव विनाश इत्युच्यते। एवं च घटनाशेऽपि तन्निष्ठो भेदः तत्कारणरूपेण स्थातुमर्हतीति न घटनाशेऽपि तन्नाशः इति। एतां दृष्टिमवलम्ब्यैव सन्न्यायरत्नावल्यामुक्तं पद्मनाभतीर्थश्रीचरणैरपि "विनाशिनोऽपि घटादेः धर्मरूपभेदः परवाद्यभ्युपगतघटत्वादिजातिवन्नित्योऽवगन्तव्यः। वस्त्वन्तरतापत्त्यभावात् कालत्रयेऽपि" इति।

सूक्ष्मां दृष्टिमवलम्ब्य तु अनित्यस्वरूपभेदस्यापि अनित्यत्वमेव अङ्गीक्रियते। ननु एवं 'पञ्च भेदा इमे नित्या' इत्यादिप्रमाणविरोधः। जीवेश्वरयोः परस्परं जीवानां च भेदस्य नित्यत्वेऽपि जडधर्मिकाणां जीवेश्वरप्रतियोगिकानामनित्यत्वादिति चेन्न नित्ये जडे प्रकृत्यादौ धर्मिणि जीवेश्वरभेदस्य जडान्तरभेदस्य च नित्यत्वोपपत्तेः। उक्तं च सुधायां "नित्ये च त्रयाणां सिद्धि"रिति। ननु घटनाशानन्तरं घटभेदस्यापि नाश इत्यङ्गीकारे घटस्य पटतादात्म्यं स्यात्। तादात्म्यं खलु अन्योन्याभावप्रतियोगि। प्रतियोगिन एव अभावध्वंसरूपत्वं घटप्रागभावध्वंसरूपे घटे दृष्टमिति चेन्न घटादिनाशे तत्स्वरूपस्य भेदस्य नाशो भवत्येव। तथापि न नष्टघटस्य पटतादात्म्यं संपद्यते। घटे विनष्टेऽपि पटस्य अविनष्टत्वात्। विनष्टात् घटात् पटे भेदस्य अविनाशात्। घटधर्मिकपटप्रतियोगिकभेदवत् पटधर्मिकघटप्रतियोगिकभेदस्यापि घटपटतादात्म्यविरोधित्वात्। तस्य च घटनाशेऽपि सत्त्वान्न पटतादात्म्यं कदापि आपद्यते। न च प्रतियोगिनाशे कथं भेदानाश इति वाच्यम्। प्रतियोगिनः उपलक्षणमात्रत्वेन तन्नाशेऽपि धर्मिस्वरूपभूतभेदानाशोपपत्तेः। ननु एवं धर्मिप्रतियोगिनोरुभयोरपि नाशे तदात्मकभेदद्वयस्यापि विनाशात् धर्मिप्रतियोगितादात्म्यं स्यात् इति चेत् न यथा घटध्वंसस्यापि घटवत् घटप्रागभावविरोधित्वमेवं भेदवत् भेदध्वंसस्यापि धर्मिप्रतियोगितादात्म्यविरोधित्वमस्ति इत्यङ्गीकारात्। वस्तुतस्तु घटपटोभयनाशे तत्स्वरुपभूतभेदस्यापि नाशात् घटपटोभयतादात्म्यमापादयितुं न शक्यते। धर्मिणोरेव अभावात्। अन्यथा

वृक्षकप्युभयनाशेन तत्संयोगनाशे तद्विभागोऽपि आपादयितुं शक्येत । न चेष्टापत्तिरिति वाच्यम् । धर्मिणोरेव अभावेन तद्विभागकल्पनायाः असंभवात् ।

इदमुक्तं भवति । सदसत्कार्यवादिनामस्माकं मते विनाशो नाम परिदृश्यमान-विशेषरूपापगमेन उपादानमात्रतया अवस्थानम् । तथा च नष्टस्य घटादेर्भेदोऽपि प्रध्वस्तघटस्वरूपभूतः उपादानरूपेण विद्यते एव । अस्माभिरपि विशेषाकार-नाशे सति विशेषाकारस्वरूपभूतभेदविनाशस्य अङ्गीकारात् । घटवत् भेदस्यापि उपादानरूपेण सत्त्वाङ्गीकाराच्च । यथोक्तमनुव्याख्याने 'तस्मात् प्रध्वस्तभेदादि सदित्येवावगम्यते' इति ।

ननु अथापि भेदस्य न धर्मिस्वरूपत्वम् । घटादिप्रतियोगिकान्योन्या-भावस्य शशशृङ्गादावपि वक्तव्यत्वात् । न च तस्यापि धर्मिस्वरूपत्वं युक्तम् । धर्मिण एव अभावात् । न च स भेदः धर्मिभिन्न इति वाच्यम् । पूर्वोक्तिविरोधापत्तेः इति चेन्न यथा नष्टघटधार्मिको भेदो नास्ति तथा असच्छशशृङ्गादिधार्मिको भेदोऽपि नास्ति । ननु एवं शशशृङ्गादौ घटादिप्रतियोगिकभेदाभावे शशशृङ्गादेर्घटादिता-दात्म्यं स्यात् तदन्योन्याभावाभावे तत्तादात्म्यावश्यंभावात् इति चेन्न । घटादि प्रतियोगिकभेदस्य शशशृङ्गादावभावेऽपि न शशशृङ्गादेर्घटादितादात्म्यमापद्यते सत्प्रतियोगिकभेदस्य असति अभावेऽपि असत्प्रतियोगिकभेदस्य सति सत्त्वान्नतयो-स्तादात्म्यमिति ज्ञेयम् । ननु एवं तर्हि शशशृङ्गादेर्नृशृङ्गस्य भेदोऽस्ति न वा । नास्तीत्येव सिद्धान्तात् । यथा घटपटनाशानन्तरं घटपटभेदो नास्ति एवं नृशृङ्ग-शशशृङ्गयोर्भेदो नास्ति । सत्यप्येवं नृशृङ्गशशशृङ्गयोस्तादात्म्यापत्तिर्नास्ति । सति धर्मिणि भेदाभावः तादात्म्यापत्तौ प्रयोजकः । प्रकृते धर्मिणोरसत्त्वादेव नान्योन्य-तादात्म्यापत्तिः । अत एव सन् धर्मी असतः प्रतियोगिनः भिद्यते इति समर्थितम् । अन्यथा धर्मिणः सत्त्वात् तत्र असत्प्रतियोगिकभेदाभावे सतः असत्तादात्म्यापत्ति-र्दुर्वारा स्यात् । किंच शशशृङ्गनृशृङ्गयोर्भेदाभावे तादात्म्यापत्ति· कुत इति वक्तव्यम् परस्परविरुद्धयोरन्यतरनिषेधस्य अन्यतरविधिनान्तरीयकत्वात् इति चेत् एवं तर्हि गगनकुसुमस्य नीलत्वाद्यभावे तद्विरुद्धरूपवत्त्वापत्तेः । तथा च परस्परविरुद्धयो-रितिन्यायः सति एव धर्मिणि प्रसरति नासति धर्मिणि । एवं च शशशृङ्गं नृशृङ्गं नेति प्रतीतिरपि भेदाभावेऽपि तादात्म्याभावेनैव उपपाद्यते ।

यदुक्तमनन्तकृष्णशास्त्रिभिः उपोद्घाते सप्तमे पत्रे

" भेदस्य धर्मिस्वरूपत्वेऽपि तु स्वरूपमात्रयोः भेदाभेदयोः कथं विरोधः ? घटपटादिस्वरूपाणां सर्वेषां प्रतियोगिनिरपेक्षभेदस्वरूपत्व ऐक्यात् कथं घटपटादिभेदानुभवः ? तत्तदर्थक्रियामात्रकारित्वं वा तस्य ? ' इद रजत ' मित्यत्र स्वरूपमात्रस्य भेदत्वे इदंज्ञानस्यैव नेदं रजतमितिभेदज्ञानरूपत्वात् इदंरजतयोः कथं सामानाधिकरण्यम् ? बाधज्ञानरूपस्य तस्य कथं वा भ्रमत्वम् ? सदसत्ख्यात्यादिपक्षेषु कुत्रापि कथं वा रजतार्थिनामिदङ्काराभिमुखप्रवृत्तेर्निर्वाहः । कथं वा स्थाणुर्वा पुरुषो वेति संशयोऽपि " इति ।

यदप्युक्तं न्यायसुधापरीक्षाया ४१३ तमे च पत्रे—

" वस्तुतस्तु भेदस्य धर्मिस्वरूपत्वं दुर्वचम् । तस्य प्रतियोग्यनुयोगिसापेक्षत्वान्नियमेन तन्निरपेक्षधर्मिस्वरूपताया अयोगात् । अन्यथा धर्मिस्वरूपज्ञानादेव तदितरभेदज्ञाने शुक्तिज्ञानदशायां रजतभेदस्यापि गृहीतत्वात् रजतभेदग्रहे सति रजतभेदाग्रहरूपभ्रमकारणाभावात् शुक्त्यादौ रजतभ्रमनिर्वाहायोग " इति तन्निरस्तम् । तथा हि ब्रह्मातिरिक्तं न किञ्चिदस्ति इत्यभ्युपगच्छता अद्वैतिना भेदाभेदयोः ब्रह्मस्वरूपत्वमवश्यमङ्गीकर्तव्यमेव । तेन ब्रह्मण्यपि भेदः अङ्गीकृतः । ' सत्यं ज्ञानमनन्तं ब्रह्म ' इत्यत्र असत्यव्यावृत्तत्वादयो धर्माः प्रतिपाद्यन्ते इति तत्सिद्धान्तात् । व्यावृत्तत्वं भेद इत्यनर्थान्तरम् । तथा च ब्रह्मस्वरूपभूतयोः भेदाभेदयोः विरोधः कथमिति पृष्टे यादृशमुत्तरं दीयते तेन तादृशमेवात्रापि अनुसन्धीयताम् । तद्ग्रन्थस्थस्य धर्मिस्वरूपत्वेऽपि इत्यत्रत्यस्य ' अपि ' शब्दस्य कृत्यं चिन्त्यम् । घटपटादिस्वरूपाणां सर्वेषां प्रतियोगिनिरपेक्षभेदस्वरूपत्व ऐक्यात् कथं घटपटादिभेदानुभवः ? तत्तदर्थक्रियामात्रकारित्वं वा तस्य ? इत्यस्य उत्तरं तु घटपटादिस्वरूपाणां सर्वेषां प्रतियोगिनिरपेक्षब्रह्मस्वरूपत्व ऐक्यप्रसङ्गेन कथं घटपटादिभेदानुभवः ? सर्वस्य ब्रह्मस्वरूपत्वे कथं च घटपटादीनां तत्तदर्थक्रियामात्रकारित्वम् ? अत्र ' तस्य ' इति एकवचनप्रयोगः असाधुः । किंच इदं रजतमिति भ्रमः अद्वैतिमतेऽपि कथं संभवति इति प्रश्ने कृते किमुत्तरम् ? ननु अस्माभिः भेदस्य धर्मिस्वरूपत्वं नाङ्गीक्रियते इति सर्वमुपपद्यते इति चेन्न भेदस्य धर्मिस्वरूपत्वं कामं माऽङ्गीक्रियताम् । अपि तु शुक्तित्वस्य शुक्तिगतयावद्द्रव्यभाविधर्माणां च धर्मिस्वरूपत्वमवश्यमङ्गीकार्यं प्रेक्षावता । तथा च शुक्तौ शुक्तित्वस्य ज्ञाने कथ ' मिदं रजत ' मिति भ्रमः संभवेत् ? शुक्तौ ज्ञातायामपि शुक्तित्वं न ज्ञायते

इति चेत् समं प्रकृतेऽपि । शुक्तौ ज्ञातायामपि तत्स्वरूपभूतभेदस्य अज्ञानात् रजतारोपः संभवतीति गृहाण । एतेनैव रजतार्थिनामिदङ्काराभिमुखप्रवृत्तिः स्थाणुर्वा पुरुषो वेति संशयः इदंरजतयोः सामानाधिकरण्यं चेत्यादीनि व्याख्यातानि भवन्ति ।

इयांस्तु विशेषः घटपटादिस्वरूपाणां सर्वेषां प्रतियोगिनिरपेक्षब्रह्मस्वरूपत्वेन ऐक्येऽपि घटपटादिभेदानुभवः अप्रामाणिक्या सदसद्विलक्षणया अविद्यया उपपाद्यते अद्वैतिना । अस्माभिस्तु अनुभवसिद्धत्वात् अवश्यं सर्वैः शिरसा धार्येण विशेषेण उपपाद्यते इति ।

एतेन अद्वैततत्त्वसुधायामुक्तं 'भेदाभावे भेदकार्यकारित्वस्य बाधात् विशेषे अविद्यातिरिक्ते न किमपि प्रमाणम्" इति निरस्तम् ।

ननु नीलमुत्पलमित्यादौ नीलरूपधर्मस्य उत्पलरूपधर्मिणश्च यदि अभेदोऽङ्गीक्रियते तर्हि नीलस्य उत्पलसंबन्धितया या प्रतीतिः प्रसिद्धा सा न स्यात् । न हि कदापि उत्पलमुत्पलसंबन्धितया प्रतीयते । किं च अनेकधर्मवतो धर्मिणः स्वगतानेकधर्माभिन्नत्वात् अनेकत्वं स्यात् । अनेकधर्माणां स्वाश्रयैकधर्म्यभिन्नत्वात् एकत्वं च स्यात् । धर्मधर्म्यादिवाचकानां पर्यायत्वं च स्यात् इति चेन्न भेदप्रतिनिधिभूतविशेषाङ्गीकारेण सर्वक्षुद्रोपद्रवाणां दूरीकरणात् ।

ननु अयं विशेषः विशेषिणा भिन्नो वा अभिन्नो वा । विशेषविशेषिणोर्भेदे अपसिद्धान्तः । अभेदे पुनर्व्यवहाराद्यनुपपत्तिः । विशेषान्तरस्वीकारे अनवस्था इति चेन्न विशेषविशेषिणोरभेदाङ्गीकारात् । एक एव विशेषः विशेषान्तरमन्तरेण विशेषतद्भावं गमयति इत्यङ्गीकाराच्च न व्यवहाराद्यनुपपत्तिः नानवस्था च । इदमत्र तत्त्वम् । विशेषो नाम निर्भेदत्वेन प्रमितेषु अपि ईश्वरजीवजडेषु तदीयरूपगुणक्रियादिधर्मेषु च अवान्तरबहुत्वादिभेदकार्यघटको भेदप्रतिनिधिः शक्तिविशेषः । तदुक्तं बृहद्भाष्ये "**एकस्मिन्नेव शब्दानां यस्तु नानास्वरूपिणाम् । प्रयोजकत्वहेतुः स्यात्स विशेषः प्रकीर्तितः**" इति । ननु निर्भेदवस्तुनि कथं विशेषस्याप्यवस्थानं संभवति इति चेत् ईश्वराचिन्त्यशक्त्यैवेति वदामः । तत्तत्पदार्थस्वभावा ईश्वराचिन्त्यशक्त्या नियमिताः इति अवश्यमङ्गीकार्यम् । तादृशशक्त्यनङ्गीकारे न कापि पदार्थव्यवस्था उपपादयितुं शक्या स्यात् । बहुविप्लवापत्तिश्च स्यात् । तथा हि धर्मधर्मिणोरभेदावगाहिप्रत्यक्षादिप्रमाणैः अत्यन्ताभेदो ज्ञायते ।

घटः शुक्लः इति प्रतीतिस्तावद्वर्तते । सा प्रतीतिः सबन्धमात्रनिबन्धना इति वक्तुं न शक्यते । कुण्डबदरादिप्रतीतितः विलक्षणत्वात् । एवं घटरूपयोरभेदेऽपि घटस्य रूपमित्यादि व्यवहारो विशेषबलेन युज्यते । तथैव विशेषविशेषिणोरभेदेऽपि विशेषस्य स्वनिर्वाहकतया घटतद्रूपयोर्विशेष इति भेदव्यवहारोऽपि युज्यते। ननु घटस्य नैल्यमिति प्रतीतिव्यवहारबलेन घटनैल्ययोर्भेदमङ्गीकृत्य घटो नीलः इति सामानाधिकरण्यव्यवहारसिद्ध्यर्थं समवायादिकमङ्गीकृत्य अनवस्थादिदोषपरिहारार्थं च अङ्गीकृतस्य समवायस्य यदि स्वनिर्वाहकत्वं स्वीकृत्यापि सर्वमुपपादयितुं शक्यते चेत्, किं विशेषाङ्गीकारेण । अथवा विशेषसमवायपक्षयोः कल्पनासाम्यात् न विशेषावलम्बेन समवायानिरासो युक्तः । तथा हि भवाद्भिः अभेदमभ्युपगम्य भेदव्यवहारसिद्धये विशेषं परिकल्प्य अनवस्थादिदोषपरिहारार्थं तस्य स्वनिर्वाहकता स्वीकृता। नैयायिकैस्तु भेदमङ्गीकृत्य अभेदव्यवहारसिद्धये समवायरूपनित्यसंबंधं परिकल्प्य अनवस्थादिदोषपरिहारार्थं तस्य स्वनिर्वाहकता स्वीकृता । तथा च समवायपक्षापेक्षया नाधिको लाभ इति चेन्न परैर्धटं तद्भिन्नं रूपं तदन्यं सामानाधिकरण्यघटकं समवायरूपं संबन्धं परिकल्प्य तस्य स्वनिर्वाहकत्वमभ्युपेयते इति महागौरवम् । अस्माभिस्तु न पदार्थत्रयकल्पनं कृतम् । किंतु एकमेव धर्मधर्मिस्वनिर्वाहकाविशेषस्वरूपमेव । अतो न कल्पनासाम्यम् । ननु सत्यप्यभेदे घटस्तद्रूपं विशेष इति त्रयस्य अङ्गीकारात् गौरवसाम्यमेव इति चेन्न वस्तुस्वरूपमेव यावत्स्वगतभेदकार्यनिर्वाहकविशेषस्वभावमिति एकस्मिन्नेव गुणगुण्यादिव्यवहारः न तु धर्मधर्म्यन्यतया समवाय इव विशेषोऽन्यः । तथा हि एकमेव वस्तु रूपवत्वादिविशेषवेषेण धर्म इति तदाश्रयलक्षणविशेषवेषेण धर्मीति व्यवह्रियते । रूपरूपिविशेषाणां च वस्तुस्वभावत्वेन पदार्थान्तरत्वाभावात् न गौरवम् । सत्यप्यभेदे स्वनिर्वाहकविशेषरूपबलात् रूपस्य धर्मत्वं रूपिणः धर्मित्वं रूपस्य आधेयत्वं घटस्य आधारत्वं विशेषस्य विशेषत्वं धर्मधर्मिणोर्विशेषित्वं स्वस्यैव निर्वाह्यत्वं निर्वाहकत्वमित्यादि सर्वं युज्यते । तथा चोक्तं तत्त्वप्रदीपिकायां " तस्माद्गुणगुणिनोर्भेदं कल्पयित्वा तदनवस्थापरिहारार्थं तस्य स्वनिर्वाहकत्वकल्पनाद् वरमेकस्य द्रव्यस्य गुणादिविशेषरूपेणैव स्वनिर्वाहकत्वमिति द्रव्यमेव स्वकार्यगुणक्रियादिरूपं स्वनिर्वाहकमिति च । ... " इति ।

## महावाक्यानामखण्डार्थपरत्वभङ्गः ।

अद्वैतिनस्त्वाहुः अखण्डार्थे ब्रह्मणि वेदवेदान्तानां समन्वयः । तथा हि द्विविधं शास्त्रवाक्यम् । एकं पदार्थनिष्ठमपरं वाक्यार्थनिष्ठम् । तत्र '**सत्य ज्ञान**' मित्यादि पदार्थनिष्ठम् '**तत्त्वमसी**' त्यादि वाक्यार्थनिष्ठम् । एवमादिवाक्यं वैदिकम् । '**प्रकृष्टप्रकाशश्चन्द्र**' इति पदार्थनिष्ठम् । '**सोऽयं देवदत्त**' इत्यादि वाक्यार्थनिष्ठम् । एवमादि वाक्यं लौकिकम् । इदमखण्डार्थकत्वं च चित्सुखाचार्योक्तदिशा संसर्गानवगाहियथार्थज्ञानजनकत्वं वा एकप्रातिपदिकार्थमात्रपर्यवसायित्वं वा । तथा चोक्तम् । 'संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम् । उक्ताऽखण्डार्थता यद्वा तत्प्रातिपदिकार्थता' इति । महावाक्यानामखण्डार्थकत्वं च उपक्रमादिलिङ्गैर्निश्चीयते । तथा च छान्दोग्ये 'सदेव सोम्येदमग्र आसीत्' इत्युपक्रमगतवाक्यं सजातीय-विजातीय-स्वगतभेदशून्यविषयकम् । "ऐतदात्म्यमिदं सर्व' मित्युपसंहारोऽपि तत्पर एव । इदमुपक्रमोपसंहारैकरूप्यं तात्पर्यनिर्णये लिङ्गम् । तथा 'तत्त्वमसी' ति नवकृत्वोऽभ्यासः । निःशेषविशेषशून्यस्य ब्रह्मणो मानान्तराविषयत्वात् अपूर्वता "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" इति फलम् । "अनेन जीवेन आत्मना अनुप्रविश्य नामरूपे व्याकरवाणि" इति अद्वितीयब्रह्मज्ञानार्थः अर्थवादः । मृदादिदृष्टान्तैः स्वोपादानातिरिक्तं कार्यं नास्तीति उपपत्तिः । एवमुपक्रमादिलिङ्गषट्केन लक्षणया महावाक्यानामखण्डार्थ तात्पर्यमवगम्यते । न च सर्वपदलक्षणा कुत्राप्यदृष्टचरेति वाच्यम् । अर्थवादघटकानां सर्वेषां पदानां लक्षणया स्तुतिमात्रपरत्वस्य अवश्यमङ्गीकर्तव्यत्वात् । तथा प्रकृतेप्यदोषात् ।

संसर्गानवगाहियथार्थज्ञानजनकत्वं च संसर्गाविषयकशाब्दप्रमाजनकत्वम् । तच्च अतिव्याप्त्यादिलक्षणदोषदुष्टत्वादयुक्तम् । तथा हि आद्ये लक्षणे विषं भुङ्क्ष्वेति वाक्ये अतिव्याप्तिः । तस्य द्विषदन्नं न भोक्तव्यमित्येतदर्थाविषयकत्वात् । न च तत्रापि अनिष्टसाधनत्वसंसर्गः पदवृत्त्या स्मारितो बोध्यते इति वाच्यम् । अनिष्टत्वस्य भोजने अनुमानादिना गम्यत्वे तत्संसर्गस्य तत्र शाब्दत्वाभावात् । न च प्रतिपिपादयिषितपदार्थसंसर्गाप्रमापकत्वं विवक्षितमितिवाच्यम् । चन्द्रब्रह्मादिशब्दार्थानां स्वरूपतो ज्ञातत्वेन अप्रतिपिपादयिषितत्वात् संसर्गप्रतियोगित्वेनैव प्रतिपिपादयिषितत्वात् तत्रासंभवात् । द्वितीये लक्षणेऽपि 'शीतोष्णस्पर्शवन्तौ पयःपावकौ' इत्याद्यनेकप्रातिपदिकार्थमात्रपरे अतिव्याप्तिः । न हि धर्मधर्मिभावासह-

